# ATHARVA-VEDA SAṀHITĀ

# अथर्ववेद संहिता

with
English Translation
by

Svami Satya Prakash Sarasvati

## Vol. 3
## Kāṇḍa VII-X



## तृतीयो भागः
## काण्ड ७-१०



**Veda Pratishthana**
**Arya Samaj Mandir Marg,**
**New Delhi - 110 001**

**Atharva - Veda, Vol. III**

Publishers:
Veda Pratishthana,
Arya Samaj, Mandir Marg,
New Delhi - 110001 (India).

Distributors :

1. **Veda Pratishthana**
   Arya Samaj, Mandir Marg
   New Delhi - 1.

2. **D.A.V. College Committee Office**
   Chitra Gupta Road
   New Delhi - 110055.

3. **M/s Govindram Hasanand**
   4408 Nai-Sarak, Delhi - 110006.

4. **Dayanand Veda Peeth**
   1E/6 Svami Ram Tirth Nagar
   New Delhi - 110055.

5. **M/s S.Chand and Co. Ltd.**
   Ram Nagar, New Delhi - 110055.

6. **M/s Surya Trading Corporation**
   3, Jauhari Tola, Allahabad.

7. **Vijnana Parishad**
   Maharshi Dayanand Marg
   Allahabad - 211002.

Printers :
Surya Trading Corporation
3, Jauhari Tola, Allahabad.
Phones :- 51165, 603684

# Contents

## Preface

The history of the Veda Pratishthana takes us back to 1973. Padma Bhushan Col. Veda Ratan Mohan, the son of Sri Narendra Mohan of the distinguished Narendra Mohan Foundations died on July 28, 1973 at an unripe age of 53, and according to the family traditions there was held a Shanti Ceremony at the residence of the deceased. At this ceremony, Pandit Prakash Vir Shastry was also present.

Sri Shastry casually asked Sri Narendra Mohan, what it was that prompted the elders of the family to name this infant of theirs as Veda Ratan Mohan - evidently the name indicates a unique regard of the family to the sanctity of and reverence to the Vedas, the most ancient book of man's library.

During this conversation, Sri Prakash Vir Shastry suggested to the members of the family to undertake and subsidize some project to popularize the Vedic teachings. On behalf of the Narendra Mohan Foundations, Major Sri Kapil Mohan, the younger brother of the late Veda Ratan Mohan agreed to finance munificently this venture, and it was unanimously agreed upon to present to the public standard English translations of all the four Vedas. This is, in short, the history of the foundation of the Veda Pratishthana. Dr. Govardhan Lal Dutta, a distinguished educationist and head of the Veda Pratishthana requested Svami Satya Prakash, to undertake the Chief Editorship of the publication project and appointed Pt. Satyakam Vidyalankar to assist Svami Ji in this work. The work started immediately and the work of editing, translating and publishing the entire Ṛg-veda into thirteen decent volumes could be finished in a period of full ten years (1977-1987). These thirteen volumes cover 4938 pages.

After the sad death of Sri Prakash Vir Shastry (born 1923, died Nov. 23, 1977 in a tragic railway accident) and also of Dr. Govardhan Lal Dutta, the Veda Pratishthana has been fortunate to have Dr. L.M. Singhvi as its President. These days he has gone on his new assignment to the United Kingdom to serve as the High Commissioner for India.

The Veda Pratishthana took up the English Translations of the Yajur-veda and Sāma-veda. Sri Udai Vir Viraj assisted Svami Satya Prakash in the Yajur-veda and Pandit Satyakam Vidyalankar in the translation of the Sāma-veda, but on account of certain difficulties in their printing, we shall yet take some time in presenting them to our public. We regret to announce the death of Pandit Satya Kam Vidyalankar and Sri Ram Saran Das Ahuja. Selfless devotion of Mr. Ahuja to the Pratishthana has been a matter of pride to all of us.

Svami Satya Prakash is also now 86 years old and feeble. He has left Delhi for his cottage Ṛtambhara at the Vijñana Parishad, Allahabad. The English Translation of the Atharva-veda in several books has been assisted by Sri Udayavir Viraj, a distinguished graduate of Gurukul Kangri and the printing of the Atharva-veda has been entrusted to M/s Surya Trading Corporation whose singular devotion to this work could make the entire printing possible in such a short time. We are highly indebted to Dr. Vimalesh, the Ex-Principal D.A.V. College, Allahabad for his critical and excellent assistance in this publication and to Shri Chandra Bhan Singh for the excellent typing work.

**R.N. Sehgal**
The Veda Pratishthana
Arya Samaj, Mandir Marg
New Delhi - 110001

# अथ सप्तमं काण्डम् ॥

( १ ) प्रथमं सूक्तम्

(१-२) द्वयृचस्यास्य सूक्तस्याथर्वा ऋषिः । आत्मा देवता । (१) प्रथमर्चस्त्रिष्टुप्, (२) द्वितीयायाश्च विराड्जगती छन्दसी ॥

धीती वा ये अनयन्वाचो अग्रं मनसा वा येऽवदन्नृतानि ।
तृतीयेन ब्रह्मणा वावृधानास्तुरीयेणामन्वत नाम धेनोः ॥१॥
स वेद पुत्रः पितरं स मातरं स सूनुर्भुवत्स भुवत्पुनर्मघः ।
स द्यामौर्णोदन्तरिक्षं स्वः स इदं विश्वमभवत्स आभवत् ॥२॥

धीती । वा । ये । अनयन् । वाचः । अग्रम् । मनसा । वा । ये । अवदन् । ऋतानि ।
तृतीयेन । ब्रह्मणा । ववृधानाः । तुरीयेण । अमन्वत । नाम । धेनोः ॥ १ ॥
सः । वेद । पुत्रः । पितरम् । सः । मातरम् । सः । सूनुः । भुवत् । सः । भुवत् । पुनःऽमघः ।
सः । द्याम् । और्णोत् । अन्तरिक्षम् । स्वः । सः । इदम् । विश्वम् । अभवत् । सः । आ ।
अभवत् ॥ २ ॥

( २ ) द्वितीयं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । आत्मा देवता । त्रिष्टुप् छन्दः ॥

अथर्वाणं पितरं देवबन्धुं मातुर्गर्भं पितुरसुं युवानम् ।
य इमं यज्ञं मनसा चिकेत प्र णो वोचस्तमिहेह ब्रवः ॥१॥

अथर्वाणम् । पितरम् । देवऽबन्धुम् । मातुः । गर्भम् । पितुः । असुम् । युवानम् ।
यः । इमम् । यज्ञम् । मनसा । चिकेत । प्र । नः । वोचः । तम् । इह । इह । ब्रवः ॥ १ ॥

## Ātman

**VII.1.1** They, who meditate upon the principal source of speech (i.e., the Lord supreme), or who proclaim eternal truths with their mind, waxing great with the third state of knowledge, utter the name of supreme Lord (dhenu: bestower of desired things like a milch cow) in their fourth state of realization.

**VII.1.2** He, the son, knows the father; He (knows) the mother; He becomes the impeller (sūnuḥ), He becomes the bounteous replenisher. He envelopes the sky, the midspace and the world of bliss. He becomes all this (universe). He exists every where all around.

## Ātman

**VII.2.1** Whoever has realized with his mind the immutable supreme Lord (atharvan), the father, the friend of the enlightened ones, the womb of the mother, the germ of the father, the youthful, (and) this very sacrifice, let him proclaim to us; let him explain that here now.

( ३ ) तृतीयं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । आत्मा देवता । त्रिष्टुप् छन्दः ॥

अया विष्ठा जनयन्कर्वराणि स हि घृणिरुरुर्वराय गातुः ।
स प्रत्युदैद्धरुणं मध्वो अग्रं स्वया तन्वा तन्वमैरयत ॥१॥

अया । विऽस्था । जनयन् । कर्वराणि । सः । हि । घृणिः । उरुः । वराय । गातुः ।
सः । प्रतिऽउदैत् । धरुणम् । मध्वः । अग्रम् । स्वया । तन्वा । तन्वम् । ऐरयत ॥ १ ॥

( ४ ) चतुर्थं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । वायुर्देवता । त्रिष्टुप् छन्दः ॥

एकया च दशभिश्चा सुहुते द्वाभ्यामिष्टये विंशत्या च ।
तिसृभिश्च वहसे त्रिंशता च वियुग्भिर्वाय इह ता वि मुञ्च ॥१॥

एकया । च । दशऽभिः । च । सुऽहुते । द्वाभ्याम् । इष्टये । विंशत्या । च ।
तिसृऽभिः । च । वहसे । त्रिंशता । च । वियुक्ऽभिः । वायो इति । इह । ताः । वि । मुञ्च ॥ १ ॥

( ५ ) पञ्चमं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्याथर्वा ऋषिः । आत्मा देवता । (१-२, ५) प्रथमाद्वितीयापञ्चमीनामृचां त्रिष्टुप्, (३) तृतीयायाः पङ्क्तिः, (४) चतुर्थ्याश्चानुष्टुप् छन्दांसि ॥

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥१॥
यज्ञो बभूव स आ बभूव स प्र जज्ञे स उ वावृधे पुनः ।
स देवानामधिपतिर्बभूव सो अस्मासु द्रविणमा दधातु ॥२॥
यद्देवा देवान्हविषायजन्तामर्त्यान्मनसामर्त्येन ।
मदेम तत्र परमे व्योमन्पश्येम तदुदितौ सूर्यस्य ॥३॥

यज्ञेन । यज्ञम् । अयजन्त । देवाः । तानि । धर्माणि । प्रथमानि । आसन् ।
ते । ह । नाकम् । महिमानः । सचन्त । यत्र । पूर्वे । साध्याः । सन्ति । देवाः ॥ १ ॥
यज्ञः । बभूव । सः । आ । बभूव । सः । प्र । जज्ञे । सः । ऊँ इति । ववृधे । पुनः ।
सः । देवानाम् । अधिपतिः । बभूव । सः । अस्मासु । द्रविणम् । आ । दधातु ॥ २ ॥
यत् । देवाः । देवान् । हविषा । अयजन्त । अमर्त्यान् । मनसा । अमर्त्येन ।
मदेम ! तत्र । परमे । विऽओमन् । पश्येम । तत् । उत्ऽइतौ । सूर्यस्य ॥ ३ ॥

## Ātman

**VII.3.1** In this way, he, the self existing in multitudinous forms, generally the activities, glowing with fervour, moving towards great welfare, he ascends to the sustaining apex of the sweetness. With his self, he urges forth the universal self.

## Vāyu

**VII.4.1** O omnipresent Lord, you are carried to the sacrifice of good offerings for fulfilling desires by your one and ten, by two and twenty, and by three and thirty well-deployed capabilities. May you release them here.

## Ātman

**VII.5.1** The nature's bounties (gods) glorify the sacrifice with sacrifice, for such are their duties, those righteous ones, verily, attain the highest glory attained by the wise persons of yore. (Also Ṛg I.164.50)

**VII.5.2** The Lord of creatures (sacrifice) came into being. He came to be here all around. He was born; and again He grew in vigour. He became the over-lord of the bounties of Nature. May He bestow riches on us in abundance.

**VII.5.3** With what desire the enlightened ones have worshipped the immortal bounties of nature with immortal spiritual offerings. May we revel there in the highest heaven and see that (desire fulfilled) as long as the Sun rises.

यत्पुरुषेण हविषा यज्ञं देवा अतन्वत ।
अस्ति नु तस्मादोजीयो यद्विहव्येनेजिरे ॥४॥
मुग्धा देवा उत शुनायजन्तोत गोरङ्गैः पुरुधायजन्त ।
य इमं यज्ञं मनसा चिकेत प्र णो वोचस्तमिहेह ब्रवः ॥५॥

यत् । पुरुषेण । हविषा । यज्ञम् । देवाः । अतन्वत ।
अस्ति । नु । तस्मात् । ओजीयः । यत् । विऽहव्येन । ईजिरे ॥४ ॥
मुग्धाः । देवाः । उत । शुना । अयजन्त । उत । गोः । अङ्गैः । पुरुऽधा । अयजन्त ।
यः । इमम् । यज्ञम् । मनसा । चिकेत । प्र । नः । वोचः । तम् । इह । इह । ब्रवः ॥ ५ ॥

( ६ ) षष्ठं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । अदितिर्देवता । (१) प्रथमर्चस्त्रिष्टुप् , (२) द्वितीयायाश्च भुरिक्त्रिष्टुप् छन्दसी ॥

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥१॥
महीमू षु मातरं सुव्रतानामृतस्य पत्नीमवसे हवामहे ।
तुविक्षत्रामजरन्तीमुरूचीं सुशर्माणमदितिं सुप्रणीतिम् ॥२॥

अदितिः । द्यौः । अदितिः । अन्तरिक्षम् । अदितिः । माता । सः । पिता । सः । पुत्रः ।
विश्वे । देवाः । अदितिः । पञ्च । जनाः । अदितिः । जातम् । अदितिः । जनित्वम् ॥ १ ॥
महीम् । ऊं इति । सु । मातरम् । सुऽव्रतानाम् । ऋतस्य । पत्नीम् । अवसे । हवामहे ।
तुविऽक्षत्राम् । अजरन्तीम् । उरूचीम् । सुऽशर्माणम् । अदितिम् । सुऽप्रनीतिम् ॥ २ ॥

( ७ ) सप्तमं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । अदितिर्देवता । विराड्जगती छन्दः ॥

सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम् ।
दैवीं नावं स्वरित्रामनागसो अस्रवन्तीमा रुहेमा स्वस्तये ॥१॥

सुऽत्रामाणम् । पृथिवीम् । द्याम् । अनेहसम् । सुऽशर्माणम् । अदितिम् । सुऽप्रनीतिम् ।
दैवीम् । नावम् । सुऽअरित्राम् । अनागसः । अस्रवन्तीम् । आ । रुहेम । स्वस्तये ॥ १ ॥

**VII.5.4** What sacrifice the enlightened ones perform with the human offerings - even more potent than that is the sacrifice, which is performed with out any (material) offerings (vihavyena).

**VII.5.5** Soma confused sacrificers offer as an oblation a dog, or some parts of a cow; they offer oblations of various sorts. Let him, who knows how to perform this sacrifice with the spirit, proclaim to us; let him explain that here and now.

## Aditiḥ (Eternity)

**VII.6.1** Eternity is sky, eternity is mid-air, eternity is mother and father, and son. Eternity is all the gods; eternity is the penta-classified men; eternity is all that has been born and shall be born.

**VII.6.2** We invoke for protection the creative power (aditi), the mother of good actions, the sustainer of eternal law, full of great dominating power, never-exhausting, spreading far and wide, full of comforts and conducting wisely.

**VII.7.1** For our weal, may the sinless, embark upon the divine boat, the creative power (aditi) fitted with good oars, unleaking, well-protecting like earth, unblemished like sky, full of comforts, and conducting wisely. (Also Ṛg. X.63.10)

**वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे ।**
**यस्या उपस्थ उर्वन्तरिक्षं सा नः शर्म त्रिवरूथं नि यच्छात् ॥२॥**

वाजस्य । नु । प्रऽसवे । मातरम् । महीम् । अदितिम् । नाम । वचसा । करामहे ।
यस्याः । उपऽस्थः । उरु । अन्तरिक्षम् । सा । नः । शर्म । त्रिऽवरूथम् । नि । यच्छात् ॥२॥

( ८ ) अष्टमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । अदितिर्देवता । आर्षी जगती छन्दः ॥

**दितेः पुत्राणामदितेरकारिषमव देवानां बृहतामनर्मणाम् ।**
**तेषां हि धाम गभिषक्समुद्रियं नैनान्नमसा परो अस्ति कश्चन ॥१॥**

दितेः । पुत्राणाम् । अदितेः । अकारिषम् । अव । देवानाम् । बृहताम् । अनर्मणाम् ।
तेषाम् । हि । धाम । गभिऽसक् । समुद्रियम् । न । एनान् । नमसा । परः । अस्ति । कः । चन ॥१॥

( ९ ) नवमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्योपरिबभ्रव ऋषिः । बृहस्पतिर्देवता । त्रिष्टुप् छन्दः ॥

**भद्रादधि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्तु ।**
**अथेममस्या वर आ पृथिव्या आरेशत्रुं कृणुहि सर्ववीरम् ॥१॥**

भद्रात् । अधि । श्रेयः । प्र । इहि । बृहस्पतिः । पुरःऽएता । ते । अस्तु ।
अथ । इमम् । अस्याः । वरे । आ । पृथिव्याः । आरेऽशत्रुम् । कृणुहि । सर्वऽवीरम् ॥१॥

( १० ) दशमं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्योपरिबभ्रव ऋषिः । पूषा देवता । (१-२) प्रथमाद्वितीययोर्ऋचोस्त्रिष्टुप्,
(३) तृतीयायास्त्रिपदार्षी गायत्री, (४) चतुर्थ्याश्चानुष्टुप् छन्दांसि ॥

**प्रपथे पथामजनिष्ट पूषा प्रपथे दिवः प्रपथे पृथिव्याः ।**
**उभे अभि प्रियतमे सधस्थे आ च परा च चरति प्रजानन् ॥१॥**

प्रऽपथे । पथाम् । अजनिष्ट । पूषा । प्रऽपथे । दिवः । प्रऽपथे । पृथिव्याः । उभे इति ।
अभि । प्रियऽतमे इति प्रियऽतमे । सधऽस्थे इति सधऽस्थे । आ । च । परा । च ।
चरति । प्रऽजानन् ॥ १ ॥

**VII.7.2** In the pursuit of strength, we praise the great mother, the creative power (aditi) by her name, in whose lap lies the cast midspace. May she grant us three-dimensional happiness.

### Aditiḥ

**VII.8.1** I invoke the aid of the sons of toil (diti) and of the sons of the creative power (aditi), the enlightened ones, the great and invulnerable. Their domain is in the deep seas. No one excels them as being worthy of homage.

### Bṛhaspatiḥ

**VII.9.1** From good, may you move forward to the better. May the Lord supreme be your leader and guide. O Lord, may you establish this (sacrificer) in the finest place on this earth; make him far from enemies and having all the brave heroes around him.

### Pūṣan

**VII.10.1** The nourisher Lord (Sun) appears on the distant paths of paths, on the distant path of the sky, on the distant path of the earth. Both of them are his most pleasing abodes. He travels to and from those (abodes) with full knowledge (prajānan). (Also Ṛg. X.17.6)

पूषेमा आशा अनु वेद सर्वाः सो अस्माँ अभयतमेन नेषत् ।
स्वस्तिदा आघृणिः सर्ववीरोऽप्रयुच्छन्पुर एतु प्रजानन् ॥२॥
पूषन्तव व्रते वयं न रिष्येम कदा चन । स्तोतारस्त इह स्मसि ॥३॥
परि पूषा परस्ताद्धस्तं दधातु दक्षिणम् । पुनर्नो नष्टमाजतु सं नष्टेन गमेमहि ॥४॥

पूषा । इमाः । आशाः । अनु । वेद । सर्वाः । सः । अस्मान् । अभयऽतमेन । नेषत् ।
स्वस्तिऽदाः । आघृणिः । सर्वऽवीरः । अप्रऽयुच्छन् । पुरः । एतु । प्रऽजानन् ॥ २ ॥
पूषन् । तव । व्रते । वयम् । न । रिष्येम । कदा । चन । स्तोतारः । ते । इह । स्मसि ॥
परि । पूषा । परस्तात् । हस्तम् । दधातु । दक्षिणम् ।
पुनः । नः । नष्टम् । आ । अजतु । सम् । नष्टेन । गमेमहि ॥ ४ ॥

( ११ ) एकादशं सूक्तम्
(१) एकर्चस्यास्य सूक्तस्य शौनक ऋषिः । सरस्वती देवता । त्रिष्टुप् छन्दः ॥

यस्ते स्तनः शशयुर्यो मयोभूर्यः सुम्नयुः सुहवो यः सुदत्रः ।
येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवे कः ॥१॥

यः । ते । स्तनः । शशयुः । यः । मयःऽभूः । यः । सुम्नऽयुः । सुऽहवः । यः । सुऽदत्रः ।
येन । विश्वा । पुष्यसि । वार्याणि । सरस्वति । तम् । इह । धातवे । कः ॥ १ ॥

( १२ ) द्वादशं सूक्तम्
(१) एकर्चस्यास्य सूक्तस्य शौनक ऋषिः । सरस्वती देवता । त्रिष्टुप् छन्दः ॥

यस्ते पृथु स्तनयित्नुर्य ऋष्वो दैवः केतुर्विश्वमाभूषतीदम् ।
मा नो वधीर्विद्युता देव सस्यं मोत वधी रश्मिभिः सूर्यस्य ॥१॥

यः । ते । पृथुः । स्तनयित्नुः । यः । ऋष्वः । दैवः । केतुः । विश्वम् । आऽभूषति । इदम् ।
मा । नः । वधीः । विऽद्युता । देव । सस्यम् । मा । उत । वधीः । रश्मिऽभिः । सूर्यस्य ॥१॥

**VII.10.2** The nourisher Lord knows all these regions well. May He conduct us by the safest path (which is free from fear). May He, the bestower of weal, glowing, brave in every respect, never negligent and knowing everything, go before us and lead. (Also Ṛg. X.17.5)

**VII.10.3** O Lord, the nourisher, may we never suffer detriment when engaged in your worship; we are here to sing your praise. (Also Ṛg. VI.54.9)

**VII.10.4** May the nourisher stretch His right hand to restrain our cattle from going astray; may He bring again to us what has been lost. May we be united with what has been lost. (Also Ṛg. VI.54.10).

### Sarasvatī

**VII.11.1** O divine mother (Sarvasvatī or speech), that ever-full breast (with inexhaustive vocabulary of yours), which lies hidden, which is the source of delight, bestower of joy, easy to invoke and liberal in giving, with which you nourish all the desirable ones, that may you lay open now for our sustenance. (Also Ṛg. X.164.49)

### Sarasvatī

**VII.12.1** That wide-spread and thundering, that smiting divine ensign of yours, which makes all the things beautiful - O Lord, may you not kill our crop with lightning, nor kill (it) with the rays of the sun.

( १३ ) त्रयोदशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य शौनक ऋषिः । (१) प्रथमर्चः सभासमिती पितरो वा, (२) द्वितीयस्याः सभा, (३) तृतीयाया इन्द्रः, (४) चतुर्थ्याश्च मन्त्रोक्ता देवताः । (१) प्रथमाया भुरिक्त्रिष्टुप्, (२-४) द्वितीयादितृचस्य चानुष्टुप् छन्दसी ॥

सभा च मा समितिश्चावतां प्रजापतेर्दुहितरौ संविदाने ।
येना संगच्छा उप मा स शिक्षाच्चारु वदानि पितरः संगतेषु ॥१॥
विद्म ते सभे नाम नरिष्टा नाम वा असि ।
ये ते के च सभासदस्ते मे सन्तु सवाचसः ॥२॥
एषामहं समासीनानां वर्चो विज्ञानमा ददे ।
अस्याः सर्वस्याः संसदो मामिन्द्र भगिनं कृणु ॥३॥
यद्वो मनः परागतं यद्बद्धमिह वेह वा ।
तद्व आ वर्तयामसि मयि वो रमतां मनः ॥४॥

सभा । च । मा । सम्ऽइतिः । च । अवताम् । प्रजाऽपतेः । दुहितरौ । संविदाने इति सम्ऽविदाने ।
येन । सम्ऽगच्छै । उप । मा । सः । शिक्षात् । चारु । वदानि । पितरः । सम्ऽगतेषु ॥ १ ॥
विद्म । ते । सभे । नाम । नरिष्टा । नाम । वै । असि ।
ये । ते । के । च । सभाऽसदः । ते । मे । सन्तु । सऽवाचसः ॥ २ ॥
एषाम् । अहम् । सम्ऽआसीनानाम् । वर्चः । विऽज्ञानम् । आ । ददे ।
अस्याः । सर्वस्याः । सम्ऽसदः । माम् । इन्द्र । भगिनम् । कृणु ॥ ३ ॥
यत् । वः । मनः । पराऽगतम् । यत् । बद्धम् । इह । वा । इह । वा ।
तत् । वः । आ । वर्तयामसि । मयि । वः । रमताम् । मनः ॥ ४ ॥

( १४ ) चतुर्दशं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । सूर्यो देवता । अनुष्टुप् छन्दः ॥

यथा सूर्यो नक्षत्राणामुद्यंस्तेजांस्याददे ।
एवा स्त्रीणां च पुंसां च द्विषतां वर्च आ ददे ॥१॥

यथा । सूर्यः । नक्षत्राणाम् । उत्ऽयन् । तेजांसि । आऽददे ।
एव । स्त्रीणाम् । च । पुंसाम् । च । द्विषताम् । वर्चः । आ । ददे ॥ १ ॥

## Sabhā, Samitiḥ, Pitṛ

**VII.13.1** May the assembly of the learned and the war-council, the two daughters of the creator Lord, aid me in accord with each other. Whomsoever I meet, may he teach and guide me. May I, O elders, speak nicely at the meetings.

## Sabhā

**VII.13.2** O assembly (sabhā) of the learned, we know your name. Verily, you are not to be over-ruled. Whoever are your members, may they be of one speech with me.

## Indraḥ

**VII.13.3** The influence and discernment of those seated here, I take to myself. O resplendent Lord, May you make me acceptable to all this assembly.

## Manas (Thought)

**VII.13.4** Your thoughts, which have moved away (from me), or which are attached here or there - those thoughts of yours, I cause to turn back (to me). May your mind rejoice in me.

## Sūryaḥ

**VII.14.1** As the Sun, when rising, takes the shine out of the stars, so I take to myself the splendour of those women and men, who hage (are malicious).

यावन्तो मा सपत्नानामायन्तं प्रतिपश्यथ ।
उद्यन्त्सूर्य इव सुप्तानां द्विषतां वर्च आ ददे ॥२॥

यावन्तः । मा । सऽपत्नानाम् । आऽयन्तम् । प्रतिऽपश्यथ ।
उत्ऽयन् । सूर्यःऽइव । सुप्तानाम् । द्विषताम् । वर्चः । आ । ददे ॥ २ ॥

( १५ ) पञ्चदशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । सविता देवता । (१-२) प्रथमाद्वितीययोर्ऋचोरनुष्टुप्, (३) तृतीयायास्त्रिष्टुप्, (४) चतुर्थ्याश्च जगती छन्दांसि ॥

अभि त्यं देवं सवितारमोण्योः कविक्रतुम् ।
अर्चामि सत्यसवं रत्नधामभि प्रियं मतिम् ॥१॥
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि ।
हिरण्यपाणिरमिमीत सुक्रतुः कृपात्स्वः ॥२॥
सावीर्हि देव प्रथमाय पित्रे वर्ष्माणमस्मै वरिमाणमस्मै ।
अथास्मभ्यं सवितर्वार्याणि दिवोदिव आ सुवा भूरि पश्वः ॥३॥
दमूना देवः सविता वरेण्यो दधद्रत्नं दक्षं पितृभ्य आयूंषि ।
पिबात्सोमं ममददेनमिष्टे परिज्मा चित्क्रमते अस्य धर्मणि ॥४॥

अभि । त्यम् । देवम् । सवितारम् । ओण्योः । कविऽक्रतुम् ।
अर्चामि । सत्यऽसवम् । रत्नऽधाम् । अभि । प्रियम् । मतिम् ॥१॥
ऊर्ध्वा । यस्य । अमतिः । भाः । अदिद्युतत् । सवीमनि ।
हिरण्यऽपाणिः । अमिमीत । सुक्रतुः । कृपात् । स्वः ॥ २ ॥
सावीः । हि । देव । प्रथमाय । पित्रे । वर्ष्माणम् । अस्मै । वरिमाणम् । अस्मै ।
अथ । अस्मभ्यम् । सवितः । वार्याणि । दिवःऽदिवः । आ । सुव । भूरि । पश्वः ॥ ३ ॥
दमूनाः । देवः । सविता । वरेण्यः । दधत् । रत्नम् । दक्षम् । पितृऽभ्यः । आयूंषि ।
पिबात् । सोमम् । ममदत् । एनम् । इष्टे । परिऽज्मा । चित् । क्रमते । अस्य । धर्मणि ॥

**VII.14.2** As many of you, O rivals, look at you-the splendour of them, the hateful, I take to myself, just as the Sun, when rising, takes away the splendour of those who lie asleep.

## Savitṛ

**VII.15.1** I fervently adore that Lord, who is impeller (savitā) of heaven and earth, full of vision and action, guide to truth, bestower of jewels, dear to all, and (is) the wisdom incarnate.

**VII.15.2** Whose immeasurable glow rises upwards, and shines in His creation (impulsion) - He, the golden-handed (hiraṇya-pāṇi) and skilled in selfless deeds, fashions the world of bliss (for us).

**VII.15.3** O Lord, you have granted this foremost of the elders, a high place for him, a wise expense for him; now, O impeller Lord (savitā); may you grant all sorts of desirable things, abundance of cattle to us day in and day out. (divo-divaḥ)

**VII.15.4** The impeller Lord, inclined to bestowing, the desirable Lord, has blessed our elders with treasures, skill and long spans of life. May He drink the devotional bliss (Soma) and be exhilarated at this sacrifice. Under His law (dharmaṇi) the travellers go all around.

( १६ ) षोडशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य भृगुर्ऋषिः । सविता देवता । त्रिष्टुप् छन्दः ॥

तां सवितः सत्यसवां सुचित्रामाहं वृणे सुमतिं विश्ववाराम् ।
यामस्य कण्वो अदुहत्प्रपीनां सहस्रधारां महिषो भगाय ॥१॥

ताम् । सवितः । सत्यऽसवाम् । सुऽचित्राम् । आ । अहम् । वृणे । सुऽमतिम् । विश्वऽवाराम् ।
याम् । अस्य । कण्वः । अदुहत् । प्रऽपीनाम् । सहस्रऽधाराम् । महिषः । भगाय ॥ १ ॥

( १७ ) सप्तदशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य भृगुर्ऋषिः । सविता देवता । त्रिष्टुप् छन्दः ॥

बृहस्पते सवितर्वर्धयैनं ज्योतयैनं महते सौभगाय ।
संशितं चित्संतरं सं शिशाधि विश्व एनमनु मदन्तु देवाः ॥१॥

बृहस्पते । सवितः । वर्धय । एनम् । ज्योतय । एनम् । महते । सौभगाय ।
सम्ऽशितम् । चित् । सम्ऽतरम् । सम् । शिशाधि । विश्वे । एनम् । अनु । मदन्तु । देवाः ॥

( १८ ) अष्टादशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य भृगुर्ऋषिः । सविता मन्त्रोक्ता वा देवताः । (१) प्रथमर्चस्त्रिपदार्षी गायत्री, (२) द्वितीयाया अनुष्टुप्, (३-४) तृतीयाचतुर्थ्योश्च त्रिष्टुप् छन्दांसि ॥

धाता दधातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन यच्छतु ॥१॥

धाता दधातु दाशुषे प्राचीं जीवातुमक्षिताम् ।
वयं देवस्य धीमहि सुमतिं विश्वराधसः ॥२॥

धाता विश्वा वार्या दधातु प्रजाकामाय दाशुषे दुरोणे ।
तस्मै देवा अमृतं सं व्ययन्तु विश्वे देवा अदितिः सजोषाः ॥३॥

धाता । दधातु । नः । रयिम् । ईशानः । जगतः । पतिः । सः । नः । पूर्णेन । यच्छतु ॥

धाता । दधातु । दाशुषे । प्राचीम् । जीवातुम् । अक्षिताम् ।
वयम् । देवस्य । धीमहि । सुऽमतिम् । विश्वऽराधसः ॥ २ ॥

धाता । विश्वा । वार्या । दधातु । प्रजाऽकामाय । दाशुषे । दुरोणे ।
तस्मै । देवाः । अमृतम् । सम् । व्ययन्तु । विश्वे । देवाः । अदितिः । सऽजोषाः ॥ ३ ॥

## Savitṛ

**VII.16.1** I solicit in every way that impeller Lord's good grace, urging towards truth (satyasavā), really wonderful and preferred by all, which (of that impeller Lord) well-developed and thousand-streamed (sahasra-dhārām) grace the mighty realized soul milks for good fortune (bhagāya).

## Savitṛ (Impeller)

**VII.17.1** O Lord supreme, O impeller Lord, may you make him grow, and shine into great all round prosperity. Sharpen him, already sharp, even sharper. May all the enlightened ones revel in his happiness.

## Dhātṛ etc. (Ordainer)

**VII.18.1** May the ordainer Lord, the sovereign ruler, the Lord of the living, grant us riches. May He bless us with the full.

**VII.18.2** May the Ordainer Lord assign to the sacrificer an ever-flourishing and never-exhausting life. May we receive the friendly grace of the Lord, who has all the riches (viśva rādha saḥ)

**VII.18.3** May the ordainer (sustainer) Lord, grant all the desirable things to him, who desirous of progeny, performs sacrifice at his home. May the enlightened ones, and all the bounties of Nature, in accord with the creative power (aditi), bless him with immortality (amṛtam).

धाता रातिः सवितेदं जुषन्तां प्रजापतिर्निधिपतिर्नो अग्निः ।
त्वष्टा विष्णुः प्रजया संरराणो यजमानाय द्रविणं दधातु ॥४॥

धाता । रातिः । सविता । इदम् । जुषन्ताम् । प्रजाऽपतिः । निधिऽपतिः । नः । अग्निः ।
त्वष्टा । विष्णुः । प्रऽजया । सम्ऽरराणः । यजमानाय । द्रविणम् । दधातु ॥ ४ ॥

( १९ ) एकोनविंशं सूक्तम्
(१-२) द्वयृचस्यास्य सूक्तस्याथर्वा ऋषिः । पर्जन्यः पृथिवी वा देवता । (१) प्रथमर्चश्चतुष्पदा भुरिगुष्णिक् , (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी ॥

प्र नभस्व पृथिवि भिन्द्धी३दं दिव्यं नभः ।
उद्नो दिव्यस्य नो धातरीशानो वि ष्या दृतिम् ॥१॥
न घ्रंस्तताप न हिमो जघान प्र नभतां पृथिवी जीरदानुः ।
आपश्चिदस्मै घृतमित्क्षरन्ति यत्र सोमः सदमित्तत्र भद्रम् ॥२॥

प्र । नभस्व । पृथिवि । भिन्द्धि । इदम् । दिव्यम् । नभः ।
उद्नः । दिव्यस्य । नः । धातः । ईशानः । वि । स्य । दृतिम् ॥ १ ॥
न । घ्रन् । तताप । न । हिमः । जघान । प्र । नभताम् । पृथिवी । जीरऽदानुः ।
आपः । चित् । अस्मै । घृतम् । इत् । क्षरन्ति । यत्र । सोमः । सदम् । इत् । तत्र । भद्रम् ॥

( २० ) विंशं सूक्तम्
(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । मन्त्रोक्ता देवता । जगती छन्दः ॥

प्रजापतिर्जनयति प्रजा इमा धाता दधातु सुमनस्यमानः ।
संजानानाः संमनसः सयोनयो मयि पुष्टं पुष्टपतिर्दधातु ॥१॥

प्रजाऽपतिः । जनयति । प्रऽजाः । इमाः । धाता । दधातु । सुऽमनस्यमानः ।
सम्ऽजानानाः । सम्ऽमनसः । सऽयोनयः । मयि । पुष्टम् । पुष्टऽपतिः । दधातु ॥ १ ॥

**VII.18.4** May the ordainer (sustainer) Lord, the impeller Lord, the Lord of creatures, the Lord of treasures, the adorable Lord, accept our this offering; may the universal mechanic, the omnipresent Lord, rejoicing in His own creations, grant wealth to the sacrificer.

## Pṛthivī, Parjanyaḥ

**VII.19.1** O earth, become drenched with water. Cleave this cloud of the sky asunder. O sustainer Lord, ruling over all, may you open the leather bag (dṛti) of celestial water for us.

**VII.19.2** There the summer does not cause burning heat, there the snowy season does not smite, there the life-giving earth (pṛthivī jīradānuḥ) always remains moistened with water, and the waters (āpaḥ) produce purified butter (ghṛtam) for the sacrificer, wherever there is the herb Soma, there it is always happiness and bliss.

## Prajapatiḥ - Dhātṛ

**VII.20.1** The Lord of creatures (Prajapati), generates these offsprings. May the sustainer Lord sustain them with His friendly grace. May all these, born of the same womb, be of one mind and one understanding (sumanasya mānaḥ). May the Lord of nourishment bestow nourishment on me.

### ( २१ ) एकविंशं सूक्तम्

(१-६) षडृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । अनुमतिर्देवता । (१-२) प्रथमाद्वितीययोर्ऋचोरनुष्टुप्, (३) तृतीयायास्त्रिष्टुप्, (४) चतुर्थ्या भुरिगनुष्टुप्, (५) पञ्चम्या जगती, (६) षष्ठ्याश्चातिशाक्करगर्भा जगती छन्दांसि ॥

अन्वद्य नोऽनुमतिर्यज्ञं देवेषु मन्यताम् ।
अग्निश्च हव्यवाहनो भवतां दाशुषे मम ॥१॥
अन्विदनुमते त्वं मंससे शं च नस्कृधि ।
जुषस्व हव्यमाहुतं प्रजां देवि ररास्व नः ॥२॥
अनु मन्यतामनुमन्यमानः प्रजावन्तं रयिमक्षीयमाणम् ।
तस्य वयं हेडसि मापि भूम सुमृडीके अस्य सुमतौ स्याम ॥३॥
यत्ते नाम सुहवं सुप्रणीतेऽनुमते अनुमतं सुदानु ।
तेना नो यज्ञं पिपृहि विश्ववारे रयिं नो धेहि सुभगे सुवीरम् ॥४॥
एमं यज्ञमनुमतिर्जगाम सुक्षेत्रतायै सुवीरतायै सुजातम् ।
भद्रा ह्यस्याः प्रमतिर्बभूव सेमं यज्ञमवतु देवगोपा ॥५॥
अनुमतिः सर्वमिदं बभूव यत्तिष्ठति चरति यदु च विश्वमेजति ।
तस्यास्ते देवि सुमतौ स्यामानुमते अनु हि मंससे नः ॥६॥

अनु । अद्य । नः । अनुऽमतिः । यज्ञम् । देवेषु । मन्यताम् ।
अग्निः । च । हव्यऽवाहनः । भवताम् । दाशुषे । मम ॥ १ ॥
अनु । इत् । अनुऽमते । त्वम् । मंससे । शम् । च । नः । कृधि ।
जुषस्व । हव्यम् । आऽहुतम् । प्रऽजाम् । देवि । ररास्व । नः ॥ २ ॥
अनु । मन्यताम् । अनुऽमन्यमानः । प्रजाऽवन्तम् । रयिम् । अक्षीयमाणम् ।
तस्य । वयम् । हेडसि । मा । अपि । भूम । सुऽमृडीके । अस्य । सुऽमतौ । स्याम ॥ ३ ॥
यत् । ते । नाम । सुऽहवम् । सुऽप्रनीते । अनुऽमते । अनुऽमतम् । सुऽदानु ।
तेन । नः । यज्ञम् । पिपृहि । विश्वऽवारे । रयिम् । नः । धेहि । सुऽभगे । सुऽवीरम् ॥ ४ ॥
आ । इमम् । यज्ञम् । अनुऽमतिः । जगाम । सुऽक्षेत्रतायै । सुऽवीरतायै । सुऽजातम् ।
भद्रा । हि । अस्याः । प्रऽमतिः । बभूव । सा । इमम् । यज्ञम् । अवतु । देवऽगोपा ॥ ५ ॥
अनुऽमतिः । सर्वम् । इदम् । बभूव । यत् । तिष्ठति । चरति । यत् । ऊं इति । च । विश्वम् । एजति ।
तस्याः । ते । देवि । सुऽमतौ । स्याम । अनुऽमते । अनु । हि । मंससे । नः ॥ ६ ॥

## Anumatiḥ - assent

**VII.21.1** May the assent (of the Lord) get this sacrifice of ours approved among the enlightened one today. And may the fire divine become the conveyer of offerings for me, the sacrificer.

**VII.21.2** O ascent (of the Lord), approve (this sacrifice), and grant us peace and happiness. Accept our offered oblations; O shining one, bless us with progeny.

**VII.21.3** May He, the approving Lord, approve for us inexhaustible wealth rich in children. May we never be under His wrath. May we be under His friendly grace, that extreme happiness.

**VII.21.4** O goodly leading assent (of the Lord), what name you have got, easy to invoke, pleasing to all and liberal giver of desired objects, with that, may you bring our this sacrifice to completion. O desired by all, O bringing good fortune, may you bestow on us wealth rich in brave sons (subhage suvīram).

**VII.21.5** The assent (of the Lord) has come to this well-conceived sacrifice for making our fields rich and our sons brave. Benign has been her care for us. May she, the protector of the enlightened ones(devagopā), protect this sacrifice.

**VII.21.6** The assent (of the Lord) has ever been all this whatever stands still, or moves, and also whatever makes all move, as such, O divine assent, may we be always in your good grace; may you always accord approval to us.

( २२ ) द्वाविंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । आत्मा देवता । पराशक्करी विराड्गर्भा जगती छन्दः ॥

समेत विश्वे वचसा पतिं दिव एको विभूरतिथिर्जनानाम् ।
स पूर्व्यो नूतनमाविवासत्तं वर्तनिरनु वावृत एकमित्पुरु ॥१॥

सम्ऽएत । विश्वे । वचसा । पतिम् । दिवः । एकः । विऽभूः । अतिथिः । जनानाम् ।
सः । पूर्व्यः । नूतनम् । आऽविवासत् । तम् । वर्तनिः । अनु । ववृते । एकम् । इत् । पुरु ॥१॥

( २३ ) त्रयोविंशं सूक्तम्

(१-२) द्वयृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । मन्त्रोक्ता देवता । (१) प्रथमर्चो द्विपदैकावसाना विराड्गायत्री, (२) द्वितीयायाश्च त्रिपदानुष्टुप् छन्दसी ॥

अयं सहस्रमा नो दृशे कवीनां मतिर्ज्योतिर्विधर्मणि ॥१॥
ब्रध्नः समीचीरुषसः समैरयन् ।
अरेपसः सचेतसः स्वसरे मन्युमत्तमाश्चिते गोः ॥२॥

अयम् । सहस्रम् । आ । नः । दृशे । कवीनाम् । मतिः । ज्योतिः । विऽधर्मणि ॥ १ ॥

ब्रध्नः । समीचीः । उषसः । सम् । ऐरयन् ।
अरेपसः । सऽचेतसः । स्वसरे । मन्युमत्ऽतमाः । चिते । गोः ॥ २ ॥

( २४ ) चतुर्विंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य यम ऋषिः । दुःस्वप्ननाशनं देवता । अनुष्टुप् छन्दः ॥

दौष्वप्न्यं दौर्जीवित्यं रक्षो अभ्वमराय्यः ।
दुर्णाम्नीः सर्वा दुर्वाचस्ता अस्मन्नाशयामसि ॥१॥

दौःऽस्वप्न्यम् । दौःऽजीवित्यम् । रक्षः । अभ्वम् । अराय्यः ।
दुःऽनाम्नीः । सर्वाः । दुःऽवाचः । ताः । अस्मत् । नाशयामसि ॥ १ ॥

( २५ ) पञ्चविंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । सविता देवता । त्रिष्टुप् छन्दः ॥

यन्न इन्द्रो अखनद्यदग्निर्विश्वे देवा मरुतो यत्स्वर्काः ।
तदस्मभ्यं सविता सत्यधर्मा प्रजापतिरनुमतिर्नि यच्छात् ॥१॥

यत् । नः । इन्द्रः । अखनत् । यत् । अग्निः । विश्वे । देवाः । मरुतः । यत् । सुऽअर्काः ।
तत् । अस्मभ्यम् । सविता । सत्यऽधर्मा । प्रजाऽपतिः । अनुऽमतिः । नि । यच्छात् ॥ १ ॥

**Ātman**

**VII.22.1** Come all together with your words of praises to the Lord of the heaven, the unique, the sovereign, and the guest of the people. He, the ancient one, resides in the new ones. Numerous paths lead to Him, the one only (ekam-it).

**Liṅgoktāḥ - Bradhnaḥ**



**VII.23.1** For our vision, He (appears in a) thousand (ways). He is the genius of the visionaries, an illuminating light for various purpose.

**VII.23.2** This bright one urges forth the successive dawns, free from blemish, arousing ones, and the most zealous, for directing the sense-organs in their several actions.

**Duḥ - ṣvapna - nāśanam - Dispelling evil dreams**

**VII.24.1** Bad dreams, bad living, injurious germs, poverty and miseries, ill-named (durṇāmnī) ill-tongued (durvācas) all of them we drive away from us.

**Savitṛ**

**VII.25.1** What the resplendent and the adorable Lord, all the bounties of Nature and the mighty cloud-bearing winds (Maruts) have dug up for us, may the impeller Lord of true ordinances, the Lord of creatures, the accorder of assent assign that to us.

( २६ ) षड्विंशं सूक्तम्

(१–२) द्वयृचस्यास्य सूक्तस्य मेधातिथिर्ऋषिः । विष्णुर्देवता । त्रिष्टुप् छन्दः ॥

ययोरोजसा स्कभिता रजांसि यौ वीर्यैर्वीरतमा शविष्ठा ।
यौ पत्येते अप्रतीतौ सहोभिर्विष्णुमगन्वरुणं पूर्वहूतिः ॥१॥
यस्येदं प्रदिशि यद्विरोचते प्र चानति वि च चष्टे शचीभिः ।
पुरा देवस्य धर्मणा सहोभिर्विष्णुमगन्वरुणं पूर्वहूतिः ॥२॥

ययोः । ओजसा । स्कभिता । रजांसि । यौ । वीर्यैः । वीरऽतमा । शविष्ठा ।
यौ । पत्येते इति । अप्रतिऽइतौ । सहःऽभिः । विष्णुम् । अगन् । वरुणम् । पूर्वऽहूतिः ।
यस्य । इदम् । प्रऽदिशि । यत् । विऽरोचते । प्र । च । अनति । वि । च । चष्टे । शचीभिः ।
पुरा । देवस्य । धर्मणा । सहःऽभिः । विष्णुम् । अगन् । वरुणम् । पूर्वऽहूतिः ॥२॥

( २७ ) सप्तविंशं सूक्तम्

(१–८) अष्टर्चस्यास्य सूक्तस्य मेधातिथिर्ऋषिः । विष्णुर्देवता । (१, ८) प्रथमाष्टम्योर्ऋचोस्त्रिष्टुप्, (२) द्वितीयायास्त्रिपदा विराड्गायत्री, (३) तृतीयायास्त्र्यवसाना षट्पदा विराट् शक्वरी, (४–७) चतुर्थ्यादिचतसृणाञ्च गायत्री छन्दांसि ॥

विष्णोर्नु कं प्रा वोचं वीर्याणि यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥१॥
प्र तद्विष्णु स्तवते वीर्याणि मृगो न भीमः कुचरो गिरिष्ठाः ।
परावत आ जगम्यात्परस्याः ॥२॥
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ।
उरु विष्णो वि क्रमस्वोरु क्षयाय नस्कृधि ।
घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर ॥३॥

विष्णोः । नु । कम् । प्र । वोचम् । वीर्याणि । यः । पार्थिवानि । विऽममे । रजांसि ।
यः । अस्कभायत् । उत्ऽतरम् । सधऽस्थम् । विऽचक्रमाणः । त्रेधा । उरुऽगायः ॥ १ ॥
प्र । तत् । विष्णुः । स्तवते । वीर्याणि । मृगः । न । भीमः । कुचरः । गिरिऽस्थाः ।
पराऽवतः । आ । जगम्यात् । परस्याः ॥ २ ॥
यस्य । उरुषु । त्रिषु । विऽक्रमणेषु । अधिऽक्षियन्ति । भुवनानि । विश्वा ।
उरु । विष्णो इति । वि । क्रमस्व । उरु । क्षयाय । नः । कृधि ।
घृतम् । घृतऽयोने । पिब । प्रऽप्र । यज्ञऽपतिम् । तिर ॥ ३ ॥

## Viṣṇuḥ

**VII.26.1** With my first prayers, I approach the sacrifice (Viṣṇum) and the venerable Lord, with whose power these worlds are kept steady; and who are most brave and most mighty in their strength; who rule over this universe; and who are unchallengeable in their resistless might.(Also Yv. V.59)

**VII.26.2** With my first prayers, I approach the sacrifice (Viṣṇu) and the venerable Lord, under whose direction is all this that shines and breathes and sees with the powers, and strengths according to the ancient law of the Lord.

## Viṣṇuḥ

**VII.27.1** Earnestly I glorify the mighty deeds of the all-pervading God, who has made the terrestrial bodies, who is highly glorified and who upholds the extensive cosmos, possessed of three types of motions of translation, of rotation and the vibration. (Also Ṛg. X.154.1)

**VII.27.2** The all-pervading God has been dominating by His powers like a sturdy wild mountain lion (mṛgo nabhīmaḥ kucaro girṣṭhaḥ). May He come hither from the distance beyond the remotest distance.(Also Ṛg. X.154.2; Ṛg. X.130.2)

**VII.27.3** Within whose three-extended paces, all these beings are covered, O sacrifice, spend far and wide. Make ample space for our living. O fire, born of melted butter (ghṛtayone), consume melted butter to your heart's desire. Make the sacrificer prosper. (Also Ṛg. X.154.2 and Yv. V.38)

इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदा । समूढमस्य पांसुरे ॥४॥
त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः । इतो धर्माणि धारयन् ॥५॥
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥६॥
तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥७॥
दिवो विष्ण उत वा पृथिव्या महो विष्ण उरोरन्तरिक्षात् ।
हस्तौ पृणस्व बहुभिर्वसव्यैराप्रयच्छ दक्षिणादोत सव्यात् ॥८॥

इदम् । विष्णुः । वि । चक्रमे । त्रेधा । नि । दधे । पदा । सम्ऽऊढम् । अस्य । पांसुरे ॥

त्रीणि । पदा । वि । चक्रमे । विष्णुः । गोपाः । अदाभ्यः । इतः । धर्माणि । धारयन् ॥

विष्णोः । कर्माणि । पश्यत । यतः । व्रतानि । पस्पशे । इन्द्रस्य । युज्यः । सखा ॥६॥

तत् । विष्णोः । परमम् । पदम् । सदा । पश्यन्ति । सूरयः । दिविऽइव । चक्षुः । आऽततम् ॥

दिवः । विष्णो इति । उत । वा । पृथिव्याः । महः । विष्णो इति । उरोः । अन्तरिक्षात् ।
हस्तौ । पृणस्व । बहुऽभिः । वसव्यैः । आऽप्रयच्छ । दक्षिणात् । आ । उत । सव्यात् ।

( २८ ) अष्टाविंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य मेधातिथिर्ऋषिः । इडा देवता । त्रिष्टुप् छन्दः ॥

इडैवास्माँ अनु वस्तां व्रतेन यस्याः पदे पुनते देवयन्तः ।
घृतपदी शक्वरी सोमपृष्ठोप यज्ञमस्थित वैश्वदेवी ॥१॥

इडा । एव । अस्मान् । अनु । वस्ताम् । व्रतेन । यस्याः । पदे । पुनते । देवऽयन्तः ।
घृतऽपदी । शक्वरी । सोमऽपृष्ठा । उप । यज्ञम् । अस्थित । वैश्वऽदेवी ॥ १ ॥

**VII.27.4** The omnipresent and the all powerful God dominates over all the three regions, earth, mid-region and the celestial. His one step is rooted in the deep dark mystery, beyond the knowledge of mankind. (Also Ṛg. X.22.17)

**VII.27.5** The omnipresent God, the preserver of the indomitable, created three regions, the earth, mid-region and the celestial. He sustains and preserves the sanctity of all vital functions that keep life ticking.(Also Ṛg. X.22.18)

**VII.27.6** Behold the marvellous creations of omnipresent God who fulfills our noble aspirations. He is a true friend of the soul. (Also Ṛg. X.22.19)

**VII.27.7** The wise and true seekers realize God through meditation within their own self; they see Him vividly as the eye ranges over the sky. (Also Ṛg. X.22.20)

**VII.27.8** O sun-divine, whether from heaven, or from earth, or from the vast and wide-spread interspace, fill your two hands, O sun-divine, with plentiful treasures and grant to us with your right hand and with the left as well (dakṣināt-savyāt). (Also Yu. V.19)

## Iḍā

**VII.28.1** May the sacred speech (iḍā) dwell here with us according to her vow; she, in whose abode the pious people purify themselves. May she, dripping fatness from her words, capable and full of devotional bliss, addressed to all the enlightened ones, be present al this sacrifice.

( २९ ) एकोनत्रिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य मेधातिथिर्ऋषिः । वेदो देवता । त्रिष्टुप् छन्दः ॥

**वेदः स्वस्तिर्द्रुघणः स्वस्तिः परशुर्वेदिः परशुर्नः स्वस्ति ।**
**हविष्कृतो यज्ञिया यज्ञकामास्ते देवासो यज्ञमिमं जुषन्ताम् ॥१॥**

वेदः । स्वस्तिः । द्रुऽघनः । स्वस्तिः । परशुः । वेदिः । परशुः । नः । स्वस्ति ।
हविःऽकृतः । यज्ञियाः । यज्ञऽकामाः । ते । देवासः । यज्ञम् । इमम् । जुषन्ताम् ॥ १ ॥

( ३० ) त्रिंशं सूक्तम्

(१-२) द्वयृचस्यास्य सूक्तस्य मेधातिथिर्ऋषिः । मन्त्रोक्ता देवता । त्रिष्टुप् छन्दः ॥

**अग्नाविष्णू महि तद्वां महित्वं पाथो घृतस्य गुह्यस्य नाम ।**
**दमेदमे सप्त रत्ना दधानौ प्रति वां जिह्वा घृतमा चरण्यात् ॥१॥**
**अग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणौ ।**
**दमेदमे सुष्टुत्या वावृधानौ प्रति वां जिह्वा घृतमुच्चरण्यात् ॥२॥**

अग्नाविष्णू इति । महि । तत् । वाम् । महिऽत्वम् । पाथः । घृतस्य । गुह्यस्य । नाम ।
दमेऽदमे । सप्त । रत्ना । दधानौ । प्रति । वाम् । जिह्वा । घृतम् । आ । चरण्यात् ॥
अग्नाविष्णू इति । महि । धाम । प्रियम् । वाम् । वीथः । घृतस्य । गुह्या । जुषाणौ ।
दमेऽदमे । सुऽस्तुत्या । ववृधानौ । प्रति । वाम् । जिह्वा । घृतम् । उत् । चरण्यात् ॥ २ ॥

( ३१ ) एकत्रिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः । द्यावापृथिव्यौ मन्त्रोक्ता वा देवताः । बृहती छन्दः ॥

**स्वार्क्तं मे द्यावापृथिवी स्वार्क्तं मित्रो अकरयम् ।**
**स्वार्क्तं मे ब्रह्मणस्पतिः स्वार्क्तं सविता करत् ॥१॥**

सुऽआर्क्तम् । मे । द्यावापृथिवी इति । सुऽआर्क्तम् । मित्रः । अकः । अयम् ।
सुऽआर्क्तम् । मे । ब्रह्मणः । पतिः । सुऽआर्क्तम् । सविता । करत् ॥ १ ॥

( ३२ ) द्वात्रिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः । इन्द्रो देवता । भुरिक्त्रिष्टुप् छन्दः ॥

**इन्द्रोतिभिर्बहुलाभिर्नो अद्य यावच्छ्रेष्ठाभिर्मघवञ्छूर जिन्व ।**
**यो नो द्वेष्ट्यधरः सस्पदीष्ट यमु द्विष्मस्तमु प्राणो जहातु ॥१॥**

इन्द्र । ऊतिऽभिः । बहुलाभिः । नः । अद्य । यावत्ऽश्रेष्ठाभिः । मघऽवन् । शूर । जिन्व ।
यः । नः । द्वेष्टि । अधरः । सः । पदीष्ट । यम् । ऊँ इति । द्विष्मः । तम । ऊँ इति । प्राणः । जहातु ॥

### Vedaḥ (Broom)

**VII.29.1** May the grass-broom (veda: used for cleansing the sacrificial place) be nice; may the tree-falling mace (drughṇaḥ) be nice; may the sickle (paraśu), the altar (vediḥ) and the hatchet (paraśu) be nice to us. May the enlightened ones, who make offerings, who are pious and willing to perform sacrifice, revel in this sacrifice.

### Agnā - Viṣṇu (pair)

**VII.30.1** O fire divine, and O sacrifice, (really) great is your that renown; both of you drink the mystic purified butter, bestowing seven treasures in each and every home. May the tongue of both of you taste that (mystic) purified butter at every sacrifice.

### Dyavā - pṛthivī (pair)

**VII.30.2** O fire divine and O sacrifice, greatly pleasing in your abode, you partake of the mystic purified butter relishing it, growing strong in each and every house (dame-dame) goodly with praises (su stutyā) may the tongue of both of you taste that (mystic) purified butter.

### Dyāvā - pṛthivī (pair)

**VII.31.1** May the heaven and earth anoint (svākta) my vision well. May this friendly Sun anoint well. May the Lord of knowledge anoint well and may the impeller Lord make it well-anointed.

### Indraḥ

**VII.32.1** O resplendent Lord, bounteous and brave, with your plentiful finest aids, may you encourage us today. Whoever hastes us, may he succumb; may the life leave him whom we hate.

( ३३ ) त्रयस्त्रिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । आयुर्देवता । अनुष्टुप् छन्दः ॥

उप प्रियं पनिप्नतं युवानमाहुतीवृधम् ।
अगन्म बिभ्रतो नमो दीर्घमायुः कृणोतु मे ॥१॥

उप । प्रियम् । पनिप्नतम् । युवानम् । आहुतिऽवृधम् ।
अगन्म । बिभ्रतः । नमः । दीर्घम् । आयुः । कृणोतु । मे ॥ १ ॥

( ३४ ) चतुस्त्रिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । मरुदादयो देवताः । पथ्यापङ्क्तिश्छन्दः ॥

सं मा सिञ्चन्तु मरुतः सं पूषा सं बृहस्पतिः ।
सं मायमग्निः सिञ्चतु प्रजया च धनेन च दीर्घमायुः कृणोतु मे ॥१॥

सम् । मा । सिञ्चन्तु । मरुतः । सम् । पूषा । सम् । बृहस्पतिः ।
सम् । मा । अयम् । अग्निः । सिञ्चतु । प्रऽजया । च । धनेन । च । दीर्घम् । आयुः । कृणोतु । मे ॥

( ३५ ) पञ्चत्रिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । जातवेदा देवता । जगती छन्दः ॥

अग्ने जातान्प्र णुदा मे सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व ।
अधस्पदं कृणुष्व ये पृतन्यवोऽनागसस्ते वयमदितये स्याम ॥१॥

अग्ने । जातान् । प्र । नुद । मे । सऽपत्नान् । प्रति । अजातान् । जातऽवेदः । नुदस्व ।
अधःऽपदम् । कृणुष्व । ये । पृतन्यवः । अनागसः । ते । वयम् । अदितये । स्याम ॥ १ ॥

( ३६ ) षट्त्रिंशं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः । जातवेदा देवता । (१-२) प्रथमाद्वितीययोर्ऋचोरनुष्टुप्,
(३) तृतीयायाश्च त्रिष्टुप् छन्दसी ॥

प्रान्यान्त्सपत्नान्त्सहसा सहस्व प्रत्यजाताञ्जातवेदो नुदस्व ।
इदं राष्ट्रं पिपृहि सौभगाय विश्व एनमनु मदन्तु देवाः ॥१॥
इमा यास्ते शतं हिराः सहस्रं धमनीरुत ।
तासां ते सर्वासामहमश्मना बिलमप्यधाम् ॥२॥

प्र । अन्यान् । सऽपत्नान् । सहसा । सहस्व । प्रति । अजातान् । जातऽवेदः । नुदस्व ।
इदम् । राष्ट्रम् । पिपृहि । सौभगाय । विश्वे । एनम् । अनु । मदन्तु । देवाः ॥१॥
इमाः । याः । ते । शतम् । हिराः । सहस्रम् । धमनीः । उत ।
तासाम् । ते । सर्वासाम् । अहम् । अश्मना । बिलम् । अपि । अधाम् ॥ २ ॥

### Āāyuḥ

**VII.33.1** Bringing homage, we approach the adorable Lord, dear to us; worthy of praise, youthful, augmenter of offerings; may he make my life-span long.

### Marutaḥ, Pūṣan, Bṛhaspatiḥ and Agniḥ

**VII.34.1** May the cloud-bearing winds sprinkle (siñeantu) properly, may the nourisher, and the Lord supreme sprinkle me profusely with progeny and wealth; may this fire divine make my life span long.

### Jātavedāḥ

**VII.35.1** O adorable Lord, drive away our rivals, who are born; and prevent those who are yet to be born, O omniscient. Put them under foot who want to invade us. May we, the sinless, be favoured with your creative power. (Also Yv. XV.2)

### Jātavedāḥ

**VII.36.1** With over-powering might, may you subdue other rivals. May you hit back even those, who are yet unborn. May you make this kingdom flourish to prosperity. May all the enlightened ones rejoice along with him ( the sacrificer).

**VII.36.2** Of the hundred veins (hirā) that you have, and of the thousand arteries (dhamanī), the holes in all of them, I cover up with a stone-plaster (aśmanā).

परं योनेरवरं ते कृणोमि मा त्वा प्रजाभि भून्मोत सूनुः ।
अस्वं त्वाप्रजसं कृणोम्यश्मानं ते अपिधानं कृणोमि ॥३॥

परम् । योनेः । अवरम् । ते । कृणोमि । मा । त्वा । प्रऽजा । अभि । भूत् । मा । उत । सूनुः ।
अस्वम् । त्वा । अप्रजसम् । कृणोमि । अश्मानम् । ते । अपिऽधानम् । कृणोमि ॥ ३ ॥

(३७) सप्तत्रिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । अक्षि देवता । अनुष्टुप् छन्दः ॥

अक्ष्यौ नौ मधुसंकाशे अनीकं नौ समञ्जनम् ।
अन्तः कृणुष्व मां हृदि मन इन्नौ सहासति ॥१॥

अक्ष्यौ । नौ । मधुसंकाशे इति मधुऽसंकाशे । अनीकम् । नौ । समऽअञ्जनम् ।
अन्तः । कृणुष्व । माम् । हृदि । मनः । इत् । नौ । सह । असति ॥ १ ॥

(३८) अष्टात्रिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता देवता । अनुष्टुप् छन्दः ॥

अभि त्वा मनुजातेन दधामि मम वाससा ।
यथासो मम केवलो नान्यासां कीर्तयाश्चन ॥१॥

अभि । त्वा । मनुऽजातेन । दधामि । मम । वाससा ।
यथा । असः । मम । केवलः । न । अन्यासाम् । कीर्तयाः । चन ॥ १ ॥

(३९) एकोनचत्वारिंशं सूक्तम्

(१–५) पञ्चर्चस्यास्य सूक्तस्याथर्वा ऋषिः । आसुरीवनस्पतिर्देवता । (१–२, ४–५) प्रथमाद्वितीयाचतुर्थी-पञ्चमीनामृचामनुष्टुप्, (३) तृतीयायाश्च चतुष्पदोष्णिक् छन्दसी ॥

इदं खनामि भेषजं मांपश्यमभिरोरुदम् ।
परायतो निवर्तनमायतः प्रतिनन्दनम् ॥१॥
येना निचक्र आसुरीन्द्रं देवेभ्यस्परि ।
तेना नि कुर्वे त्वामहं यथा तेसानि सुप्रिया ॥२॥

इदम् । खनामि । भेषजम् । माम्ऽपश्यम् । अभिऽरोरुदम् ।
पराऽयतः । निऽवर्तनम् । आऽयतः । प्रतिऽनन्दनम् ॥ १ ॥

येन । निऽचक्रे । आसुरी । इन्द्रम् । देवेभ्यः । परि ।
तेन । नि । कुर्वे । त्वाम् । अहम् । यथा । ते । असानि । सुऽप्रिया ॥ २ ॥

**VII.36.3** What is far from your womb, that I bring close to it. May not the progeny, nor even the Sun over-whelm you. I make you have an offspring overflowing with life. I make the stone your mattress (apidhānam).

### Akṣi - Manas

**VII.37.1** May the eyes of both of us be shining sweet. May our faces be attracting to each other. May you place me within your heart. May our minds remain united for ever.

### Vāsaḥ - Cloth

**VII.38.1** I clothe you with my cloth, closely fitting you, so that you shall be mine alone and shall not even talk of others (women).

### Vanaspatiḥ - Āsurī

**VII.39.1** I dig up this medicinal herb, which will make my beloved look at me and weep bitterly. It causes one going away (parāyataḥ) to return (nirvatanam) and greets (pratinandanam) (āyataḥ) one.

**VII.39.2** Wherewith the power of life-enjoyers (āsurī) draws the resplendent self close to her snatching him from the enlightened ones, with the same (herb), I draw you close to me, so that I may be very dear (supriyā) to you.

प्रतीची सोममसि प्रतीच्युत सूर्यम् ।
प्रतीची विश्वान्देवान्तां त्वाच्छावदामसि ॥३॥
अहं वदामि नेत्त्वं सभायामह त्वं वद ।
ममेदसस्त्वं केवलो नान्यासां कीर्तयाश्चन ॥४॥
यदि वासि तिरोजनं यदि वा नद्यस्तिरः ।
इयं ह मह्यं त्वामोषधिर्बद्ध्वेव न्यानयत् ॥५॥

प्रतीची । सोमम् । असि । प्रतीची । उत । सूर्यम् ।
प्रतीची । विश्वान् । देवान् । ताम् । त्वा । अच्छऽआवदामसि ॥ ३ ॥
अहम् । वदामि । न । इत् । त्वम् । सभायाम् । अह । त्वम् । वद ।
मम । इत् । असः । त्वम् । केवलः । न । अन्यासाम् । कीर्तयाः । चन ॥ ४ ॥
यदि । वा । असि । तिरःऽजनम् । यदि । वा । नद्यः । तिरः ।
इयम् । ह । मह्यम् । त्वाम् । ओषधिः । बद्ध्वाऽइव । निऽआनयत् ॥ ५ ॥

( ४० ) चत्वारिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य प्रस्कण्व ऋषिः । मन्त्रोक्ता देवताः । त्रिष्टुप् छन्दः ॥

दिव्यं सुपर्णं पयसं बृहन्तमपां गर्भं वृषभमोषधीनाम् ।
अभीपतो वृष्ट्या तर्पयन्तमा नो गोष्ठे रयिष्ठां स्थापयाति ॥१॥

दिव्यम् । सुऽपर्णम् । पयसम् । बृहन्तम् । अपाम् । गर्भम् । वृषभम् । ओषधीनाम् ।
अभीपतः । वृष्ट्या । तर्पयन्तम् । आ । नः । गोऽस्थे । रयिऽस्थाम् । स्थापयाति ॥ १ ॥

( ४१ ) एकचत्वारिंशं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्य प्रस्कण्व ऋषिः । सरस्वान् देवता । (१) प्रथमर्चो भुरिक्त्रिष्टुप्,
(२) द्वितीयायाश्च त्रिष्टुप् छन्दसी ॥

यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रत उपतिष्ठन्त आपः ।
यस्य व्रते पुष्टपतिर्निविष्टस्तं सरस्वन्तमवसे हवामहे ॥१॥

यस्य । व्रतम् । पशवः । यन्ति । सर्वे । यस्य । व्रते । उपऽतिष्ठन्ते । आपः ।
यस्य । व्रते । पुष्टऽपतिः । निऽविष्टः । तम् । सरस्वन्तम् । अवसे । हवामहे ॥ १ ॥

**VII.39.3** O herb, you are turned towards the moon; turned towards the Sun also; turned towards all the bounties of Nature. You as such, we praise and address you.

**VII.39.4** Here I shall speak and you shall not. You can speak in the assembly. You are mine and mine alone (kevalaḥ). Do not even talk of other women.

**VII.39.5** Even if you are away from men (at some traceable place), or even if you go across the rivers away from me, this herb will bring you, as if tied and bound fast.

### Mantroktāḥ (Mentioned in the verse)

**VII.40.1** May the resplendent Lord settle the celestial beauteous flier (suparṇa), laden with water, huge, showerer of waters and impregnator of plants, satisfying all longing for water with rain, standing amid riches, at our cow-stall (goṣthe).

### Sarasvān

**VII.41.1** Whose law all the animals follow; under whose law the waters mingle; under whose law the lord of nourishment is placed-Him the Lord of vitality (Sarasvān), we invoke for protection.

आ प्रत्यञ्चं दाशुषे दाश्वंसं सरस्वन्तं पुष्टपतिं रयिष्ठाम् ।
रायस्पोषं श्रवस्युं वसाना इह हुवेम सदनं रयीणाम् ॥२॥

आ । प्रत्यञ्चम् । दाशुषे । दाश्वंसम् । सरस्वन्तम् । पुष्टऽपतिम् । रयिऽस्थाम् ।
रायः । पोषम् । श्रवस्युम् । वसानाः । इह । हुवेम । सदनम् । रयीणाम् ॥ २ ॥

( ४२ ) द्विचत्वारिंशं सूक्तम्

(१-२) द्वयृचस्यास्य सूक्तस्य प्रस्कण्व ऋषिः । श्येनो देवता । (१) प्रथमर्चो जगती, (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी ॥

अति धन्वान्यत्यपस्ततर्द श्येनो नृचक्षा अवसानदर्शः ।
तरन्विश्वान्यवरा रजांसीन्द्रेण सख्या शिव आ जगम्यात् ॥१॥
श्येनो नृचक्षा दिव्यः सुपर्णः सहस्रपाच्छतयोनिर्वयोधाः ।
स नो नि यच्छाद्वसु यत्पराभृतमस्माकमस्तु पितृषु स्वधावत् ॥२॥

अति । धन्वानि । अति । अपः । ततर्द । श्येनः । नृऽचक्षाः । अवसानऽदर्शः ।
तरन् । विश्वानि । अवरा । रजांसि । इन्द्रेण । सख्या । शिवः । आ । जगम्यात् ॥ १ ॥
श्येनः । नृऽचक्षाः । दिव्यः । सुऽपर्णः । सहस्रऽपात् । शतऽयोनिः । वयःऽधाः ।
स । नः । नि । यच्छात् । वसु । यत् । पराऽभृतम् । अस्माकम् । अस्तु । पितृषु । स्वधाऽवत् ॥

( ४३ ) त्रिचत्वारिंशं सूक्तम्

(१-२) द्वयृचस्यास्य सूक्तस्य प्रस्कण्व ऋषिः । मन्त्रोक्ता देवताः । त्रिष्टुप् छन्दः ॥

सोमारुद्रा वि वृहतं विषूचीममीवा या नो गयमाविवेश ।
बाधेथां दूरं निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुक्तमस्मत् ॥१॥
सोमारुद्रा युवमेतान्यस्मद्विश्वा तनूषु भेषजानि धत्तम् ।
अव स्यतं मुञ्चतं यन्नो असत्तनूषु बद्धं कृतमेनो अस्मत् ॥२॥

सोमारुद्रा । वि । वृहतम् । विषूचीम् । अमीवा । या । नः । गयम् । आऽविवेश ।
बाधेथाम् । दूरम् । निःऋतिम् । पराचैः । कृतम् । चित् । एनः । प्र । मुमुक्तम् । अस्मत् ॥१॥
सोमारुद्रा । युवम् । एतानि । अस्मत् । विश्वा । तनूषु । भेषजानि । धत्तम् ।
अव । स्यतम् । मुञ्चतम् । यत् । नः । असत् । तनूषु । बद्धम् । कृतम् । एनः । अस्मत् ॥ २ ॥

**VII.41.2** We, living here in plenty of riches, call Him, the Lord of vitality, a bestower coming towards a sacrificer, the Lord of nourishment, standing amid riches, granter of glory, and abode of riches.

### Śyenaḥ

**VII.42.1** The Sun (śyena) falcon, observer of men, shower of result of their action, sweeps over deserts and over waters. May He, the propitious, come here with His companion, the resplendent Lord, passing over all the lower realms of the midspace.

**VII.42.2** The Sun (śyena) falcon, observer of men, the celestial beauteous flier, thousand-rayed, hundred-wombed, granter of vigour; may He grant us the wealth, which has been taken away from us. May it be a sustaining oblation for our elders (pitṛṣu)

### Soma and Rudra (Pair)

**VII.43.1** O Lord blissful (Soma) and terrible (Rudrà), may you tear asunder and drive away the disease, which has entered our house. May you chase the perdition (nir-ṛti) far away. May you also remove from us the defects which it has caused.

**VII.43.2** O Lord blissful and terrible, may both of you apply to our bodies all these remedies. May you flush out what is bad in us and remove from us the defects caused (by the disease) which is sticking to our bodies still.

( ४४ ) चतुश्चत्वारिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य प्रस्कण्व क्रषिः । वाग्देवता । त्रिष्टुप् छन्दः ॥

**शिवास्त एका अशिवास्त एकाः सर्वा बिभर्षि सुमनस्यमानः ।**
**तिस्रो वाचो निहिता अन्तरस्मिन्तासामेका वि पपातानु घोषम् ॥१॥**

शिवाः । ते । एकाः । अशिवाः । ते । एकाः । सर्वाः । बिभर्षि । सुऽमनस्यमानः ।
तिस्रः । वाचः । निऽहिताः । अन्तः । अस्मिन् । तासाम् । एका । वि । पपात । अनु । घोषम् ॥१॥

( ४५ ) पञ्चचत्वारिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य प्रस्कण्व क्रषिः । मन्त्रोक्ता देवताः । भुरिक्त्रिष्टुप् छन्दः ॥

**उभा जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनयोः ।**
**इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम् ॥१॥**

उभा । जिग्यथुः । न । परा । जयेथे इति । न । परा । जिग्ये । कतरः । चन । एनयोः ।
इन्द्रः । च । विष्णो इति । यत् । अपस्पृधेथाम् । त्रेधा । सहस्रम् । वि । तत् । ऐरयेथाम् ॥१॥

( ४६ ) षट्चत्वारिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य प्रस्कण्व क्रषिः । भेषजं देवता । अनुष्टुप् छन्दः ॥

**जनाद्विश्वजनीनात्सिन्धुतस्पर्याभृतम् ।**
**दूरात्त्वा मन्य उद्भृतमीर्ष्याया नाम भेषजम् ॥१॥**

जनात् । विश्वऽजनीनात् । सिन्धुतः । परि । आऽभृतम् ।
दूरात् । त्वा । मन्ये । उत्ऽभृतम् । ईर्ष्यायाः । नाम । भेषजम् ॥ १ ॥

( ४७ ) सप्तचत्वारिंशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य प्रस्कण्व क्रषिः । मन्त्रोक्त्र देवता । अनुष्टुप् छन्दः ॥

**अग्नेरिवास्य दहतो दावस्य दहतः पृथक् ।**
**एतामेतस्येर्ष्यामुद्नाग्निमिव शमय ॥१॥**

अग्नेःऽईव । अस्य । दहतः । दावस्य । दहतः । पृथक् ।
एताम् । एतस्य । ईर्ष्याम् । उद्ना । अग्निम्ऽईव । शमय ॥ १ ॥

## Vak - Speech

**VII.44.1** Some of your speeches are benign (śivāḥ) some others of your speeches are malign. You bear them all with friendly mind. Three types of speeches (tisro vācaḥ) are placed secretly within this body. One of them comes out as audible sound (ghoṣam).

## Indraḥ and Viṣṇuḥ (Pair)

**VII.45.1** Both of them win; they two are never defeated. Neither of them has ever been vanquished. O resplendent Lord (Indra) and O sacrifice (Viṣṇu), when you complete, you scatter thousands in three (tredhā) directions.

## Driving out of Malice (Īrṣyā)

**VII.46.1** You have been brought from a land across the ocean inhabited by multiracial people. Brought from far away as you are, I consider you a remedy for jealousy.

**VII.47.1** May you (O remedy), quell down this jealousy of this man burning like fire and burning each and every thing like a forest-fire, as they quench fire with water.

( ४८ ) अष्टचत्वारिंशं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता देवताः । (१-२) प्रथमाद्वितीययोर्ऋचोरनुष्टुप्,
(३) तृतीयायाश्च त्रिष्टुप् छन्दसी ॥

सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।
जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥१॥
या सुबाहुः स्वङ्गुरिः सुषूमा बहुसूवरी ।
तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतन ॥२॥
या विश्पत्नीन्द्रमसि प्रतीची सहस्रस्तुकाभियन्ती देवी ।
विष्णोः पत्नि तुभ्यं राता हवींषि पतिं देवि राधसे चोदयस्व ॥३॥

सिनीवालि । पृथुऽस्तुके । या । देवानाम् । असि । स्वसा ।
जुषस्व । हव्यम् । आऽहुतम् । प्रऽजाम् । देवि । दिदिड्ढि । नः ॥ १ ॥

या । सुऽबाहुः । सुऽअङ्गुरिः । सुऽसूमा । बहुऽसूवरी ।
तस्यै । विश्पत्न्यै । हविः । सिनीवाल्यै । जुहोतन ॥ २ ॥

या । विश्पत्नी । इन्द्रम् । असि । प्रतीची । सहस्रऽस्तुका । अभिऽयन्ती । देवी ।
विष्णोः । पत्नि । तुभ्यम् । राता । हवींषि । पतिम् । देवि । राधसे । चोदयस्व ॥ ३ ॥

( ४९ ) एकोनपञ्चाशं सूक्तम्

(१-२) द्वयृचस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता देवताः । (१) प्रथमर्चो
जगती, (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी ॥

कुहूं देवीं सुकृतं विद्मनापसमस्मिन्यज्ञे सुहवा जोहवीमि ।
सा नो रयिं विश्ववारं नि यच्छाद्ददातु वीरं शतदायमुक्थ्यम् ॥१॥
कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषो जुषेत ।
शृणोतु यज्ञमुशती नो अद्य रायस्पोषं चिकितुषी दधातु ॥२॥

कुहूम् । देवीम् । सुऽकृतम् । विद्मनाऽअपसम् । अस्मिन् । यज्ञे । सुऽहवा । जोहवीमि ।
सा । नः । रयिम् । विश्वऽवारम् । नि । यच्छात् । ददातु । वीरम् । शतऽदायम् । उक्थ्यम् ॥

कुहूः । देवानाम् । अमृतस्य । पत्नी । हव्या । नः । अस्य । हविषः । जुषेत ।
शृणोतु । यज्ञम् । उशती । नः । अद्य । रायः । पोषम् । चिकितुषी । दधातु ॥ २ ॥

**Sinīvālī**

**VII.48.1** O procreative power (Sinīvāli), praised by multitude, who are inspirer of the enlightened ones, may you accept and enjoy our offered oblations; O divine ones, bless us with progeny.

**VII.48.2** To her, the procreative power (Si nīvalī), who has lovely arms, lovely fingers, good womb and who is capable of bearing many children - to her, the sustainer of the people, offer your oblations.

**VII.48.3** To you, who are sustainer of the people, and who are inclined towards the resplendent one, glowing, praised by thousands, and coming forward, O consort of the sacrifice, (these) oblations are offered. May you urge your husband, O glowing one, to grant us wealth,

**Kuhūḥ - New Moon**

**VII.49.1** I invoke at this sacrifice the divine moonless night (kuhū-New Moon), skilled in pious deeds, acting with appropriate knowledge, and easy to call. May she confirm in us the riches desired by all. May she bless us with a son, donor of abundant wealth, and praise-worthy.

**VII.49.2** May the moonless night (kuhū), the consort of the immortal among the enlightened ones, worthy of invocation, accept and enjoy our this oblation. Full of desire, may she hear today of our this sacrifice. Knowing (about it), may she grant us riches and nourishment.

### ( ५० ) पञ्चाशं सूक्तम्

(१–२) द्वयृचस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता देवता । जगती छन्दः ॥

राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना ।
सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥१॥
यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि ।
ताभिर्नो अद्य सुमना उपागहि सहस्रापोषं सुभगे रराणा ॥२॥

राकाम् । अहम् । सुऽहवाम् । सुऽस्तुती । हुवे । शृणोतु । नः । सुऽभगा । बोधतु । त्मना ।
सीव्यतु । अपः । सूच्या । अच्छिद्यमानया । ददातु । वीरम् । शतऽदायम् । उक्थ्यम् ॥१॥
याः । ते । राके । सुऽमतयः । सुऽपेशसः । याभिः । ददासि । दाशुषे । वसूनि ।
ताभिः । नः । अद्य । सुऽमनाः । उपऽआगहि । सहस्रऽपोषम् । सुऽभगे । रराणा ॥ २ ॥

### ( ५१ ) एकपञ्चाशं सूक्तम्

(१–२) द्वयृचस्यास्य सूक्तस्याथर्वा ऋषिः । देवपत्न्यो देवताः । (१) प्रथमर्च आर्षी जगती, (२) द्वितीयायाश्च चतुष्पदा पङ्क्तिश्छन्दसी ॥

देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये ।
याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छन्तु ॥१॥
उत ग्ना व्यन्तु देवपत्नीरिन्द्राण्य१ग्नाय्यश्विनी राट् ।
आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनाम् ॥२॥

देवानाम् । पत्नीः । उशतीः । अवन्तु । नः । प्र । अवन्तु । नः । तुजये । वाजऽसातये ।
याः । पार्थिवासः । याः अपाम् । अपि । व्रते । ताः । नः । देवीः । सुऽहवाः । शर्म । यच्छन्तु ॥
उत । ग्नाः । व्यन्तु । देवऽपत्नीः । इन्द्राणी । अग्नायी । अश्विनी । राट् ।
आ । रोदसी । वरुणानी । शृणोतु । व्यन्तु । देवीः । यः । ऋतुः । जनीनाम् ॥२॥

### ( ५२ ) द्विपञ्चाशं सूक्तम्

(१–९) नवर्चस्यास्य सूक्तस्याङ्गिरा ऋषिः । इन्द्रो देवता । (१–२, ५, ८–९) प्रथमाद्वितीयापञ्चम्यष्टमीनवमीनामृचामनुष्टुप्, (३, ७) तृतीयासप्तम्योस्त्रिष्टुप्, (४) चतुर्थ्या जगती, (६) षष्ठयाश्च भुरिक्त्रिष्टुप् छन्दांसि ॥

यथा वृक्षमशनिर्विश्वाहा हन्त्यप्रति ।
एवाहमद्य कितवानक्षैर्बध्यासमप्रति ॥१॥

यथा । वृक्षम् । अशनिः । विश्वाहा । हन्ति । अप्रति । एव ।
अहम् । अद्य । कितवान् । अक्षैः । बध्यासम् । अप्रति ॥१ ॥

### Rākā - Full Moon Night

**VII.50.1** I invoke the full moon's night (rākā) easy to call, worthy of praise. May she, the propitious, listen to us and understand by herself our purpose. May she saw her work with the needle (sūcyā). Which is never broken. May she bless us with a son, donor of abundant wealth, and praise-worthy.

**VII.50.2** O full moon's night (rākā), whatever are your much-praised good graces, with which you bestow treasures on the sacrificer, with those may you come to us with a friendly mind today, granting us, O propitious one, thousands of nourishments.

### Deva - Patnyaḥ : Wives of Devas

**VII.51.1** May the consorts of the bounties of nature, full of longing, aid us. May they help us (to obtain) offspring and plenty of food-grains. Those who are terrestrial and also those who belong to the realm of the waters, may those divine ones, easy to call, grant us comfort.

**VII.51.2** May the yearning sustainers of the enlightened ones, these divine females, enjoy our offerings. May the power sustaining the aspirant, the power sustaining the divine, the shining power that sustains the twins divine, the power sustaining the cloud, and the power sustaining the ocean, listen to us well. May these deities enjoy, when it is the season for the wives. (ṛtur - janinām)

### Indraḥ

**VII.52.1** As the irresistible lightning always strikes down a tree, even so today, may I strike down the gambler (kitavān-akṣaiḥ) with dice irresistibly.

तुराणामतुराणां विशामवर्जुषीणाम् ।
समैतु विश्वतो भगो अन्तर्हस्तं कृतं मम ॥२॥
ईडे अग्निं स्वावसुं नमोभिरिह प्रसक्तो वि चयत्कृतं नः ।
रथैरिव प्र भरे वाजयद्भिः प्रदक्षिणं मरुतां स्तोममृध्याम् ॥३॥
वयं जयेम त्वया युजा वृतमस्माकमंशमुदवा भरेभरे ।
अस्मभ्यमिन्द्र वरीयः सुगं कृधि प्र शत्रूणां मघवन्वृष्ण्या रुज ॥४॥
अजैषं त्वा संलिखितमजैषमुत संरुधम् ।
अविं वृको यथा मथदेवा मथ्नामि ते कृतम् ॥५॥
उत प्रहामतिदीवा जयति कृतमिव श्वघ्नी वि चिनोति काले ।
यो देवकामो न धनं रुणद्धि समित्तं रायः सृजति स्वधाभिः ॥६॥
गोभिष्टरेमामतिं दुरेवां यवेन वा क्षुधं पुरुहूत विश्वे ।
वयं राजसु प्रथमा धनान्यरिष्टासो वृजनीभिर्जयेम ॥७॥

तुराणाम् । अतुराणाम् । विशाम् । अवर्जुषीणाम् ।
सम्ऽऐतु । विश्वतः । भगः । अन्तःऽहस्तम् । कृतम् । मम ॥ २ ॥
ईडे । अग्निम् । स्वऽवसुम् । नमःऽभिः । इह । प्रऽसक्तः । वि । चयत् । कृतम् । नः ।
रथैःऽइव । प्र । भरे । वाजयत्ऽभिः । प्रऽदक्षिणम् । मरुताम् । स्तोमम् । ऋध्याम् ॥ ३ ॥
वयम् । जयेम । त्वया । युजा । वृतम् । अस्माकम् । अंशम् । उत् । अव । भरेऽभरे ।
अस्मभ्यम् । इन्द्र । वरीयः । सुऽगम् । कृधि । प्र । शत्रूणाम् । मघऽवन् । वृष्ण्या । रुज ॥
अजैषम् । त्वा । सम्ऽलिखितम् । अजैषम् । उत । सम्ऽरुधम् ।
अविम् । वृकः । यथा । मथत् । एव । मथ्नामि । ते । कृतम् ॥ ५ ॥
उत । प्रऽहाम् । अतिऽदीवा । जयति । कृतम्ऽइव । श्वऽघ्नी । वि । चिनोति । काले ।
यः । देवऽकामः । न । धनम् । रुणद्धि । सम् । इत् । तम् । रायः । सृजति । स्वधाभिः ॥
गोभिः । तरेम । अमतिम् । दुःऽएवाम् । यवेन । वा । क्षुधम् । पुरुऽहूत । विश्वे ।
वयम् । राजऽसु । प्रथमाः । धनानि । अरिष्टासः । वृजनीभिः । जयेम ॥ ७ ॥

**VII.52.2** May the fortune of the hasty (turāṇam) unhasty (aturāṇām) and of the people not abstaining from evil, come from all sides together to be placed in my hand.

**VII.52.3** I praise the adorable Lord, the master of great treasures. Inclined towards me by my homages, may He divide (vi-ci) here what we have won. As if with booty-winning chariots in a battle, may I further praise of the brave soldiers (maruts) with my skill.

**VII.52.4** With you as an ally, May we conquer the surrounded (enemy). May you keep us to have an upper-hand in each and every battle (bhare-bhare). O resplendent one (Indra), make the superior easily approachable to us. O bounteous Lord, shatter the strength of the enemy.

**VII.52.5** I have conquered you as planned (sam-bkhitam); also I have conquered you, the checkmated (sam-rudham) (besieged). Like a wolf (vṛka) tearing a sheep (avi), I shake down all your efforts.

**VII.52.6** A warrior, very keen to win, conquers even a hard-hitting rival. A gambler, fighter gains spoils in due course, as if he had acted with purpose. Whoever, willing to conquer, keeps not back the money, (is not niggard in spending money), him the wealth joins with sustaining powers.

**VII.52.7** O Lord, invoked by the multitude, may we all overcome evil intentions leading to misery by our sense organs, and hunger by food-grains. May we, the foremost among kings, win the riches with our prowesses unharmed.

कृतं मे दक्षिणे हस्ते जयो मे सव्य आहितः ।
गोजिद्भूयासमश्वजिद्धनंजयो हिरण्यजित् ॥८॥
अक्षाः फलवतीं द्युवं दत्त गां क्षीरिणीमिव ।
सं मा कृतस्य धारया धनुः स्नाव्नेव नह्यत ॥९॥

कृतम् । मे । दक्षिणे । हस्ते । जयः । मे । सव्ये । आऽहितः ।
गोऽजित् । भूयासम् । अश्वऽजित् । धनम्ऽजयः । हिरण्यऽजित् ॥ ८ ॥
अक्षाः । फलऽवतीम् । द्युवम् । दत्त । गाम् । क्षीरिणीम्ऽइव ।
सम् । मा । कृतस्य । धारया । धनुः । स्नान्नाऽइव । नह्यत ॥ ९ ॥

( ५३ ) त्रिपञ्चाशं सूक्तम्
(१) एकर्चस्यास्य सूक्तस्याङ्गिरा ऋषिः । इन्द्राबृहस्पती देवते । त्रिष्टुप् छन्दः ॥

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरीयः कृणोतु ॥१॥

बृहस्पतिः । नः । परि । पातु । पश्चात् । उत । उत्ऽतरस्मात् । अधरात् । अघऽयोः ।
इन्द्रः । पुरस्तात् । उत । मध्यतः । नः । सखा । सखिऽभ्यः । वरीयः । कृणोतु ॥ १ ॥

( ५४ ) चतुष्पञ्चाशं सूक्तम्
(१-२) द्वयृचस्यास्य सूक्तस्याथर्वा ऋषिः । सांमनस्यमश्विनौ च देवताः । (१) प्रथमर्चः ककुम्मत्यनुष्टुप्, (२) द्वितीयायाश्च जगती छन्दसी ॥

संज्ञानं नः स्वेभिः संज्ञानमरणेभिः ।
संज्ञानमश्विना युवमिहास्मासु नि यच्छतम् ॥१॥
सं जानामहै मनसा सं चिकित्वा मा युष्महि मनसा दैव्येन ।
मा घोषा उत्स्थुर्बहुले विनिर्हते मेषुः पप्तदिन्द्रस्याहन्यागते ॥२॥

सम्ऽज्ञानम् । नः । स्वेभिः । सम्ऽज्ञानम् । अरणेभिः ।
सम्ऽज्ञानम् । अश्विना । युवम् । इह । अस्मासु । नि । यच्छतम् ॥ १ ॥
सम् । जानामहै । मनसा । सम् । चिकित्वा । मा । युष्महि । मनसा । दैव्येन ।
मा । घोषाः । उत् । स्थुः । बहुले । विऽनिर्हते । मा । इषुः । पप्तत् । इन्द्रस्य । अहनि । आऽगते ॥२॥

**VII.52.8** Dice (Kṛtam) is in my right hand and the victory lies in my left. May I become winner of cows, winner of horses, winner of wealth and winner of gold. [Or, effort in my right hand, then victory in assured in my left hand]

**VII.52.9** O my sense-organs, provide me with a fruitful game like a cow streaming milk. May you unite me with the stream of action just as a string binds (the two ends of) a bow.

### Indrā - Bṛhaspati (pair)

**VII.53.1** May the Lord supreme Bṛhaspati protect us well from the vicious enemy from behind, from above and from below, and the resplendent Lord (Indra) from the front and centre. May He, our friend, make us superior among friends (grant plenty of wealth to us, His favoured friends).

### Sām - manasyam; also Aśvinau

**VII.54.1** May there be our proper understanding with our own people, proper understanding with strangers; O twins divine (aśvinau), may both of you develop proper understanding among us here.

**VII.54.2** May we have proper understanding in mind; having been understood, may we remain united. May we never be devoid of divine spirit. May the noises of wanton slaughter not rise here. May the arrow of the resplendent Lord not fall (on us), when the day comes.

( ५५ ) पञ्चपञ्चाशं सूक्तम्

(१–७) सप्तर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । आयुः, बृहस्पत्यश्विनो वा देवताः । (१–२) प्रथमा-द्वितीययोर्ऋचोस्त्रिष्टुप् , (३) तृतीयाया भुरिक्त्रिष्टुप् , (४) चतुर्थ्या उष्णिग्गर्भार्षी पङ्क्तिः, (५–७) पञ्चम्यादितृचस्य चानुष्टुप् छन्दांसि ॥

अमुत्रभूयादधि यद्यमस्य बृहस्पतेरभिशस्तेरमुञ्चः ।
प्रत्यौहतामश्विना मृत्युमस्मद्देवानामग्ने भिषजा शचीभिः ॥१॥
सं क्रामतं मा जहीतं शरीरं प्राणापानौ ते सयुजाविह स्ताम् ।
शतं जीव शरदो वर्धमानोऽग्निष्टे गोपा अधिपा वसिष्ठः ॥२॥
आयुर्यत्ते अतिहितं पराचैरपानः प्राणः पुनरा ताविताम् ।
अग्निष्टदाहार्निर्ऋतेरुपस्थात्तदात्मनि पुनरा वेशयामि ते ॥३॥
मेमं प्राणो हासीन्मो अपानोऽवहाय परा गात् ।
सप्तर्षिभ्य एनं परि ददामि त एनं स्वस्ति जरसे वहन्तु ॥४॥
प्र विशतं प्राणापानावनड्वाहाविव व्रजम् ।
अयं जरिम्णः शेवधिररिष्ट इह वर्धताम् ॥५॥
आ ते प्राणं सुवामसि परा यक्ष्मं सुवामि ते ।
आयुर्नो विश्वतो दधदयमग्निर्वरेण्यः ॥६॥

अमुत्रऽभूयात् । अधि । यत् । यमस्य । बृहस्पते । अभिऽशस्तेः । अमुञ्चः ।
प्रति । औहताम् । अश्विना । मृत्युम् । अस्मत् । देवानाम् । अग्ने । भिषजा । शचीभिः ॥
सम् । क्रामतम् । मा । जहीतम् । शरीरम् । प्राणापानौ । ते । सऽयुजौ । इह । स्ताम् ।
शतम् । जीव । शरदः । वर्धमानः । अग्निः । ते । गोपाः । अधिऽपाः । वसिष्ठः ॥ २ ॥
आयुः । यत् । ते । अतिऽहितम् । पराचैः । अपानः । प्राणः । पुनः । आ । तौ । इताम् ।
अग्निः । तत् । आ । अहाः । निःऽऋतेः । उपऽस्थात् । तत् । आत्मनि । पुनः । आ । वेशयामि । ते ॥
मा । इमम् । प्राणः । हासीत् । मो इति । अपानः । अवऽहाय । परा । गात् ।
सप्तर्षिऽभ्यः । एनम् । परि । ददामि । ते । एनम् । स्वस्ति । जरसे । वहन्तु ॥ ४ ॥
प्र । विशतम् । प्राणापानौ । अनड्वाहौऽइव । व्रजम् ।
अयम् । जरिम्णः । शेवऽधिः । अरिष्टः । इह । वर्धताम् ॥ ५ ॥
आ । ते । प्राणम् । सुवामसि । परा । यक्ष्मम् । सुवामि । ते ।
आयुः । नः । विश्वतः । दधत् । अयम् । अग्निः । वरेण्यः ॥ ६ ॥

**Āyuḥ, Bṛhaspatiḥ and Aśvinau**

**VII.55.1** When you, O Bṛhaspati did release us from yama's other world existence (amutra-bhūyāt) from male- diction Aśvins took back death from us, O Agni, The renowned physician of the gods, (Also Yv. XXVII.9)

**VII.55.2** O out-breath and in-breath, move in the body of this man properly. Do not leave his body. O man, may your out-breath and in-breaṭh be well-allied here. May you live a hundred autumns growing (in every respect). May the adorable Lord, the best rehabilitator, be your protector overlord.

**VII.55.3** Your life, which has fled far away (life-span, which has been obstructed due to improper living) and your in-breath and out-breath, may both of them come here again. That fire-divine has brought you back from the lap of perdition (nirṛti); that I infuse again into your self.

**VII.55.4** May the out-breath not leave this man, nor the in-breath go away leaving him helpless. I hand him over to the seven seers (sapta-ṛṣibhyaḥ). May they conduct him safely unto old age.

**VII.55.5** O out-breath and in-breath, may you enter him just as a pair of bullocks enters a stall. May this man, a treasure of old age, grow and prosper unharmed.

**VII.55.6** We bring your vital breath to you. We drive the wasting disease away from you. May this Lord adorable and desirable grant us long life in every respect.

उद्वयं तमसस्परि रोहन्तो नाकमुत्तमम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥७॥

उत् । वयम् । तमसः । परि । रोहन्तः । नाकम् । उत्ऽतमम् ।
देवम् । देवऽत्रा । सूर्यम् । अगन्म । ज्योतिः । उत्ऽतमम् ॥ ७ ॥

( ५६ ) षट्पञ्चाशं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । ऋक्सामनी देवते । अनुष्टुप् छन्दः ॥

ऋचं साम यजामहे याभ्यां कर्माणि कुर्वते ।
एते सदसि राजतो यज्ञं देवेषु यच्छतः ॥१॥

ऋचम् । साम । यजामहे । याभ्याम् । कर्माणि । कुर्वते ।
एते इति । सदसि । राजतः । यज्ञम् । देवेषु । यच्छतः ॥ १ ॥

( ५७ ) सप्तपञ्चाशं सूक्तम्

(१-२) द्वयृचस्यास्य सूक्तस्य भृगुर्ऋषिः । इन्द्रो देवता । (१) प्रथमर्चोऽनुष्टुप्, (२) द्वितीयायाश्च विराड्रोष्णिक् छन्दसी ॥

ऋचं साम यदप्राक्षं हविरोजो यजुर्बलम् ।
एष मा तस्मान्मा हिंसीद्वेदः पृष्टः शचीपते ॥१॥
ये ते पन्थानोव दिवो येभिर्विश्वमैरयः । तेभिः सुम्नया धेहि नो वसो ॥२॥

ऋचम् । साम । यत् । अप्राक्षम् । हविः । ओजः । यजुः । बलम् ।
एषः । मा । तस्मात् । मा । हिंसीत् । वेदः । पृष्टः । शचीऽपते ॥ १ ॥
ये । ते । पन्थानः । अव । दिवः । येभिः । विश्वम् । ऐरयः ।
तेभिः । सुम्नऽया । आ । धेहि । नः । वसो इति ॥ २ ॥

( ५८ ) अष्टपञ्चाशं सूक्तम्

(१-८) अष्टर्चस्यास्य सूक्तस्याथर्वा ऋषिः । (१, ३-८) प्रथमर्चः पादत्रयस्य तृतीयादिषण्णाञ्च मन्त्रोक्ता वृश्चिकादयो ब्रह्मणस्पतिर्वा, (१, २) प्रथमायास्तुरीयपादस्य द्वितीयायाश्च वनस्पतिर्देवता । (१-३, ५-८) प्रथमादितृचस्य पञ्चम्यादिचतसृणाञ्चानुष्टुप्, (४) चतुर्थ्याश्च विराट् प्रस्तारपङ्क्तिश्छन्दसी ॥

तिरश्चिराजेरसितात्पृदाकोः परि संभृतम् । तत्कङ्कपर्वणो विषमियं वीरुदनीनशत् ॥१॥

तिरश्चिऽराजेः । असितात् । पृदाकोः । परि । सम्ऽभृतम् ।
तत् । कङ्कऽपर्वणः । विषम् । इयम् । वीरुत् । अनीनशत् ॥ १ ॥

**VII.55.7** Up out of darkness have we ascending - the highest firmament (nākam uttamam) gone to the Sun, god among the gods (devam devatrā) highest light (jyotiḥ uttamam) (Also Yv. XX.21; Ṛg. I.50.10 etc.)

**Ṛk - Sāmanī**

**VII.56.1** We adore the Ṛk (praise hymn) and the sāman (praise-song) with which two the people perform their actions. Both of them shine at the gathering and these two conduct the sacrifice into the enlightened ones (deveṣu)

**Indraḥ**

**VII.57.1** If I have questioned the praise-hymns (Ṛks) for (being capable of granting) oblations, praise-songs (sāmans) for vigour, and sacrificial formulae (Yajūṅsi) for strength- therefore, O lord of wisdom (śacīpate), may this such questioned veda may not do any harm to me.

**Indraḥ**

**VII.57.2** What your paths are there, along which you urge this universe to move under the sky, by very those, O excellent Lord, may you place us in happiness.

**Vṛścika (Scorpion) etc.**

**VII.58.1** This plant makes the poison vanish, whether that has been received from a tiraściraji or crosslined (i.e., viper) or a black - asit (i.e., cobra) or from an adder (pṛdākū) or from the heron-jointed sñake (kañka-parvaṇaḥ)

इयं वीरुन्मधुजाता मधुश्चुन्मधुला मधूः । सा विह्रुतस्य भेषज्यथो मशकजम्भनी ॥२॥
यतो दृष्टं यतो धीतं ततस्ते निर्ह्वयामसि। अभेस्य तृप्रदंशिनो मशकस्यारसं विषम् ॥३॥
अयं यो वक्रो विपरुर्व्यङ्गो मुखानि वक्रा वृजिना कृणोषि ।
तानि त्वं ब्रह्मणस्पत इषीकामिव सं नमः ॥४॥
अरसस्य शर्कोटस्य नीचीनस्योपसर्पतः । विषं ह्य१स्यादिष्यथो एनमजीजभम् ॥५॥
न ते बाह्वोर्बलमस्ति न शीर्षे नोत मध्यतः । अथ किं पापयामुया पुच्छे बिभर्ष्यर्भकम् ॥६॥
अदन्ति त्वा पिपीलिका वि वृश्चन्ति मयूर्यः । सर्वे भल ब्रवाथ शार्कोटमरसं विषम् ॥७॥

इयम् । वीरुत् । मधुऽजाता । मधुऽश्चुत् । मधुला । मधूः ।
सा । विऽह्रुतस्य । भेषजी । अथो इति । मशकऽजम्भनी ॥ २ ॥
यतः । दष्टम् । यतः । धीतम् । ततः । ते । निः । ह्वयामसि ।
अभेस्य । तृप्रऽदंशिनः । मशकस्य । अरसम् । विषम् ॥ ३ ॥
अयम् । यः । वक्रः । विऽपरुः । विऽअङ्गः । मुखानि । वक्रा । वृजिना । कृणोषि ।
तानि । त्वम् । ब्रह्मणः । पते । इषीकाम्ऽइव । सम् । नमः ॥ ४ ॥
अरसस्य । शर्कोटस्य । नीचीनस्य । उपऽसर्पतः ।
विषम् । हि । अस्य । आऽअदिषि । अथो इति । एनम् । अजीजभम् ॥ ५ ॥
न । ते । बाह्वोः । बलम् । अस्ति । न । शीर्षे । न । उत । मध्यतः ।
अथ । किम् । पापया । अमुया । पुच्छे । बिभर्षि । अर्भकम् ॥ ६ ॥
अदन्ति । त्वा । पिपीलिकाः । वि । वृश्चन्ति । मयूर्यः ।
सर्वे । भल । ब्रवाथ । शार्कोटम् । अरसम् । विषम् ॥ ७ ॥

**Vanaspatiḥ**

**VII.58.2** This medicinal herb is born of sweetness, is dripping sweetness, is full of sweetness and is the sweetness incarnate. It is a remedy for the bite and wound; also it is a killer of stinging creatures (maśaka - jambhanī)

**VII.58.3** From there, where a sting was inflicted, or from where the blood was sucked, we remove from you the ineffective poison of the tiny hastily-stinging mosquito.

**Brahmaṇas patiḥ**

**VII.58.4** You crooked, jointless and limbless creature, who make your faces (countenances) crooked and vicious, O Lord of knowledge (Brahamaṇaspati), may you bend them straight like a reed.

**VII.58.5** I remove (destroy) the poison of this scorpion (or the snake; Śarkota), who nears us creeping on the ground; and thereafter I kill him.

**VII.58.6** There is no strength in your two arms, nor in your head, nor in your middle. Why, then, do you carry this small thing in your tail with this evil (intention) ?

**VII.58.7** Ants eat you; pea-hens cut you into pieces. All declare rightly : "the poison of the (śarkota)scorpion is sapless.(also Ṛg. I.191.16)

य उभाभ्यां प्रहरसि पुच्छेन चास्येनि च। आस्ये३ न ते विषं किमु ते पुच्छधावसत् ॥८॥

यः । उभाभ्याम् । प्रऽहरसि । पुच्छेन । च । आस्येन । च ।
आस्ये । न । ते । विषम् । किम् । ऊं इति । ते । पुच्छऽधौ । असत् ॥ ८ ॥

(५९) एकोनषष्टितमं सूक्तम्
(१-२) द्वयृचस्यास्य सूक्तस्य वामदेव ऋषिः । सरस्वती देवता । जगती छन्दः ॥

यदाशसा वदतो मे विचुक्षुभे यद्याचमानस्य चरतो जनाँ अनु ।
यदात्मनि तन्वो मे विरिष्टं सरस्वती तदा पृणद्घृतेन ॥१॥
सप्त क्षरन्ति शिशवे मरुत्वते पित्रे पुत्रासो अप्यवीवृतन्नृतानि ।
उभे इदस्योभे अस्य राजत उभे यतेते उभे अस्य पुष्यतः ॥२॥

यत् । आऽशसा । वदतः । मे । विऽचुक्षुभे । यत् । याचमानस्य । चरतः । जनान् । अनु ।
यत् । आत्मनि । तन्वः । मे । विऽरिष्टम् । सरस्वती । तत् । आ । पृणत् । घृतेन ॥ १ ॥
सप्त । क्षरन्ति । शिशवे । मरुत्वते । पित्रे । पुत्रासः । अपि । अवीवृतन् । ऋतानि । उभे इति ।
इत् । अस्य । उभे इति । अस्य । राजतः । उभे इति । यतेते इति । उभे इति । अस्य । पुष्यतः ॥

(६०) षष्टितमं सूक्तम्
(१-२) द्वयृचस्यास्य सूक्तस्य कौरुपथिर्ऋषिः । मन्त्रोक्ता देवता । (१) प्रथमर्चो जगती, (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी ॥

इन्द्रावरुणा सुतपाविमं सुतं सोमं पिबतं मद्यं धृतव्रतौ ।
युवो रथो अध्वरो देववीतये प्रति स्वसरमुप यातु पीतये ॥१॥
इन्द्रावरुणा मधुमत्तमस्य वृष्णः सोमस्य वृषणा वृषेथाम् ।
इदं वामन्धः परिषिक्तमासद्यास्मिन्बर्हिषि मादयेथाम् ॥२॥

इन्द्रावरुणा । सुतऽपौ । इमम् । सुतम् । सोमम् । पिबतम् । मद्यम् । धृतऽव्रतौ ।
युवोः । रथः । अध्वरः । देवऽवीतये । प्रति । स्वसरम् । उप । यातु । पीतये ॥ १ ॥
इन्द्रावरुणा । मधुमत्ऽतमस्य । वृष्णः । सोमस्य । वृषणा । आ । वृषेथाम् ।
इदम् । वाम् । अन्धः । परिऽसिक्तम् । आऽसद्य । अस्मिन् । बर्हिषि । मादयेथाम् ॥ २ ॥

**VII.58.8** You attack with both, with your tail as well as with your mouth. There is no poison in your mouth. What, then will there be at the root - receptacle of your tail ?

## Sarasvatī

**VII.59.1** Whatever has got agitated in my spirit while speaking violently, or while following people as a suppliant, and whatever defect is there in my person, may the doctoress divine (Sarasvatī) heal that up.

**VII.59.2** Seven flow for the child full of vital breath; the sons deal with the father according to eternal laws. Both of them, verily belong to Him; both of them as His shine up; both of them put in effort; both of them, as His, prosper well. (Also Ṛg. X.13.5)

## Indra - Varuṇa Pair

**VII.60.1** O resplendent one and O venerable one, both fond of enjoying pressed out cure-juice (devotional bliss), may you observing the vows, enjoy this pressed out gladdening cure-juice (devotional bliss). May your unconquered chariot approach its resting place for the entertainment of the enlightened ones and for drinking cure-juice.

**VII.60.2** O resplendent one and O venerable one, both showerers of gifts, may you enjoy the sweetest and invigorating cure-juice and get invigorated. This if your viand poured out. Sit down on this grass-mat, enjoy and rejoice.

( ६१ ) एकषष्टितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य बादरायणिर्ऋषिः । अरिनाशनं देवता । अनुष्टुप् छन्दः ॥

यो नः शपादशपतः शपतो यश्च नः शपात् ।
वृक्ष इव विद्युता हत आ मूलादनु शुष्यतु ॥१॥

यः । नः । शपात् । अशपतः । शपतः । यः । च । नः । शपात् ।
वृक्षःऽइव । विऽद्युता । हतः । आ । मूलात् । अनु । शुष्यतु ॥ १ ॥

( ६२ ) द्विषष्टितमं सूक्तम्

(१–७) सप्तर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । रम्यगृहा वास्तोष्पतिश्च देवताः । (१) प्रथमर्चः परानुष्टुप्त्रिष्टुप्, (२–७) द्वितीयादिषण्णाश्चानुष्टुप् छन्दसी ॥

ऊर्जं बिभ्रद्वसुवनिः सुमेधा अघोरेण चक्षुषा मित्रियेण ।
गृहानैमि सुमना वन्दमानो रमध्वं मा बिभीत मत् ॥१॥
इमे गृहा मयोभुव ऊर्जस्वन्तः पयस्वन्तः ।
पूर्णा वामेन तिष्ठन्तस्ते नो जानन्त्वायतः ॥२॥
येषामध्येति प्रवसन्येषु सौमनसो बहुः ।
गृहानुप ह्वयामहे ते नो जानन्त्वायतः ॥३॥
उपहूता भूरिधनाः सखायः स्वादुसंमुदः ।
अक्षुध्या अतृष्या स्त गृहा मास्मद्बिभीतन ॥४॥

ऊर्जम् । बिभ्रत् । वसुऽवनिः । सुऽमेधाः । अघोरेण । चक्षुषा । मित्रियेण ।
गृहान् । आ । एमि । सुऽमनाः । वन्दमानः । रमध्वम् । मा । बिभीत । मत् ॥ १ ॥
इमे । गृहाः । मयःऽभुवः । ऊर्जस्वन्तः । पयस्वन्तः ।
पूर्णाः । वामेन । तिष्ठन्तः । ते । नः । जानन्तु । आऽयतः ॥ २ ॥
येषाम् । अधिऽएति । प्रऽवसन् । येषु । सौमनसः । बहुः ।
गृहान् । उप । ह्वयामहे । ते । नः । जानन्तु । आऽयतः ॥ ३ ॥
उपऽहूताः । भूरिऽधनाः । सखायः । स्वादुऽसंमुदः ।
अक्षुध्याः । अतृष्याः । स्त । गृहाः । मा । अस्मत् । बिभीतन ॥ ४ ॥

### Against enemy (ari-nāśanam)

**VII.61.1** Whoever curses (abuses) us, while we do not curse (abuse), and whoever curses (abuses) us, while we curse (abuses), may such a person dry up from the very root like a tree struck by the lightning.

### Houses - Vāstoṣpatiḥ

**VII.62.1** Goodly wise, full of vigour, having won riches, here I come to these my houses with mild and friendly looking ones, good-hearted and greeting. Rejoice; have no fear from me.

**VII.62.2** These are our houses, giving happiness, rich in food and milk, and standing full of good wealth. May they recognize us as we approach.

**VII.62.3** We are approaching the homes, of which a person travelling afar thinks time and again and where there is lot of affection. We remember and recognize them. May they also recognize us. (Also Yv. III.42)

**VII.62.4** Invited and assembled are here very wealthy friends who enjoy tasty meals. May you ever remain free from hunger and thirst; O houses, have no fear from us (be not afraid of us).

उपहूता इह गाव उपहूता अजावयः ।
अथो अन्नस्य कीलाल उपहूतो गृहेषु नः ॥५॥
सूनृतावन्तः सुभगा इरावन्तो हसामुदाः ।
अतृष्या अक्षुध्या स्त गृहा मास्मद्बिभीतन ॥६॥
इहैव स्त मानु गात विश्वा रूपाणि पुष्यत ।
ऐष्यामि भद्रेणा सह भूयांसो भवता मया ॥७॥

उपऽहूताः । इह । गावः । उपऽहूताः । अजऽअवयः ।
अथो इति । अन्नस्य । कीलालः । उपऽहूतः । गृहेषु । नः ॥ ५ ॥
सूनृताऽवन्तः । सुऽभगाः । इराऽवन्तः । हसामुदाः ।
अतृष्याः । अक्षुध्याः । स्त । गृहाः । मा । अस्मत् । बिभीतन ॥ ६ ॥
इह । एव । स्त । मा । अनु । गात । विश्वा । रूपाणि । पुष्यत ।
आ । एष्यामि । भद्रेण । सह । भूयांसः । भवत । मया ॥ ७ ॥

( ६३ ) त्रिषष्टितमं सूक्तम्

(१-२) द्वयृचस्यास्य सूक्तस्याथर्वा ऋषिः । अग्निर्देवता । अनुष्टुप् छन्दः ॥

यदग्ने तपसा तप उपतप्यामहे तपः ।
प्रियाः श्रुतस्य भूयास्मायुष्मन्तः सुमेधसः ॥१॥
अग्ने तपस्तप्यामह उप तप्यामहे तपः । श्रुतानि शृण्वन्तो वयमायुष्मन्तः सुमेधसः ॥२॥

यत् । अग्ने । तपसा । तपः । उपऽतप्यामहे । तपः ।
प्रियाः । श्रुतस्य । भूयास्म । आयुष्मन्तः । सुऽमेधसः ॥ १ ॥
अग्ने । तपः । तप्यामहे । उप । तप्यामहे । तपः ।
श्रुतानि । शृण्वन्तः । वयम् । आयुष्मन्तः । सुऽमेधसः ॥ २ ॥

**VII.62.5** I have found the cows in good condition and in good condition the goats and sheep have been brought to me. And the delicious foods abound in our home. (Also Yv. III.43)

**VII.62.6** May you ever remain full of pleasant words, full of good fortune, full of gladdening drinks, full of laughter and pleasure, free from hunger and thirst. O houses, be not afraid of us.

**VII.62.7** Remain just here. Do not come following me. Adorn yourselves with all the appearances. I shall come with excellent wealth. May you prosper with me.

## Agniḥ

**VII.63.1** Since O adorable Lord, we undergo the austerities, which can be considered austerity by austerities (tapasā tapah), may we become dear to holy learning, and long-living, as well as goodly wise.

**VII.63.2** O adorable Lord, we are practicing austerities; with determination we practice austerities. Listening the sacred texts, may we be long-living and goodly wise.

( ६४ ) चतुःषष्टितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य कश्यपो मरीचिर्ऋषिः । अग्निर्देवता । जगती छन्दः ॥

**अयमग्निः सत्पतिर्वृद्धवृष्णो रथीव पत्तीनजयत्पुरोहितः ।**
**नाभा पृथिव्यां निहितो दविद्युतदधस्पदं कृणुतां ये पृतन्यवः ॥१॥**

अयम् । अग्निः । सत्ऽपतिः । वृद्धऽवृष्णः । रथीऽइव । पत्तीन् । अजयत् । पुरःऽहितः ।
नाभा । पृथिव्याम् । निऽहितः । दविद्युतत् । अधःऽपदम् । कृणुताम् । ये । पृतन्यवः ॥१॥

( ६५ ) पञ्चषष्टितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य कश्यपो मरीचिर्ऋषिः । जातवेदा देवता । जगती छन्दः ॥

**पृतनाजितं सहमानमग्निमुक्थैर्हवामहे परमात्सधस्थात् ।**
**स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवोऽति दुरितान्यग्निः ॥१॥**

पृतनाऽजितम् । सहमानम् । अग्निम् । उक्थैः । हवामहे । परमात् । सधऽस्थात् ।
सः । नः । पर्षत् । अति । दुःऽगानि । विश्वा । क्षामत् । देवः । अति । दुःऽइतानि । अग्निः ॥

( ६६ ) षट्षष्टितमं सूक्तम्

(१-२) द्यृचस्यास्य सूक्तस्य यम ऋषिः । मन्त्रोक्ता निर्ऋतिर्वा देवता । (१) प्रथमर्चो भुरिगनुष्टुप्, (२) द्वितीयायाश्च न्यङ्कुसारिणी बृहती छन्दसी ॥

**इदं यत्कृष्णः शकुनिरभिनिष्पतन्नपीपतत् ।**
**आपो मा तस्मात्सर्वस्माद्दुरितात्पान्त्वंहसः ॥१॥**
**इदं यत्कृष्णः शकुनिरवामृक्षन्निर्ऋते ते मुखेन ।**
**अग्निर्मा तस्मादेनसो गार्हपत्यः प्र मुञ्चतु ॥२॥**

इदम् । यत् । कृष्णः । शकुनिः । अभिऽनिष्पतन् । अपीपतत् ।
आपः । मा । तस्मात् । सर्वस्मात् । दुःऽइतात् । पान्तु । अंहसः ॥ १ ॥
इदम् । यत् । कृष्णः । शकुनिः । अवऽअमृक्षत् । निःऽऋते । ते । मुखेन ।
अग्निः । मा । तस्मात् । एनसः । गार्हऽपत्यः । प्र । मुञ्चतु ॥ २ ॥

( ६७ ) सप्तषष्टितमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य शुक्र ऋषिः । अपामार्गवीरुद्देवता । अनुष्टुप् छन्दः ॥

**प्रतीचीनफलो हि त्वमपामार्ग रुरोहिथ ।**
**सर्वान्मच्छपथाँ अधि वरीयो यावया इतः ॥१॥**

प्रतीचीनऽफलः । हि । त्वम् । अपामार्ग । रुरोहिथ ।
सर्वान् । मत् । शपथान् । अधि । वरीयः । यवयाः । इतः ॥ १ ॥

**Agniḥ**

**VII.64.1** This fire-divine, the sustainer of the good, increased in might, leading in front, conquers just as a chariot-warrior conquers foot-soldiers. Being placed at the navel of the earth (i.e., the altar), this shines up. May he put them under foot, who want to invade us.

**Jātavedāḥ**

**VII.65.1** With our praise-songs, we call the fire-divine (adorable Lord), the conqueror of enemy-hordes, the overpowerer, form his highest abode. May he get us across all difficulties. May the shining fire-divine conduct us across the troubles.

**Āpaḥ**

**VII.66.1** What this black bird (the crow), flying all around, has dropped, may the waters save me from all that evil sin (woe and trouble).

**Agniḥ**

**VII.66.2** What this black bird (the crow), O perdition (Nirṛti), has touched me, as if, with your mouth, from that guilt (enasaḥ) may this house-hold fire (gārhaptyaḥ) acquit me.

**Apāmārgaḥ**

**VII.67.1** O plant (apāmārga - Achyyrantes aspera; literally one that wipes off), you have grown with retroverted fruit. May you drive all the abuses and curses away from me to the farthest distance from here.

यद्दुष्कृतं यच्छमलं यद्वा चेरिम पापया ।
त्वया तद्विश्वतोमुखापामार्गाप मृज्महे ॥२॥
श्यावदता कुनखिना बण्डेन यत्सहासिम ।
अपामार्ग त्वया वयं सर्वं तदप मृज्महे ॥३॥

यत् । दुःऽकृतम् । यत् । शमलम् । यत् । वा । चेरिम । पापया ।
त्वया । तत् । विश्वतःऽमुख । अपामार्ग । अप । मृज्महे ॥ २ ॥
श्यावऽदता । कुनखिना । बण्डेन । यत् । सह । आसिम ।
अपामार्ग । त्वया । वयम् । सर्वम् । तत् । अप । मृज्महे ॥ ३ ॥

( ६८ ) अष्टषष्टितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । ब्राह्मणो देवता । त्रिष्टुप् छन्दः ॥

यद्यन्तरिक्षे यदि वात आस यदि वृक्षेषु यदि वोलपेषु ।
यदश्रवन्पशव उद्यमानं तद्ब्राह्मणं पुनरस्मानुपैतु ॥१॥

यदि । अन्तरिक्षे । यदि । वाते । आस । यदि । वृक्षेषु । यदि । वा । उलपेषु ।
यत् । अश्रवन् । पशवः । उद्यमानम् । तत् । ब्राह्मणम् । पुनः । अस्मान् । उपऽएतु ॥१॥

( ६९ ) एकोनसप्ततितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । आत्मा देवता । पुरःपरोष्णिग्बृहती छन्दः ॥

पुनर्मैत्विन्द्रियं पुनरात्मा द्रविणं ब्राह्मणं च ।
पुनरग्नयो धिष्ण्या यथास्थाम कल्पयन्तामिहैव ॥१॥

पुनः । मा । आ । एतु । इन्द्रियम् । पुनः । आत्मा । द्रविणम् । ब्राह्मणम् । च ।
पुनः । अग्नयः । धिष्ण्याः । यथाऽस्थाम । कल्पयन्ताम् । इह । एव ॥ १ ॥

( ७० ) सप्ततितमं सूक्तम्

(१–२) द्व्यृचस्यास्य सूक्तस्य शन्तातिर्ऋषिः । सरस्वती देवता । (१) प्रथमर्चोऽनुष्टुप्, (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी ॥

सरस्वति व्रतेषु ते दिव्येषु देवि धामसु ।
जुषस्व हव्यमाहुतं प्रजां देवि ररास्व नः ॥१॥

सरस्वति । व्रतेषु । ते । दिव्येषु । देवि । धामऽसु ।
जुषस्व । हव्यम् । आऽहुतम् । प्रऽजाम् । देवि । ररास्व । नः ॥ १ ॥

**VII.67.2** Whatever mis-deed, whatever mis-conduct, or whatever act we have done with evil design, that we wipe-off with you, O apāmārga, having forces in all directions.

**VII.67.3** If we have lived with an important person, having black teeth (syāva-datā) and bad nails (kunakhinā), all that (guilt thus acquired), we wipe off with you, O apāmārga.

### Brāhmaṇam

**VII.68.1** If in the mid-space, if in the wind (vāta), if in the trees or if in the grasses it was, which the animals (wild as well as domestic) heard being spoken, may that divine knowledge (brāhmaṇam) come to us a gain.

### Ātman

**VII.69.1** May the vigour of sense-organs come to me again; again the soul (ātman), wealth and the divine knowledge. May the sacrificial fires flourish again in their proper place just here.

### Sarasvatī

**VII.70.1** O learning divine, in your pious observances in your heavenly abodes, may you accept these offered oblations; O deity, may you bless us with progeny.

इदं ते हव्यं घृतवत्सरस्वतीदं पितॄणां हविरास्यं यत् ।
इमानि त उदिता शंतमानि तेभिर्वयं मधुमन्तः स्याम ॥२॥

इदम् । ते । हव्यम् । घृतऽवत् । सरस्वति । इदम् । पितॄणाम् । हविः । आस्यम् । यत् ।
इमानि । ते । उत्ऽइता । शम्ऽतमानि । तेभिः । वयम् । मधुऽमन्तः । स्याम ॥ २ ॥

( ७१ ) एकसप्ततितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य शन्तातिर्ऋषिः । सरस्वती देवता । गायत्री छन्दः ॥

शिवा नः शंतमा भव सुमृडीका सरस्वति ।
मा ते युयोम संदृशः ॥१॥

शिवा । नः । शम्ऽतमा । भव । सुऽमृडीका । सरस्वति । मा । ते । युयोम । सम्ऽदृशः ॥१॥

( ७२ ) द्विसप्ततितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य शन्तातिर्ऋषिः । सुखं देवता । पथ्यापङ्क्तिश्छन्दः ॥

शं नो वातो वातु शं नस्तपतु सूर्यः ।
अहानि शं भवन्तु नः शं रात्री प्रति धीयतां शमुषा नो व्युच्छतु ॥१॥

शम् । नः । वातः । वातु । शम् । नः । तपतु । सूर्यः ।
अहानि । शम् । भवन्तु । नः । शम् । रात्री । प्रति । धीयताम् । शम् । उषाः । नः । वि । उच्छतु ॥

( ७३ ) त्रिसप्ततितमं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ताः श्येनो वा देवता । (१) प्रथमर्चस्त्रिष्टुप्, (२) द्वितीयाया अतिजगतीगर्भा जगती, (३) तृतीयायाः पुरःककुम्मत्यनुष्टुप्, (४-५) चतुर्थीपञ्चम्योश्चानुष्टुप् छन्दांसि ॥

यत्किं चासौ मनसा यच्च वाचा यज्ञैर्जुहोति हविषा यजुषा ।
तन्मृत्युना निर्ऋतिः संविदाना पुरा सत्यादाहुतिं हन्त्वस्य ॥१॥
यातुधाना निर्ऋतिरादु रक्षस्ते अस्य घ्नन्त्वनृतेन सत्यम् ।
इन्द्रेषिता देवा आज्यमस्य मथ्नन्तु मा तत्सं पादि यदसौ जुहोति ॥२॥

यत् । किम् । च । असौ । मनसा । यत् । च । वाचा । यज्ञैः । जुहोति । हविषा । यजुषा ।
तत् । मृत्युना । निःऽऋतिः । सम्ऽविदाना । पुरा । सत्यात् । आऽहुतिम् । हन्तु । अस्य ॥ १ ॥
यातुऽधानाः । निःऽऋतिः । आत् । ऊं इति । रक्षः । ते । अस्य । घ्नन्तु । अनृतेन । सत्यम् । इन्द्रऽइषिताः । देवाः । आज्यम् । अस्य । मथ्नन्तु । मा । तत् । सम् । पादि । यत् । असौ । जुहोति ॥२॥

**VII.70.2** O learning divine, this is your oblations rich in purified butter; this is the oblation for the elders; it is nice to eat. These most pleasing oblations have come up to you; with them. May we become full of sweetness.

**VII.71.1** O speech divine, may you be auspicious bestower of happiness, and gracious to us. May we never be out of your pleasing sight.

## Sukham (Happiness)

**VII.72.1** May the wind (vātaḥ) blow in happiness for us; may the Sun warm up for our happiness. May the days be full of happiness to us. May the night bring happiness. May the dawn brighten up with happiness for us.

## Śyena and others (Mantroktāḥ)

**VII.73.1** Whatever that person offers as an oblation with his mind, speech, sacrifices, offerings and with the sacrificial formulas, may the perdition (nir-ṛti), in accord with death, kill his offering before it comes to be true.

**VII.73.2** May the painful viruses, the perdition and the germs of the wasting diseases, all of them strike and destroy his accomplishment with untruth. May the bounties of Nature, urged by the resplendent Lord, ruin his purified butter. May that not be achieved for which he performs the sacrifice.

अजिराधिराजौ श्येनौ संपातिनाविव ।
आज्यं पृतन्यतो हतां यो नः कश्चाभ्यघायति ॥३॥
अपाञ्चौ त उभौ बाहू अपि नह्याम्यास्यम् ।
अग्नेर्देवस्य मन्युना तेन तेवधिषं हविः ॥४॥
अपि नह्यामि ते बाहू अपि नह्याम्यास्यम् ।
अग्नेर्घोरस्य मन्युना तेन तेवधिषं हविः ॥५॥

आजिरऽअधिराजौ । श्येनौ । संपातिनौऽइव ।
आज्यम् । पृतन्यतः । हताम् । यः । नः । कः । च । अभिऽअघायति ॥ ३ ॥
अपाञ्चौ । ते । उभौ । बाहू इति । अपि । नह्यामि । आस्यम् ।
अग्नेः । देवस्य । मन्युना । तेन । ते । अवधिषम् । हविः ॥ ४ ॥
अपि । नह्यामि । ते । बाहू इति । अपि । नह्यामि । आस्यम् ।
अग्नेः । घोरस्य । मन्युना । तेन । ते । अवधिषम् । हविः ॥ ५ ॥

( ७४ ) चतुःसप्ततितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । अग्निर्देवता । अनुष्टुप् छन्दः ॥

परि त्वाग्ने पुरं वयं विप्रं सहस्य धीमहि ।
धृषद्वर्णं दिवेदिवे हन्तारं भङ्गुरावतः ॥१॥

परि । त्वा । अग्ने । पुरम् । वयम् । विप्रम् । सहस्य । धीमहि ।
धृषत्ऽवर्णम् । दिवेऽदिवे । हन्तारम् । भङ्गुरऽवतः ॥ १ ॥

( ७५ ) पञ्चसप्ततितमं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । इन्द्रो देवता । (१) प्रथमर्चोऽनुष्टुप्, (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी ॥

उत्तिष्ठतावं पश्यतेन्द्रस्य भागमृत्वियम् ।
यदि श्रातं जुहोतन यद्यश्रातं ममत्तन ॥१॥

उत् । तिष्ठत । अव । पश्यत । इन्द्रस्य । भागम् । ऋत्वियम् ।
यदि । श्रातम् । जुहोतन । यदि । अश्रातम् । ममत्तन ॥ १ ॥

**VII.73.3** May the two overlords, excellently mobile like two eagles swooping simultaneously on their prey, destroy the purified butter of the enemy, who invades us and whoever wants to commit sin against us.

**VII.73.4** I bind both your arms behind your back; I shut your mouth with a bandage. With that wrath of the victorious adorable Lord, I destroy your provisions (of the sacrifice).

**VII.73.5** I bind both your arms; I shut your mouth with a bandage. With the wrath of the furious adorable Lord, I destroy your provisions (of the sacrifice).

## Agniḥ

**VII.74.1** O adorable Lord, full of strength, in every respect we meditate on you; who are sustainer of all, wise, of unbearable glare, and destroyer of fickle-mindedness. (Also Yv. XI.26)

## Indraḥ

**VII.75.1** Rise; look at the share of the resplendent Lord, appropriate for the season. If it is cooked, offer it to Him; if it is uncooked, go on cooking. (Also Ṛg. X.179.1)

श्रातं हविरो ष्विन्द्र प्र याहि जगाम सूरो अध्वनो वि मध्यम् ।
परि त्वासते निधिभिः सखायः कुलपा न व्राजपतिं चरन्तम् ॥२॥

श्रातम् । हविः । ओ इति । सु । इन्द्र । प्र । याहि । जगाम । सूरः । अध्वनः । वि । मध्यम् ।
परि । त्वा । आसते । निधिऽभिः । सखायः । कुलऽपाः । न । व्राजऽपतिम् । चरन्तम् ॥ २ ॥

( ७६ ) षट्सप्ततितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः ॥

श्रातं मन्य ऊधनि श्रातमग्नौ सुश्रृतं मन्ये तदृतं नवीयः ।
माध्यन्दिनस्य सवनस्य दध्नः पिबेन्द्र वज्रिन्पुरुकृज्जुषाणः ॥१॥

श्रातम् । मन्ये । ऊधनि । श्रातम् । अग्नौ । सुऽश्रृतम् । मन्ये । तत् । ऋतम् । नवीयः ।
माध्यन्दिनस्य । सवनस्य । दध्नः । पिब । इन्द्र । वज्रिन् । पुरुऽकृत् । जुषाणः ॥१॥

( ७७ ) सप्तसप्ततितमं सूक्तम्

(१–११) एकादशर्चस्यास्य सूक्तस्याथर्वा ऋषिः । घर्मोऽश्विनौ, प्रत्यृचं मन्त्रोक्ता वा देवताः । (१, ४, ६) प्रथमाचतुर्थीषष्ठीनामृचां जगती, (२) द्वितीयायाः पथ्याबृहती, (३, ५, ७–११) तृतीयापञ्चम्योः सप्तम्यादिपञ्चानाञ्च त्रिष्टुप् छन्दांसि ॥

समिद्धो अग्निर्वृषणा रथी दिवस्तप्तो घर्मो दुह्यते वामिषे मधु ।
वयं हि वां पुरुदमासो अश्विना हवामहे सधमादेषु कारवः ॥१॥
समिद्धो अग्निरश्विना तप्तो वां घर्म आ गतम् ।
दुह्यन्ते नूनं वृषणेह धेनवो दस्रा मदन्ति वेधसः ॥२॥
स्वाहाकृतः शुचिर्देवेषु यज्ञो यो अश्विनोश्चमसो देवपानः ।
तमु विश्वे अमृतासो जुषाणा गन्धर्वस्य प्रत्यास्ना रिहन्ति ॥३॥

सम्ऽइद्धः । अग्निः । वृषणा । रथी । दिवः । तप्तः । घर्मः । दुह्यते । वाम् । इषे । मधु ।
वयम् । हि । वाम् । पुरुऽदमासः । अश्विना । हवामहे । सधऽमादेषु । कारवः ॥१॥
सम्ऽइद्धः । अग्निः । अश्विना । तप्तः । वाम् । घर्मः । आ । गतम् ।
दुह्यन्ते । नूनम् । वृषणा । इह । धेनवः । दस्रा । मदन्ति । वेधसः ॥ २ ॥
स्वाहाऽकृतः । शुचिः । देवेषु । यज्ञः । यः । अश्विनोः । चमसः । देवऽपानः ।
तम् । ऊं इति । विश्वे । अमृतासः । जुषाणाः । गन्धर्वस्य । प्रति । आस्ना । रिहन्ति ॥३॥

**VII.75.2** Your oblations is cooked. O resplendent Lord, may you come fast. The Sun has reached about mid-point of his way. Friends serve you with their treasures, just as heads of house-holds serve their travelling chieftain (vrājapatim) (Also Ṛg. X.179.2)

**VII.76.1** I think cooked what is in the udder. What is cooked on fire, that I consider well-cooked. That becomes pure and fresher. May you, O resplendent one, engaged in many activities, wielder of punitive weapon, drink this (mādhyandina) midday oblation (sava) of curd to your pleasure. (Also Ṛg. X.179.3)

**Gharma - Aśvinau**

**VII.77.1** O your two mighty heroes, kindled is the fire, the charioteer of heaven. The libation in the cauldron is heated. It is milked sweet for your food. O twin- healers, we of many houses, skilled in arranging sacrificial feasts, call both of you.

**VII.77.2** O twin-healers, kindled is the fire. Libation for you (in the cauldron) is heated. May both of you come (to enjoy the oblation). O mighty heroes, now cows are being milked here (for you). O you handsome to look at, the knowledgeable people are reveling (here). (Also the first-half : Yv. XX.55)

**VII.77.3** A sacrifice, in which good dedications are made, is considered excellent (unblemished) by the enlightened ones. It is, as if a bowl from which the twin-healers drink their divine beverage. All the immortals also enjoying that (bowl) with pleasure, lick severally through the mouth of the (sacrificial) fire (gandharva).

यदुस्त्रियास्वाहुतं घृतं पयोयं स वामश्विना भाग आ गतम् ।
माध्वी धर्तारा विदथस्य सत्पती तप्तं घर्मं पिबतं रोचने दिवः ॥४॥
तप्तो वां घर्मो नक्षतु स्वहोता प्र वामध्वर्युश्चरतु पयस्वान् ।
मधोर्दुग्धस्याश्विना तनाया वीतं पातं पयस उस्त्रियायाः ॥५॥
उप द्रव पयसा गोधुगोषमा घर्मे सिञ्च पय उस्त्रियायाः ।
वि नाकमख्यत्सविता वरेण्योनुप्रयाणमुषसो वि राजति ॥६॥

उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम् ।
श्रेष्ठं सवं सविता साविषन्नोभीद्धो घर्मस्तदु षु प्र वोचत् ॥७॥
हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसा न्यागन् ।
दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ॥८॥
जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुप याहि विद्वान् ।
विश्वा अग्ने अभियुजो विहत्य शत्रूयतामा भरा भोजनानि ॥९॥

यत् । उस्त्रियासु । आऽहुतम् । घृतम् । पयः । अयम् । सः । वाम् । अश्विना । भागः । आ । गतम् ।
माध्वी इति । धर्तारा । विदथस्य । सत्पती इति सत्ऽपती । तप्तम । घर्मम् । पिबतम् ।
रोचने । दिवः ॥ ४ ॥
तप्तः । वाम् । घर्मः । नक्षतु । स्वऽहोता । प्र । वाम् । अध्वर्युः । चरतु । पयस्वान् ।
मधोः । दुग्धस्य । अश्विना । तनायाः । वीतम् । पातम् । पयसः । उस्त्रियायाः ॥ ५ ॥
उप । द्रव । पयसा । गोऽधुक् । ओषम् । आ । घर्मे । सिञ्च । पयः । उस्त्रियायाः ।
वि । नाकम् । अख्यत् । सविता । वरेण्यः । अनुऽप्रयानम् । उषसः । वि । राजति ॥ ६ ॥
उप । ह्वये । सुऽदुघाम् । धेनुम् । एताम् । सुऽहस्तः । गोऽधुक् । उत । दोहत् । एनाम् ।
श्रेष्ठम् । सवम् । सविता । साविषत् । नः । अभिऽइद्धः । घर्मः । तत् । ऊं इति । सु । प्र । वोचत् ॥७॥
हिङ्ऽकृण्वती । वसुऽपत्नी । वसूनाम् । वत्सम् । इच्छन्ती । मनसा । निऽआगन् ।
दुहाम् । अश्विऽभ्याम् । पयः । अघ्न्या । इयम् । सा । वर्धताम् । महते । सौभगाय ॥ ८ ॥
जुष्टः । दमूनाः । अतिथिः । दुरोणे । इमम् । नः । यज्ञम् । उप । याहि । विद्वान् ।
विश्वाः । अग्ने । अभिऽयुजः । विऽहत्य । शत्रुऽयताम् । आ । भर । भोजनानि ॥९॥

**VII.77.4** What milk, rich in butter, was there in the cows, that has been poured (in the cauldron); O twin-healers, that, your share, is here. Please come. O full of sweetness, sustainers of the sacrifice, protectors of the good, drink the warm libation under the shine of the sky.

**VII.77.5** May the warm, self-offering libation come to you. May the offerer priest, with plenty of milk, come to you. O twin-healers, may you eat (the preparations of) the sweetened milk of the stout (cow) and drink the milk of the ruddy cow.

**VII.77.6** O milker of cow, make haste and come here with milk. Pour the milk of the ruddy cow into the cauldron. The adorable creator illumines the heaven's high vault and continues to shine even after the departure of the Dawn (the first flashes of the conscience). (Also Yv. XII.9)

**VII.77.7** I call upon that easily milching cow. A skilful-handed milker shall surely milk her. May the Impeller (Savitṛ) impel us the best impulse. The hot drink is already energized. He should kindly make this announcement now. (Also Ṛg. I.164.26)

**VII.77.8** Lowing (hiñ-kṛ) mistress of good things, seeking her calf with her mind, has come in. Let this inviolable one (aghnyā) yield mild for the Aśvin-divine pair. Let her increase into great nice fortune. (Also Ṛg. I.164.27)

**VII.77.9** O adorable Lord (Agne), You are loving, generous and honoured as respectable guest an our homes. May you come to bless our fire-ritual. May you having scattered all our adversaries, bring to us the possessions of our foe-men. (Also Ṛg. V.4.5)

अग्ने शर्धं महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु ।
सं जास्पत्यं सुयममा कृणुष्व शत्रूयतामभि तिष्ठा महांसि ॥१०॥
सूयवसाद्भगवती हि भूया अधा वयं भगवन्तः स्याम ।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ॥११॥

अग्ने । शर्धं । महते । सौभगाय । तव । द्युम्नानि । उत्ऽतमानि । सन्तु ।
सम् । जाःऽपत्यम् । सुऽयमम् । आ । कृणुष्व । शत्रुऽयताम् । अभि । तिष्ठ । महांसि ॥१०॥
सुयवसऽअत् । भगऽवती । हि । भूयाः । अध । वयम् । भगऽवन्तः । स्याम ।
अद्धि । तृणम् । अघ्न्ये । विश्वऽदानीम् । पिब । शुद्धम् । उदकम् । आऽचरन्ती ॥ ११ ॥

( ७८ ) अष्टसप्ततितमं सूक्तम्

(१–४) चतुर्ऋचस्यास्य सूक्तस्याथर्वाङ्गिरा ऋषिः । मन्त्रोक्ता जातवेदा वा देवता । अनुष्टुप् छन्दः ॥

अपचितां लोहिनीनां कृष्णा मातेति शुश्रुम ।
मुनेर्देवस्य मूलेन सर्वा विध्यामि ता अहम् ॥१॥
विध्याम्यासां प्रथमां विध्याम्युत मध्यमाम् ।
इदं जघन्यामासामा च्छिनद्मि स्तुकामिव ॥२॥
त्वाष्ट्रेणाहं वचसा वि त ईर्ष्याममीमदम् ।
अथो यो मन्युष्टे पते तमु ते शमयामसि ॥३॥
व्रतेन त्वां व्रतपते समक्तो विश्वाहा सुमना दीदिहीह ।
तं त्वा वयं जातवेदः समिद्धं प्रजावन्त उप सदेम सर्वे ॥४॥

अपऽचिताम् । लोहिनीनाम् । कृष्णा । माता । इति । शुश्रुम ।
मुनेः । देवस्य । मूलेन । सर्वाः । विध्यामि । ताः । अहम् ॥ १ ॥
विध्यामि । आसाम् । प्रथमाम् । विध्यामि । उत । मध्यमाम् ।
इदम् । जघन्याम् । आसाम् । आ । छिनद्मि । स्तुकाम्ऽइव ॥ २ ॥
त्वाष्ट्रेण । अहम् । वचसा । वि । ते । ईर्ष्याम् । अमीमदम् ।
अथो इति । यः । मन्युः । ते । पते । तम् । ऊं इति । ते । शमयामसि ॥ ३ ॥
व्रतेन । त्वाम् । व्रतऽपते । सम्ऽअक्तः । विश्वाहा । सुऽमनाः । दीदिहि । इह ।
तम् । त्वा । वयम् । जातऽवेदः । सम्ऽइद्धम् । प्रजाऽवन्तः । उप । सदेम । सर्वे ॥ ४ ॥

**VII.77.10** May you repress, O fire-divine, our foes to ensure us our great prosperity. May your effulgent splendour be excellent. May you preserve in concord the relation of man and wife, and may you overpower the energies of our adversaries. (Also Ṛg. V.28.33; Yv.XXXIII.12)

**VII.77.11** Come, O cow; may you be rich (in milk), having been well-fed on abundant fodder from the grassy meadows. May you eat grass at all seasons,and (roaming at will) drink pure and healthy water. (Also Ṛg. I.164.40) (Aghnyā - inviolable one, a synonym for cow)

**As in verses (mantroktāḥ)**

**VII.78.1** Of the red glandular swellings (apachit), the black one is the mother, thus we have heard. With the root of the divine muni herb, I pierce all of them.

**VII.78.2** I pierce the first of them; also I pierce the midmost of them; and here I pierce the hindermost of them thoroughly like a knot of wool. (stukām)

**VII.78.3** With the words of the universal mechanic (Tvaṣṭṛ), I have quelled your jealousy. Thereafter, O husband, whatever anger you have, that also we pacify.

**Jatavedāḥ**

**VII.78.4** O Lord of vows, adorned with vow, may you shine every day with friendly feeling. You as such, so kindled and augmented, O omniscient (Jātaveda) may we all, along with our progeny, wait upon.

( ७९ ) एकोनाशीतितमं सूक्तम्
(१-२) द्वयृचस्यास्य सूक्तस्योपरिबभ्रव ऋषिः । अघ्न्या देवता । (१) प्रथमर्चस्त्रिष्टुप् ,
(२) द्वितीयायाश्च त्र्यवसाना भुरिक्पथ्यापङ्क्तिश्छन्दसी ॥

प्रजावतीः सूयवसे रुशन्तीः शुद्धा अपः सुप्रपाणे पिबन्तीः ।
मा व स्तेन ईशत माघशंसः परि वो रुद्रस्य हेतिर्वृणक्तु ॥१॥
पदज्ञा स्थ रमतयः संहिता विश्वनाम्नीः । उप मा देवीर्देवेभिरेत ।
इमं गोष्ठमिदं सदो घृतेनास्मान्त्समुक्षत ॥२॥

प्रजाऽवतीः । सुऽयवसे । रुशन्तीः । शुद्धाः । अपः । सुऽप्रपाने । पिबन्तीः ।
मा । वः । स्तेनः । ईशत । मा । अघऽशंसः । परि । वः । रुद्रस्य । हेतिः । वृणक्तु ॥ १ ॥
पदऽज्ञाः । स्थ । रमतयः । सम्ऽहिताः । विश्वऽनाम्नीः । उप । मा । देवीः । देवेभिः । आ । इत ।
इमम् । गोऽस्थम् । इदम् । सदः । घृतेन । अस्मान् । सम् । उक्षत ॥ २ ॥

( ८० ) अशीतितमं सूक्तम्
(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । अपचिद्भैषज्यं देवता । (१) प्रथमर्चो विराडनुष्टुप् ,
(२) द्वितीयायाः परोष्णिक् , (३-४) तृतीयाचतुर्थ्योश्चानुष्टुप् छन्दांसि ॥

आ सुस्रसः सुस्रसो असतीभ्यो असत्तराः । सेहोररसतरा लवणाद्विक्लेदीयसीः ॥१॥
या ग्रैव्या अपचितोथो या उपपक्ष्याः ।
विजाम्नि या अपचितः स्वयंस्रसः ॥२॥
यः कीकसाः प्रशृणाति तलीद्यमवतिष्ठति ।
निर्हास्तं सर्वं जायान्यं यः कश्च ककुदि श्रितः ॥३॥
पक्षी जायान्यः पतति स आ विशति पूरुषम् ।
तदक्षितस्य भेषजमुभयोः सुक्षतस्य च ॥४॥

आ । सुऽस्रसः । सुऽस्रसः । असतीभ्यः । असत्ऽतराः ।
सेहोः । अरसऽतराः । लवणात् । विऽक्लेदीयसीः ॥ १ ॥
याः । ग्रैव्याः । अपऽचितः । अथो इति । याः । उपऽपक्ष्याः ।
विऽजाम्नि । याः । अपऽचितः । स्वयम्ऽस्रसः ॥ २ ॥
यः । कीकसाः । प्रऽशृणाति । तलीद्यम् । अवऽतिष्ठति ।
निः । हाः । तम् । सर्वम् । जायान्यम् । यः । कः । च । ककुदि । श्रितः ॥ ३ ॥
पक्षी । जायान्यः । पतति । सः । आ । विशति । पुरुषम् ।
तत् । अक्षितस्य । भेषजम् । उभयोः । सुऽक्षतस्य । च ॥ ४ ॥

### Aghnyāḥ (Cows)

**VII.79.1** Rich in progeny, shining in good pasture, drinking pure and healthy water at a good water-furnishing place, let no thief steal you away, nor the evil plotter take the possession of you. Let Rudra's weapon (missile,hetiḥ) avoid you (Also Av. IV.21.7)

**VII.79.2** O playful cows, you know this place; you stay together, called by all the names. Having divine qualities, may you come to me with the enlightened ones. May you make this cow-stall, this house as well as us replete with purified butter.

### Apacid Bhaiṣ-ajyam

**VII.80.1** Oozing more even than the much-oozing, more malignant than the malignant, drier than sehu, more perspiring (vikeledīyasīḥ) even than the salt.

**VII.80.2** The glandular swellings, which are on the neck, or those in the arm-pits, and the glandular swellings, which are on the groins (perineum), are self-oozing (Svayam-srasaḥ).

### Jāyānyā (Through wife)

**VII.80.3** The consumptive disease (got through wife), which reaches the ribs, or which settles down in the soles (talīdi) or whatsoever has set in the back (kakudi), all that, may you thrust out.

**VII.80.4** The winged consumptive disease flies. That enters a man. That renowned one is a remedy for both, the one of short duration and the chronic.

( ८१ ) एकाशीतितमं सूक्तम्

(१-२) द्रपृषस्यास्य सूक्तस्याथर्वा ऋषिः । जायान्य इन्द्रश्च देवते । (१) प्रथमर्चो भुरिगनुष्टुप्, (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी ॥

विम्र वै ते जायान्य जानं यतो जायान्य जायसे ।
कथं ह तत्र त्वं हनो यस्य कृण्मो हविर्गृहे ॥१॥
धृषत्पिब कलशे सोममिन्द्र वृत्रहा शूर समरे वसूनाम् ।
माध्यन्दिने सवन आ वृषस्व रयिष्ठानो रयिमस्मासु धेहि ॥२॥

विम्र । वै । ते । जायान्य । जानम् । यतः । जायान्य । जायसे ।
कथम् । ह । तत्र । त्वम् । हनः । यस्य । कृण्मः । हविः । गृहे ॥ १ ॥
धृषत् । पिब । कलशे । सोमम् । इन्द्र । वृत्रऽहा । शूर । समऽअरे । वसूनाम् ।
माध्यन्दिने । सवने । आ । वृषस्व । रयिऽस्थानः । रयिम् । अस्मासु । धेहि ॥ २ ॥

( ८२ ) द्वयशीतितमं सूक्तम्

(१-३) वृषस्यास्य सूक्तस्याङ्गिरा ऋषिः । मरुतो देवताः । (१) प्रथमर्चस्त्रिपदा गायत्री, (२) द्वितीयायास्त्रिष्टुप्, (३) तृतीयायाश्च जगती छन्दांसि ॥

सांतपना इदं हविर्मरुतस्तज्जुजुष्टन । अस्माकोती रिशादसः ॥१॥
यो नो मर्तो मरुतो दुर्हृणायुस्तिरश्चित्तानि वसवो जिघांसति ।
द्रुहः पाशान्प्रति मुञ्चतां स तपिष्ठेन तपसा हन्तना तम् ॥२॥
संवत्सरीणा मरुतः स्वर्का उरुक्षयाः सगणा मानुषासः ।
ते अस्मत्पाशान्प्र मुञ्चन्त्वेनसः सांतपना मत्सरा मादयिष्णवः ॥३॥

साम्ऽतपनाः । इदम् । हविः । मरुतः । तत् । जुजुष्टन । अस्माक । ऊती । रिशादसः ॥ १ ॥
यः । नः । मर्तः । मरुतः । दुःऽहृणायुः । तिरः । चित्तानि । वसवः । जिघांसति ।
द्रुहः । पाशान् । प्रति । मुञ्चताम् । सः । तपिष्ठेन । तपसा । हन्तन । तम् ॥ २ ॥
सम्ऽवत्सरीणाः । मरुतः । सुऽअर्काः । उरुऽक्षयाः । सऽगणाः । मानुषासः ।
ते । अस्मत् । पाशान् । प्र । मुञ्चन्तु । एनसः । साम्ऽतपनाः । मत्सराः । मादयिष्णवः ॥३॥

**VII.81.1** O consumptive disease (got through wife), we know your origin, wherefrom, O consumptive disease, you are born. How could you smite there, in whose house we perform sacrifice?

## Indraḥ

**VII.81.2** O resplendent one, O brave killer of evil enemy in the battle for treasures, may you drink the curative juice from the jug unhesitating. At the midday libation, may you drink yourself full. Being a store of riches, may you confirm riches in us.

## Marutaḥ

**VII.82.1** O storm-troopers, full of fiery heat, this is the offering; accept and enjoy it. O destroyers of the enemy, be our protection.

**VII.82.2** O storm-troopers, the rehabilitators whosoever a mortal, full of anger against us, wants to smite us, beyond our thought, let him put on the fetters of malice; kill him with the most tormenting weapon.

**VII.82.3** The storm-troopers, coming every year, well-fed, dwelling in big houses, trooped in (their respective) units, and humane, may they, full of fiery heat, rejoicing and pleasing all, the bonds of sin from us.

( ८३ ) त्र्यशीतितमं सूक्तम्

(१-२) द्वयृचस्यास्य सूक्तस्याथर्वा ऋषिः । अग्निर्देवता । (१) प्रथमर्चः परोष्णिक्, (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी ॥

वि ते मुञ्चामि रशनां वि योक्त्रं वि नियोजनम् । इहैव त्वमजस्र एध्यग्ने ॥१॥

अस्मै क्षत्राणि धारयन्तमग्ने युनज्मि त्वा ब्रह्मणा दैव्येन ।
दीदिह्यस्मभ्यं द्रविणेह भद्रं प्रेमं वोचो हविर्दां देवतासु ॥२॥

वि । ते । मुञ्चामि । रशनाम् । वि । योक्त्रम् । वि । निऽयोजनम् ।
इह । एव । त्वम् । अजस्रः । एधि । अग्ने ॥ १ ॥

अस्मै । क्षत्राणि । धारयन्तम् । अग्ने । युनज्मि । त्वा । ब्रह्मणा । दैव्येन ।
दीदिहि । अस्मभ्यम् । द्रविणा । इह । भद्रम् । प्र । इमम् । वोचः । हविःऽदाम् । देवतासु ॥ २ ॥

( ८४ ) चतुरशीतितमं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । अमावास्या देवता । (१) प्रथमर्चो जगती, (२-४) द्वितीयादितृचस्य च त्रिष्टुप् छन्दसी ॥

यत्ते देवा अकृण्वन्भागधेयममावास्ये संवसन्तो महित्वा ।
तेना नो यज्ञं पिपृहि विश्ववारे रयिं नो धेहि सुभगे सुवीरम् ॥१॥

अहमेवास्म्यमावास्या३ मामा वसन्ति सुकृतो मयीमे ।
मयि देवा उभये साध्याश्चेन्द्रज्येष्ठाः समगच्छन्त सर्वे ॥२॥

आगन्रात्री संगमनी वसूनामूर्जं पुष्टं वस्वावेशयन्ती ।
अमावास्यायै हविषा विधेमोर्जं दुहाना पयसा न आगन् ॥३॥

यत् । ते । देवाः । अकृण्वन् । भागऽधेयम् । अमाऽवास्ये । सम्ऽवसन्तः । महिऽत्वा ।
तेन । नः । यज्ञम् । पिपृहि । विश्वऽवारे । रयिम् । नः । धेहि । सुऽभगे । सुऽवीरम् ॥ १ ॥

अहम् । एव । अस्मि । अमाऽवास्या३ । माम् । आ । वसन्ति । सुऽकृतः । मयि । इमे ।
मयि । देवाः । उभये । साध्याः । च । इन्द्रऽज्येष्ठाः । सम् । अगच्छन्त । सर्वे ॥ २ ॥

आ । अगन् । रात्री । सम्ऽगमनी । वसूनाम् । ऊर्जम् । पुष्टम् । वसु । आऽवेशयन्ती ।
अमाऽवास्या३यै । हविषा । विधेम । ऊर्जम् । दुहाना । पयसा । नः । आ । अगन् ॥ ३ ॥

### Agniḥ

**VII.83.1** I unfasten your cord, unfasten your yoke, unfasten your halter. O fire - divine, may you flourish here for ever.

**VII.83.2** O fire - divine, I unite you, who hold dominion for this sacrificer, with enlightening knowledge. May you grant us riches here. May you declare this man to be a good offerer of oblations to the enlightened ones (devatāsu).

### Amāvasyā (New Moon's night)

**VII.84.1** What share of oblations the enlightened ones, living together in greatness, have allotted to you, O new moon's night, with that may you lead our sacrifice to completion. O desired by all (viśvavāre), blessed one, grant us riches with brave sons.

**VII.84.2** I,verily, am the new moon's night. The men of pious actions dwell in me; yes, in me they dwell. In me both, the enlightened ones, whose chief is the resplendent self, and those who are on the way to accomplishement, all meet together.

**VII.84.3** May the night, bestower of riches, come granting us vigour, nourishment and riches. To the new moon's night, we offer oblations; yielding strength with milk, may she come to us.

अमावास्ये न त्वदेतान्यन्यो विश्वा रूपाणि परिभूर्जजान ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥४॥

अमाऽवास्ये । न । त्वत् । एतानि । अन्यः । विश्वा । रूपाणि । परिऽभूः । जजान ।
यत्ऽकामाः । ते । जुहुमः । तत् । नः । अस्तु । वयम् । स्याम । पतयः । रयीणाम् ॥ ४ ॥

( ८५ ) पञ्चाशीतितमं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । (१-२, ४) प्रथमाद्वितीयाचतुर्थीनामृचां पौर्णमासी, (३) तृतीयायाश्च प्रजापतिर्देवते । (१, ३-४) प्रथमातृतीयाचतुर्थीनां त्रिष्टुप्, (२) द्वितीयायाश्चानुष्टुप् छन्दसी ॥

पूर्णा पश्चादुत पूर्णा पुरस्तादुन्मध्यतः पौर्णमासी जिगाय ।
तस्यां देवैः संवसन्तो महित्वा नाकस्य पृष्ठे समिषा मदेम ॥१॥
वृषभं वाजिनं वयं पौर्णमासं यजामहे ।
स नो ददात्वक्षितां रयिमनुपदस्वतीम् ॥२॥
प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिभूर्जजान ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥३॥
पौर्णमासी प्रथमा यज्ञियासीदह्नां रात्रीणामतिशर्वरेषु ।
ये त्वां यज्ञैर्यज्ञिये अर्धयन्त्यमी ते नाके सुकृतः प्रविष्टाः ॥४॥

पूर्णा । पश्चात् । उत । पूर्णा । पुरस्तात् । उत् । मध्यतः । पौर्णऽमासी । जिगाय ।
तस्याम् । देवैः । सम्ऽवसन्तः । महिऽत्वा । नाकस्य । पृष्ठे । सम् । इषा । मदेम ॥ १ ॥
वृषभम् । वाजिनम् । वयम् । पौर्णऽमासम् । यजामहे ।
सः । नः । ददातु । अक्षिताम । रयिम् । अनुपऽदस्वतीम् ॥ २ ॥
प्रजाऽपते । न । त्वत् । एतानि । अन्यः । विश्वा । रूपाणि । परिऽभूः । जजान ।
यत्ऽकामाः । ते । जुहुमः । तत् । नः । अस्तु । वयम् । स्याम । पतयः । रयीणाम् ॥ ३ ॥
पौर्णऽमासी । प्रथमा । यज्ञिया । आसीत् । अह्नाम् । रात्रीणाम् । अतिऽशर्वरेषु ।
ये । त्वाम् । यज्ञैः । यज्ञिये । अर्धयन्ति । अमी इति । ते । नाके । सुऽकृतः । प्रऽविष्टाः ॥

**VII.84.4** O new moon's night, none other than you has been born, who may embrace all the forms (and beings). With what desires we offer oblations to you, may that be ours. May we become masters of riches. (Also Yv. X.20).

### Full Moon Night

**VII.85.1** Full in the west, full in the east, and also in the middle, the full moon's night rises victorious. In her, living together with the enlightened ones, may we greatly revel together (madeama) with food and drinks at the height of the sorrowless world.

**VII.85.2** We worship the Lord of the full moon's night. the showerer (of desired objects) and bestower of vigour (vigorous and speedy). May He grant us undecaying and never-exhausting riches.

### Prajāpatiḥ

**VII.85.3** O Lord of creatures, none other than you has been born, who may embrace all the forms (and beings). With what desires we offer our oblations to you, may that be ours. May we become masters of riches.(Also Yv. X.20)

### Full Moon Night

**VII.85.4** The night of full moon is most worthy of worship among the days and deep darkness of the nights. O pious one, those who adore you with sacrifices, they, the righteous ones, enter the sorrowless world.

## ( ८६ ) षडशीतितमं सूक्तम्

(१-६) षडृचस्यास्य सूक्तस्याथर्वा ऋषिः । सावित्री सूर्यश्चन्द्रमाश्च देवताः । (१-२, ६) प्रथमाद्वितीयाषष्ठीनामृचां त्रिष्टुप्, (३) तृतीयाया अनुष्टुप्, (४) चतुर्थ्या आस्तारपङ्क्तिः, (५) पञ्चम्याश्च सम्राडास्तारपङ्क्तिश्छन्दांसि ॥

पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परि यातोर्णवम् ।
विश्वान्यो भुवना विचष्ट ऋतूँरन्यो विदधज्जायसे नवः ॥१॥
नवोनवो भवसि जायमानोह्नां केतुरुषसामेष्यग्रम् ।
भागं देवेभ्यो वि दधास्यायन्प्र चन्द्रमस्तिरसे दीर्घमायुः ॥२॥
सोमस्यांशो युधां पतेनूनो नाम वा असि ।
अनूनं दर्श मा कृधि प्रजया च धनेन च ॥३॥
दर्शोऽसि दर्शतोऽसि समग्रोसि समन्तः ।
समग्रः समन्तो भूयासं गोभिरश्वैः प्रजया पशुभिर्गृहैर्धनेन ॥४॥
योऽ३स्मान्द्वेष्टि यं वयं द्विष्मस्तस्य त्वं प्राणेना प्यायस्व ।
आ वयं प्याशिषीमहि गोभिरश्वैः प्रजया पशुभिर्गृहैर्धनेन ॥५॥
यं देवा अंशुमाप्याययन्ति यमक्षितमक्षिता भक्षयन्ति ।
तेनास्मानिन्द्रो वरुणो बृहस्पतिरा प्याययन्तु भुवनस्य गोपाः ॥६॥

पूर्वऽअपरम् । चरतः । मायया । एतौ । शिशू इति । क्रीडन्तौ । परि । यातः । अर्णवम् ।
विश्वा । अन्यः । भुवना । विऽचष्टे । ऋतून् । अन्यः । विऽदधत् । जायसे । नवः ॥ १ ॥
नवःऽनवः । भवसि । जायमानः । अह्नाम् । केतुः । उषसाम् । एषि । अग्रम् ।
भागम् । देवेभ्यः । वि । दधासि । आऽयन् । प्र । चन्द्रमः । तिरसे । दीर्घम् । आयुः ॥ २ ॥
सोमस्य । अंशो इति । युधाम् । पते । अनूनः । नाम । वै । असि ।
अनूनम् । दर्श । मा । कृधि । प्रऽजया । च । धनेन । च ॥ ३ ॥
दर्शः । असि । दर्शतः । असि । समऽअग्रः । असि । समऽअन्तः । समऽअग्रः ।
समऽअन्तः । भूयासम् । गोभिः । अश्वैः । प्रऽजया । पशुऽभिः । गृहैः । धनेन ॥ ४ ॥
यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः । तस्य । त्वम् । प्राणेन । आ । प्यायस्व ।
आ । वयम् । प्यासिषीमहि । गोभिः । अश्वैः । प्रऽजया । पशुऽभिः । गृहैः । धनेन ॥
यम् । देवाः । अंशुम् । आऽप्याययन्ति । यम् । अक्षितम् । अक्षिताः । भक्षयन्ति ।
तेन । अस्मान् । इन्द्रः । वरुणः । बृहस्पतिः । आ । प्याययन्तु । भुवनस्य । गोपाः ॥६॥

## Savitṛ, Sūrya, Moon

**VII.86.1** Moving one after the other with their wondrous power, these two young children in their play, go around the ocean. One of them illumines all the beings; and you, the other one, making the seasons, are born a new. (Also Ṛg. X.85.18)

**VII.86.2** Being born, you become new every day. Indicator of days (dates), you precede the dawns. While coming, you deal their share to the bounties of Nature. O moon, you stretch out (our) life-times long. (Also Ṛg. X.85.19)

**VII.86.3** O lord of battles, (Budh; mercury), you are a portion of the moon. Verily, you are inferior to none in fame. O seen first (worthy of looking) may you make me inferior to none in progeny, as well as in riches.

**VII.86.4** You are seen first (as new moon); you become more and more visible (or you are beautiful to look at). You are full and complete. May I be full and complete with cows,with horses,with progeny, with cattle, with homes and with wealth.

**VII.86.5** Who hates us and whom we hate - with his vital breath may you wax and increase. May we wax and increase with cows, with horses, with progeny, with cattle, with homes and with wealth.

**VII.86.6** The new moon, whom the bounties of Nature cause to wax, and whom,when complete, they, the complete ones, eat up - with that may the Lord resplendent, venerable and supreme, and the guardians of the world (bhuvanasya gopāḥ), make us wax and increase.

( ८७ ) सप्ताशीतितमं सूक्तम्

(१-६) षडृचस्यास्य सूक्तस्य शौनक ऋषिः । अग्निर्देवता । (१, ४-६) प्रथमर्चश्चतुर्थ्यादितृचस्य च त्रिष्टुप्, (२) द्वितीयायाः ककुम्मती बृहती, (३) तृतीयायाश्च जगती छन्दांसि ॥

अभ्यर्चत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त ।
इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ताम् ॥१॥
मय्यग्रे अग्निं गृह्णामि सह क्षत्रेण वर्चसा बलेन ।
मयि प्रजां मय्यायुर्दधामि स्वाहा मय्यग्निम् ॥२॥
इहैवाग्ने अधि धारया रयिं मा त्वा नि क्रन्पूर्वचित्ता निकारिणः ।
क्षत्रेणाग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतां ते अनिष्टृतः ॥३॥
अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः ।
अनु सूर्य उषसो अनु रश्मीननु द्यावापृथिवी आ विवेश ॥४॥
प्रत्यग्निरुषसामग्रमख्यत्प्रत्यहानि प्रथमो जातवेदाः ।
प्रति सूर्यस्य पुरुधा च रश्मीन्प्रति द्यावापृथिवी आ ततान ॥५॥
घृतं ते अग्ने दिव्ये सधस्थे घृतेन त्वां मनुरद्या समिन्धे ।
घृतं ते देवीर्नप्त्य आ वहन्तु घृतं तुभ्यं दुह्रतां गावो अग्ने ॥६॥

अभि । अर्चत । सुऽस्तुतिम् । गव्यम् । आजिम् । अस्मासु । भद्रा । द्रविणानि । धत्त ।
इमम् । यज्ञम् । नयत । देवता । नः । घृतस्य । धाराः । मधुऽमत् । पवन्ताम् ॥ १ ॥
मयि । अग्रे । अग्निम् । गृह्णामि । सह । क्षत्रेण । वर्चसा । बलेन ।
मयि । प्रऽजाम् । मयि । आयुः । दधामि । स्वाहा । मयि । अग्निम् ॥ २ ॥
इह । एव । अग्ने । अधि । धारय । रयिम् । मा । त्वा । नि । क्रन् । पूर्वऽचित्ताः । निऽकारिणः ।
क्षत्रेण । अग्ने । सुऽयमम् । अस्तु । तुभ्यम् । उपऽसत्ता । वर्धताम् । ते । अनिऽस्तृतः ॥ ३ ॥
अनु । अग्निः । उषसाम् । अग्रम् । अख्यत् । अनु । अहानि । प्रथमः । जातऽवेदाः ।
अनु । सूर्यः । उषसः । अनु । रश्मीन् । अनु । द्यावापृथिवी इति । आ । विवेश ॥ ४ ॥
प्रति । अग्निः । उषसाम् । अग्रम् । अख्यत् । प्रति । अहानि । प्रथमः । जातऽवेदाः ।
प्रति । सूर्यस्य । पुरुऽधा । च । रश्मीन् । प्रति । द्यावापृथिवी इति । आ । ततान ॥ ५ ॥
घृतम् । ते । अग्ने । दिव्ये । सधऽस्थे । घृतेन । त्वाम् । मनुः । अद्य । सम् । इन्धे ।
घृतम् । ते । देवीः । नप्त्यः । आ । वहन्तु । घृतम् । तुभ्यम् । दुह्रताम् । गावः । अग्ने ॥ ६ ॥

### Agniḥ

**VII.87.1** Worship the Lord, worthy of praises, beneficial for sense-organs, and obtained by sacrifice. Bestow auspicious riches on us. Convey our this worship to the bounties of Nature. May the streams of mystic butter descend with sweetness. (Also Ṛg. IV.58.10)

**VII.87.2** First I acquire the fire-divine along with the dominating power, splendour and strength. I put in myself the progeny, in myself the long life, and in myself the fire-divine. Svāhā.

**VII.87.3** O foremost adorable Lord (Agni) please maintain your wealth just here. Let not the down-putters with their previous intentions (purva-citta) put you down By your sovereignty, you have a natural control over them. Please give more attention, and do not neglect. (Also Yv. XX.VII)

**VII.87.4** The adorable Lord illuminates the beginnings of the dawns; He the foremost and omniscient illuminates the days as well. Following the sun, following the dawns, and following the rays, He has entered heaven and earth thoroughly.

**VII.87.5** The adorable Lord shines towards the beginnings of the dawns; He the foremost and omniscient shines towards the days. He shines variously towards the sun's rays and He spreads out to heaven and earth. (Also Av. VII.87 4)

**VII.87.6** O fire divine, may there be purified butter in your heavenly abode; a right-thinking man kindles you today with purified butter. May the never-letting down celestial waters bring purified butter for you. Let cows, O fire divine, yield purified butter for you.

( ८८ ) अष्टाशीतितमं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य शुनःशेप ऋषिः । वरुणो देवता । (१) प्रथमर्चोऽनुष्टुप्, (२) द्वितीयायाः पथ्यापङ्क्तिः, (३) तृतीयायास्त्रिष्टुप्, (४) चतुर्थ्याश्च बृहतीगर्भा त्रिष्टुप् छन्दांसि ॥

अप्सु ते राजन्वरुण गृहो हिरण्ययो मिथः ।
ततो धृतव्रतो राजा सर्वा धामानि मुञ्चतु ॥१॥
धाम्नोधाम्नो राजन्नितो वरुण मुञ्च नः ।
यदापो अघ्न्या इति वरुणेति यदूचिम ततो वरुण मुञ्च नः ॥२॥
उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अधा वयमादित्य व्रते तवानागसो अदितये स्याम ॥३॥
प्रास्मत्पाशान्वरुण मुञ्च सर्वान्य उत्तमा अधमा वारुणा ये ।
दुष्वप्न्यं दुरितं नि ष्वास्मदथ गच्छेम सुकृतस्य लोकम् ॥४॥

अप्ऽसु । ते । राजन् । वरुण । गृहः । हिरण्ययः । मिथः ।
ततः । धृतऽव्रतः । राजा । सर्वा । धामानि । मुञ्चतु ॥ १ ॥
धाम्नःऽधाम्नः । राजन् । इतः । वरुण । मुञ्च । नः ।
यत् । आपः । अघ्न्याः । इति । वरुण । इति । यत् । ऊचिम । ततः । वरुण । मुञ्च । नः ॥
उत् । उत्ऽतमम् । वरुण । पाशम् । अस्मत् । अव । अधमम् । वि । मध्यमम् । श्रथय ।
अध । वयम् । आदित्य । व्रते । तव । अनागसः । अदितये । स्याम ॥ ३ ॥
प्र । अस्मत् । पाशान् । वरुण । मुञ्च । सर्वान् । ये । उत्ऽतमाः । अधमाः । वारुणाः । ये ।
दुःऽस्वप्न्यम् । दुःऽइतम् । निः । स्व । अस्मत् । अथ । गच्छेम । सुऽकृतस्य । लोकम् ॥ ४ ॥

( ८९ ) एकोननवतितमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य भृगुर्ऋषिः । (१) प्रथमर्चोऽग्निः, (२-३) द्वितीयातृतीययोश्चेन्द्रो देवते । (१) प्रथमाया जगती, (२-३) द्वितीयातृतीययोश्च त्रिष्टुप् छन्दसी ॥

अनाधृष्यो जातवेदा अमर्त्यो विराडग्ने क्षत्रभृद्दीदिहीह ।
विश्वा अमीवाः प्रमुञ्चन्मानुषीभिः शिवाभिरद्य परि पाहि नो गयम् ॥१॥

अनाधृष्यः । जातऽवेदाः । अमर्त्यः । विऽराट् । अग्ने । क्षत्रऽभृत् । दीदिहि । इह ।
विश्वाः । अमीवाः । प्रऽमुञ्चन् । मानुषीभिः । शिवाभिः । अद्य । परि । पाहि । नः । गयम् ॥

**Varuṇaḥ**

**VII.88.1** O venerable Lord, the shining one, within the waters is your unique and golden abode. From there, may the sovereign king (the Lord), observer of vows, release all our family members (from bonds).

**VII.88.2** From each and every place of bondage, O king, the venerable Lord, may you release us here. As we have declared that the waters and the venerable Lord are inviolable, for that reason, O venerable Lord, may you release us. (Also Yv. VI.22)

**VII.88.3** O venerable Lord, loosen the bonds or fetters that hold me; loosen up the upper most, down the lowest; off the midmost. We shall obey your eternal laws, and faithfully follow your command and thereby avoid sin or guilt. (Also Yv. XII.12)

**VII.88.4** Release from us, O venerable Lord (Varuṇa) all bonds or fetters, that are uppermost, lowest-these are yours, O varuṇa. Remove from us evil-dreaming. (Remove) all our difficulty. Then we shall be able to proceed to the world of those persons, who have done well.

**VII.89.1** O Agni, shine thou here unassailable, Jātavedas, immortal, wide-ruling (virāj) bearing dominion; releasing all diseases by humane, propitious (aids), do thou protect round about today our household. (Also Yv. XXVII.7).

इन्द्र क्षत्रमभि वाममोजोजायथा वृषभ चर्षणीनाम् ।
अपानुदो जनममित्रायन्तमुरुं देवेभ्यो अकृणोरु लोकम् ॥२॥
मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगम्यात्परस्याः ।
सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून्ताढि वि मृधो नुदस्व ॥३॥

इन्द्र । क्षत्रम् । अभि । वामम् । ओजः । अजायथाः । वृषभ । चर्षणीनाम् ।
अप । अनुदः । जनम् । अमित्रऽयन्तम् । उरुम् । देवेभ्यः । अकृणोः । ऊं इति । लोकम् ॥
मृगः । न । भीमः । कुचरः । गिरिऽस्थाः । पराऽवतः । आ । जगम्यात् । परस्याः ।
सृकम् । सम्ऽशाय । पविम् । इन्द्र । तिग्मम् । वि । शत्रून् । ताढि । वि । मृधः । नुदस्व ।

( ९० ) नवतितमं सूक्तम्
(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । तार्क्ष्यो देवता । त्रिष्टुप् छन्दः ॥

त्यमू षु वाजिनं देवजूतं सहोवानं तरुतारं रथानाम् ।
अरिष्टनेमिं पृतनाजिमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ॥१॥

त्यम् । ऊं इति । सु । वाजिनम् । देवऽजूतम् । सहःऽवानम् । तरुतारम् । रथानाम् ।
अरिष्टऽनेमिम् । पृतनाऽजिम् । आशुम् । स्वस्तये । तार्क्ष्यम् । इह । आ । हुवेम ॥ १ ॥

( ९१ ) एकनवतितमं सूक्तम्
(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः ॥

त्रातारमिन्द्रमवितारमिन्द्रं हवेहवे सुहवं शूरमिन्द्रम् ।
हुवे नु शक्रं पुरुहूतमिन्द्रं स्वस्ति न इन्द्रो मघवान्कृणोतु ॥१॥

त्रातारम् । इन्द्रम् । अवितारम् । इन्द्रम् । हवेऽहवे । सुऽहवम् । शूरम् । इन्द्रम् ।
हुवे । नु । शक्रम् । पुरुऽहूतम् । इन्द्रम् । स्वस्ति । नः । इन्द्रः । मघऽवान् । कृणोतु ॥

( ९२ ) द्विनवतितमं सूक्तम्
(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । रुद्रो देवता । जगती छन्दः ॥

यो अग्नौ रुद्रो यो अप्स्व१न्तर्य ओषधीर्वीरुध आविवेश ।
य इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नमो अस्त्वग्नये ॥१॥

यः । अग्नौ । रुद्रः । यः । अप्ऽसु । अन्तः । यः । ओषधीः । वीरुधः । आऽविवेश ।
यः । इमा । विश्वा । भुवनानि । चक्लृपे । तस्मै । रुद्राय । नमः । अस्तु । अग्नये ॥ १ ॥

**VII.89.2** O resplendent army-chief, you ar benign vigour, ready to protect all of us from harm; you are born a bull among men. Kick away those people who are unfriendly; make wide room for godly persons. (Also Ṛg. X.180.3)

**VII.89.3** Like a terrible and wild beast of mountains coming to attack from a distant place, whetting your sharp-cutting bolt, O army-chief, may you attack the enemies furiously and drive them away from the battle (never to return). (Also Yv. XVIII.71; Ṛg. X.180.2)

### Tarkṣyaḥ

**VII.90.1** For our well-being, we invoke here that renowned vigorous befitting-pilot (tārkṣya), quickened by Nature's force, overwhelmer, outrunner of chariots, equipped with faultless strong fellies, conqueror of enemy-hordes, and the very swift. (Also Ṛg. X.178.1)

### Indraḥ

**VII.91.1** At repeated worships, I invoke the resplendent Lord, the preserver, the rescuer, the brave and the one, who is easily propitiated. The Lord is invoked by all. May He, the bounteous Lord, bestow prosperity on us. (Also Ṛg. VI.47.11)

### Rudraḥ

**VII.92.1** The vital breath (terrible punisher), which is in the fire, which is within the waters, which has entered the herbs and the plants; which has formed all these beings, to that vital breath (terrible punisher), to the fire, we bow in reverence.

( ९३ ) त्रिनवतितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य गरुत्मानृषिः । तक्षको देवता । त्र्यवसाना बृहती छन्दः ॥

अपेह्यरिरस्यरिर्वा असि । विषे विषमपृक्था विषमिद्वा अपृक्थाः ।
अहिमेवाभ्यपेहि तं जहि ॥१॥

अप । इहि । अरिः । असि । अरिः । वै । असि । विषे । विषम् । अपृक्थाः । विषम् । इत् । वै । अपृक्थाः । अहिम् । एव । अभिऽअपेहि । तम् । जहि ॥ १ ॥

( ९४ ) चतुर्नवतितमं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य सिन्धुद्वीप ऋषिः । अग्निर्देवता । (१, ३-४) प्रथमातृतीयाचतुर्थीनामृचामनुष्टुप्, (२) द्वितीयायाश्च त्रिपदा निचृत्परोष्णिक् छन्दसी ॥

अपो दिव्या अचायिषं रसेन समपृक्ष्महि ।
पयस्वानग्न आगमं तं मा सं सृज वर्चसा ॥१॥
सं माग्ने वर्चसा सृज सं प्रजया समायुषा ।
विद्युर्मे अस्य देवा इन्द्रो विद्यात्सह ऋषिभिः ॥२॥
इदमापः प्र वहतावद्यं च मलं च यत् ।
यच्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणम् ॥३॥
एधोस्येधिषीय समिदसि समेधिषीय । तेजोसि तेजो मयि धेहि ॥४॥

अपः । दिव्याः । अचायिषम् । रसेन । सम् । अपृक्ष्महि ।
पयस्वान् । अग्ने । आ । अगमम् । तम् । मा । सम् । सृज । वर्चसा ॥ १ ॥
सम् । मा । अग्ने । वर्चसा । सृज । सम् । प्रऽजया । सम् । आयुषा ।
विद्युः । मे । अस्य । देवाः । इन्द्रः । विद्यात् । सह । ऋषिऽभिः ॥ २ ॥
इदम् । आपः । प्र । वहत । अवद्यम् । च । मलम् । च । यत् ।
यत् । च । अभिऽदुद्रोह । अनृतम् । यत् । च । शेपे । अभीरुणम् ॥ ३ ॥
एधः । असि । एधिषीय । समऽइत् । असि । सम् । एधिषीय । तेजः । असि । तेजः । मयि । धेहि ॥ ४ ॥

## Against Snake Poison

**VII.93.1** Go away. You are an enemy. An enemy surely you are. You have mixed poison with poison. Surely you have mixed the poison. Go away to the snake itself. Kill it.

## Agniḥ

**VII.94.1** I have accumulated the heavenly waters; with sap we have been drenched. O adorable Lord, holding waters. I have approached you. Me, as such, may you endow with lustre.

**VII.94.2** O adorable Lord, may you endow me with lustre; endow me with progeny and with long life. May the enlightened ones know me as such; may the resplendent one along with the seers know me (as such).

**VII.94.3** May the waters wash away all that is dirty and filthy in me and whatever treachery and false-hood I have committed, and whatever abuse I have poured on the innocent. (Also Yv. VI.17)

**VII.94.4** O adorable Lord, you are flourishing; may I flourish. You are shining up; may I shine up. You are lustre; bestow lustre on me. (Also Yv. XX.23)

( ९५ ) पञ्चनवतितमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्याङ्गिरा ऋषिः । मन्त्रोक्ता देवताः । (१) प्रथमर्चो गायत्री, (२) द्वितीयाया विराट् पुरस्ताद्बृहती, (३) तृतीयायाश्च त्र्यवसाना पङ्क्तिः भुरिग्जगती छन्दांसि ॥

अपि वृश्च पुराणवद्व्रततेरिव गुष्पितम् । ओजो दासस्य दम्भय ॥१॥
वयं तदस्य संभृतं वस्विन्द्रेण वि भजामहे ।
म्लापयामि भ्रजः शिभ्रं वरुणस्य व्रतेन ते ॥२॥
यथा शेपो अपायातै स्त्रीषु चासदनावयाः ।
अवस्थस्य क्नदीवतः शाङ्कुरस्य नितोदिनः
यदाततमव तत्तनु यदुत्ततं नि तत्तनु ॥३॥

अपि । वृश्च । पुराणऽवत् । व्रततेःऽइव । गुष्पितम् । ओजः । दासस्य । दम्भय ॥ १ ॥
वयम् । तत् । अस्य । सम्ऽभृतम् । वसु । इन्द्रेण । वि । भजामहे ।
म्लापयामि । भ्रजः । शिभ्रम् । वरुणस्य । व्रतेन । ते ॥ २ ॥
यथा । शेपः । अपऽअयातै । स्त्रीषु । च । असत् । अनावयाः । अवऽस्थस्य । क्नदिऽवतः ।
शाङ्कुरस्य । निऽतोदिनः । यत् । आऽततम् । अव । तत् । तनु । यत् । उत्ऽततम् । नि । तत् । तनु ॥

( ९६ ) षण्णवतितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । चन्द्रमा देवता । त्रिष्टुप् छन्दः ॥

इन्द्रः सुत्रामा स्ववाँ अवोभिः सुमृडीको भवतु विश्ववेदाः ।
बाधतां द्वेषो अभयं नः कृणोतु सुवीर्यस्य पतयः स्याम ॥१॥

इन्द्रः । सुऽत्रामा । स्वऽवान् । अवःऽभिः । सुऽमृडीकः । भवतु । विश्वऽवेदाः ।
बाधताम् । द्वेषः । अभयम् । नः । कृणोतु । सुऽवीर्यस्य । पतयः । स्याम ॥ १ ॥

( ९७ ) सप्तनवतितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । चन्द्रमा देवता । त्रिष्टुप् छन्दः ॥

स सुत्रामा स्ववाँ इन्द्रो अस्मदाराच्चिद्द्वेषः सनुतर्युयोतु ।
तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥१॥

सः । सुऽत्रामा । स्वऽवान् । इन्द्रः । अस्मत् । आरात् । चित् । द्वेषः । सनुतः । युयोतु ।
तस्य । वयम् । सुऽमतौ । यज्ञियस्य । अपि । भद्रे । सौमनसे । स्याम ॥ १ ॥

**As in verses : mantroktāḥ**

**VII.95.1** O Lord, like a tangle of old creepers, may you hack off and destroy the power of the infidel (dāsa). (Also Ṛg. VIII.40.6)

**VII.95.2** With the aid of the resplendent Lord, may we divide the accumulated treasure of that infidel among us. With the ordinances of the ordainer (venerable) Lord (i.e., by the vrata of Varṇua), I make languid, or dull the strength of your male organ (Śepaḥ).

**VII.95.3** So that the male organ of the infidel, standing very close, inviting (for intercourse), with pillar-like male organ, and the in-thrusting, keeps away and remains unable to reach women, may you make that unstreched which is streched and make that droop, which stands up erect (yad ātatam ava tat tanu yad uttatam nitat tanu).

**VII.96.1** May the protecting opulent Lord shower eternal happiness on us. May He, the all-wise destroy the evil forces that obstruct our way and thereby give rest and safety. And may we be the possessors of excellent posterity. (Also Ṛg. VI.47.12)

**Indraḥ**

**VII.97.1** May that helpful and presever Lord drive from us, even from afar, all those who hate us. May we continue to enjoy the grace of Him and dwell in His auspicious benevolence. (Also Ṛg. VI.47.13)

( ९८ ) अष्टनवतितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः । इन्द्रो देवता । गायत्री छन्दः ॥

**इन्द्रेण मन्युना वयमभि ष्याम पृतन्यतः । घ्नन्तो वृत्राण्यप्रति ॥१॥**

इन्द्रेण । मन्युना । वयम् । अभि । स्याम । पृतन्यतः । घ्नन्तः । वृत्राणि । अप्रति ॥ १ ॥

( ९९ ) नवनवतितमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । सोमो देवता । अनुष्टुप् छन्दः ॥

**ध्रुवं ध्रुवेण हविषाव सोमं नयामसि । यथा न इन्द्रः केवलीर्विशः संमनसस्करत् ॥१॥**

ध्रुवम् । ध्रुवेण । हविषा । अव । सोमम् । नयामसि ।
यथा । नः । इन्द्रः । केवलीः । विशः । सम्ऽमनसः । करत् ॥ १ ॥

( १०० ) शततमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य कपिञ्जल ऋषिः । गृध्रौ देवते । (१) प्रथमर्चोऽनुष्टुप्, (२-३) द्वितीयातृतीययोश्च भुरिगनुष्टुप् छन्दसी ॥

**उदस्य श्यावौ विथुरौ गृध्रौ द्यामिव पेततुः । उच्छोचनप्रशोचनावस्योच्छोचनौ हृदः ॥१॥**
**अहमेनावुदतिष्ठिपं गावौ श्रान्तसदाविव । कुर्कुराविव कूजन्तावुदवन्तौ वृकाविव ॥२॥**

**आतोदिनौ नितोदिनावथो संतोदिनावुत ।**
**अपि नह्याम्यस्य मेढ्रं य इतः स्त्री पुमाञ्जभार ॥३॥**

उत् । अस्य । श्यावौ । विथुरौ । गृध्रौ । द्याम्ऽइव । पेततुः ।
उच्छोचनऽप्रशोचनौ । अस्य । उत्ऽशोचनौ । हृदः ॥ १ ॥
अहम् । एनौ । उत् । अतिष्ठिपम् । गावौ । श्रान्तसदौऽइव ।
कुर्कुरौऽइव । कूजन्तौ । उत्ऽअवन्तौ । वृकौऽइव ॥ २ ॥

आऽतोदिनौ । निऽतोदिनौ । अथो इति । सम्ऽतोदिनौ । उत ।
अपि । नह्यामि । अस्य । मेढ्रम् । यः । इतः । स्त्री । पुमान् । जभार ॥ ३ ॥

## Indraḥ

**VII.98.1** With the (aid of the) resplendent Lord, glowing with enthusiasm, may we subdue the invading hosts, killing the besiegers relentlessly.

## Somaḥ

**VII.99.1** With sure offerings (of provisions) we bring about sure bliss, so that may the resplendent Lord (or the army chief) make the subjects (people) of one mind and loyal only to us. (Also Ṛg. X.173.6)

## Gṛdhrau

**VII.100.1** In-breath and out-breath of this man have flown up like two frightened and ever-moving vultures to the sky. Those tormenting and drying up are tormentors of this man's heart.

**VII.100.2** I have made those two to get up (and go away) like two bullocks resting after tiresome toil, like two snailing dogs, or like two prowling wolves (in search of prey)

**VII.100.3** These two, tormenting all over, tormenting downwards and tormenting all together, I bind the male organ of that him who, a man, has abducted a maiden from here.

( १०१ ) एकोत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य कपिञ्जल ऋषिः । वयो देवता । अनुष्टुप् छन्दः ॥

अस॑दन्गावः सद॒नेऽप॑प्तद्वस॒तिं वयः । आ॒स्थाने॒ पर्व॑ता अस्थुः स्थाम्नि॑ वृक्का॒वति॒ष्ठिपम् ॥१॥

अस॑दन् । गाव॑ः । सद॑ने । अप॑प्तत् । व॒स॒तिम् । वय॑ः ।
आ॒ऽस्थाने॑ । पर्व॑ताः । अ॒स्थुः॒ । स्थाम्नि॑ । वृ॒क्कौ । अ॒ति॒ष्ठि॒प॒म् ॥ १ ॥

( १०२ ) द्व्युत्तरशततमं सूक्तम्

(१-८) अष्टर्चस्यास्य सूक्तस्याथर्वा ऋषिः । इन्द्राग्नी देवते । (१-४) प्रथमादिचतसृणामृचां त्रिष्टुप्, (५) पञ्चम्यास्त्रिपदार्ची भुरिग्गायत्री, (६) षष्ठ्यास्त्रिपदा प्राजापत्या बृहती, (७) सप्तम्यास्त्रिपदा साम्नी भुरिग्जगती, (८) अष्टम्याश्चोपरिष्टाद्बृहती छन्दांसि ॥

यद॒द्य त्वा॑ प्रय॒ति य॒ज्ञे अ॒स्मिन्होत॑श्चिकित्व॒न्नवृ॑णीमही॒ह ।
ध्रु॒वमयो ध्रु॒वमु॒ता श॑विष्ठ प्रवि॒द्वान्य॒ज्ञमुप॑ याहि॒ सोम॑म् ॥१॥
समि॑न्द्र नो॒ मन॑सा नेष॒ गोभिः॒ सं सू॒रिभि॑र्हरिव॒न्त्सं स्व॒स्त्या ।
सं ब्रह्म॑णा दे॒वहि॑तं॒ यदस्ति॒ सं दे॒वानां॑ सुम॒तौ य॒ज्ञिया॑नाम् ॥२॥
याना॑वह उश॒तो दे॑व दे॒वांस्तान्प्रेर॑य॒ स्वे अ॑ग्ने स॒धस्थे॑ ।
ज॒क्षि॒वांसः॑ पपि॒वांसो॒ मधू॑न्य॒स्मै ध॑त्त वसवो॒ वसू॑नि ॥३॥
सु॒गा वो॑ दे॒वाः सद॑ना अकर्म॒ य आ॑ज॒ग्म सव॑ने मा जुषा॒णाः ।
वह॑माना॒ भर॑माणाः॒ स्वा वसू॑नि॒ वसुं॑ घ॒र्मं दिव॒मा रो॑हता॒नु ॥४॥

यत् । अ॒द्य । त्वा॒ । प्र॒ऽय॒ति । य॒ज्ञे । अ॒स्मिन् । होत॑रिति॒ । चि॒कि॒त्व॒न् । अवृ॑णीमहि । इ॒ह ।
ध्रु॒वम् । अ॒यः॒ । ध्रु॒वम् । उ॒त । श॒वि॒ष्ठ॒ । प्र॒ऽवि॒द्वान् । य॒ज्ञम् । उप॑ । या॒हि॒ । सोम॑म् ॥ १ ॥
सम् । इ॒न्द्र॒ । नः॒ । मन॑सा । ने॒ष॒ । गोभि॑ः । सम् । सू॒रिऽभि॑ः । ह॒रि॒ऽव॒न् । सम् । स्व॒स्त्या ।
सम् । ब्रह्म॑णा । दे॒वऽहि॑तम् । यत् । अस्ति॑ । सम् । दे॒वाना॑म् । सु॒ऽम॒तौ । य॒ज्ञिया॑नाम् ॥ २ ॥
यान् । आ॒ऽअव॑हः । उ॒श॒तः । दे॒व॒ । दे॒वान् । तान् । प्र । ई॒र॒य॒ । स्वे । अ॒ग्ने॒ । स॒ध॒ऽस्थे॑ ।
ज॒क्षि॒ऽवांस॑ः । प॒पि॒ऽवांस॑ः । मधू॑नि । अ॒स्मै । ध॒त्त॒ । व॒स॒वः॒ । वसू॑नि ॥ ३ ॥
सु॒ऽगा । वः॒ । दे॒वाः॒ । सद॑ना । अ॒क॒र्म॒ । ये । आ॒ऽज॒ग्म । सव॑ने । मा॒ । जु॒षा॒णाः ।
वह॑मानाः । भर॑माणाः । स्वा । वसू॑नि । वसु॑म् । घ॒र्मम् । दिव॑म् । आ । रो॒ह॒त॒ । अनु॑ ॥४॥

## Vayaḥ ; Age

**VII.101.1** The cows have settled in the cow-stall; the bird has flown into its nest; the mountains stand firm at their site; I make the two kidneys firm in their proper places.

## Indrāgnī (Pair)

**VII.102.1** O omniscient fire-divine, cognizant of all ceremonies as we today approaches you in the course of our progressive worship, may you steadily convey our offerings. Nature's bounties stand firmly here, O the strongest. May you, O enlightened and all-knowing one, approach and cherish the libations of medicinal herbs (Somam). (Also Ṛg. III.29.16)

**VII.102.2** With a willing mind, may the resplendent Lord grant us wisdom and wealth; may the Lord of light associate us with pious men of learning, with prosperity, with sacrificial food, and that which is acceptable to Nature's bounties and with the favour of the adorable godly men (yajñiyānām). (Also Ṛg. V.42.4)

**VII.102.3** O adorable Lord, may you direct the desirous enlightened ones, whom you have brought, to enter your own place of sacrifice. Having eaten and drunk your fill of sweets, O bestowers of wealth, may you bestow riches on us. (Also Yv. VIII.19)

**VII.102.4** O enlightened ones, who pleased with us have come to this sacrifice, we have made seats easily accessible to you. Having collected and carrying your riches, may you ascend to your dwelling place in the bright sky. (Also Yv. VIII.18)

यज्ञं यज्ञं गच्छ यज्ञपतिं गच्छ। स्वां योनिं गच्छ स्वाहा ॥५॥
एष ते यज्ञो यज्ञपते सहसूक्तवाकः। सुवीर्यः स्वाहा ॥६॥
वषंडुतेभ्यो वषडहुतेभ्यः। देवा गातुविदो गातुं वित्त्वा गातुमित ॥७॥
मनसस्पत इमं नो दिवि देवेषु यज्ञम् ।
स्वाहा दिवि स्वाहा पृथिव्यां स्वाहान्तरिक्षे स्वाहा वाते धां स्वाहा ॥८॥

यज्ञं । यज्ञम् । गच्छ । यज्ञऽपतिम् । गच्छ । स्वाम् । योनिम् । गच्छ । स्वाहा ॥ ५ ॥

एषः । ते । यज्ञः । यज्ञऽपते । सहऽसूक्तवाकः । सुऽवीर्यः । स्वाहा ॥ ६ ॥

वषट् । हुतेभ्यः । वषट् । अहुतेभ्यः । देवाः । गातुऽविदः । गातुम् । वित्त्वा । गातुम् । इत ॥ ७ ॥

मनसः । पते । इमम् । नः । दिवि । देवेषु । यज्ञम् ।
स्वाहा । दिवि । स्वाहा । पृथिव्याम् । स्वाहा । अन्तरिक्षे । स्वाहा । वाते । धाम् । स्वाहा ॥ ८ ॥

( १०३ ) त्र्युत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता देवताः । विराट्त्रिष्टुप् छन्दः ॥

सं बर्हिरक्तं हविषा घृतेन समिन्द्रेण वसुना सं मरुद्भिः ।
सं देवैर्विश्वदेवेभिरक्तमिन्द्रं गच्छतु हविः स्वाहा ॥१॥

सम् । बर्हिः । अक्तम् । हविषा । घृतेन । सम् । इन्द्रेण । वसुना । सम् । मरुत्ऽभिः ।
सम् । देवैः । विश्वऽदेवेभिः । अक्तम् । इन्द्रम् । गच्छतु । हविः । स्वाहा ॥ १ ॥

( १०४ ) चतुरुत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता देवता । भुरिक्त्रिष्टुप् छन्दः ॥

परि स्तृणीहि परि धेहि वेदिं मा जामिं मोषीरमुया शयानाम् ।
होतृषदनं हरितं हिरण्ययं निष्का एते यजमानस्य लोके ॥१॥

परि । स्तृणीहि । परि । धेहि । वेदिम् । मा । जामिम् । मोषीः । अमुया । शयानाम् ।
होतृऽसदनम् । हरितम् । हिरण्ययम् । निष्काः । एते । यजमानस्य । लोके ॥ १ ॥

**VII.102.5** O sacrifice, go to the sacrifice itself; go to the Lord of sacrifice; go to your own abode. Svāhā. (Also Yv. VIII.22)

**VII.102.6** O Lord of sacrifice, this is your sacrifice accompanied with a chorus of praises, and bestower of excellent vigour. Svāhā. (Also Yv. VIII.22)

**VII.102.7** I dedicate this to those who have been offered oblations; I dedicate this to those who have not been offered oblations. O enlightened ones, skilled in sacrifice, come to this sacrifice. (Also Yv. VIII.21)

**VII.102.8** O radiant Lord of minds, may you place this sacrifice of ours among the enlightened ones in the sky. Svāhā, in the sky; Svāhā, on the earth; svāhā, in the midspace, Svāhā, in the wind Svāhā. (Also Yv. VIII.21).

### Vediḥ (Altar)

**VII.103.1** May the sacrificial altar be adorned with the offerings and purified butter, and with the resplendent self, the rehabilitator, and with the brave warriors. Adorned with the enlightened ones and with all the bounties of Nature, may this oblation go to the resplendent Lord. Svāhā.

### Vediḥ

**VII.104.1** Cover the sacrificial altar all around and enclose it well. Do not molest the sister sleeping on this altar. The house of the sacrificer is full of greenery and gold. And these are the gold coins in the sacrificer's abode.

( १०५ ) पञ्चोत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य यम ऋषिः । दुःस्वप्ननाशनं देवता । अनुष्टुप् छन्दः ॥

पर्यावर्ते दुष्वप्न्यात्पापात्स्वप्न्यादभूत्याः ।
ब्रह्माहमन्तरं कृण्वे परा स्वप्नमुखाः शुचः ॥१॥

परिऽआवर्ते । दुःऽस्वप्न्यात् । पापात् । स्वप्न्यात् । अभूत्याः ।
ब्रह्म । अहम् । अन्तरम् । कृण्वे । परा । स्वप्नऽमुखाः । शुचः ॥ १ ॥

( १०६ ) षडुत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य यम ऋषिः । दुःस्वप्ननाशनं देवता । अनुष्टुप् छन्दः ॥

यत्स्वप्ने अन्नमश्नामि न प्रातरधिगम्यते ।
सर्वं तदस्तु मे शिवं नहि तद्दृश्यते दिवा ॥१॥

यत् । स्वप्ने । अन्नम् । अश्नामि । न । प्रातः । अधिऽगम्यते ।
सर्वम् । तत् । अस्तु । मे । शिवम् । नहि । तत् । दृश्यते । दिवा ॥ १ ॥

( १०७ ) सप्तोत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य प्रजापतिर्ऋषिः । मन्त्रोक्ता देवताः । विराट् पुरस्ताद्बृहती छन्दः ॥

नमस्कृत्य द्यावापृथिवीभ्यामन्तरिक्षाय मृत्यवे ।
मेक्षाम्यूर्ध्वस्तिष्ठन्मा मा हिंसिषुरीश्वराः ॥१॥

नमःऽकृत्य । द्यावापृथिवीभ्याम् । अन्तरिक्षाय । मृत्यवे ।
मेक्षामि । ऊर्ध्वः । तिष्ठन् । मा । मा । हिंसिषुः । ईश्वराः ॥ १ ॥

( १०८ ) अष्टोत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य प्रजापतिर्ऋषिः । ब्रह्मात्मा देवता । त्रिष्टुप् छन्दः ॥

को अस्या नो द्रुहोऽवद्यवत्या उन्नेष्यति क्षत्रियो वस्य इच्छन् ।
को यज्ञकामः क उ पूर्तिकामः को देवेषु वनुते दीर्घमायुः ॥१॥

कः । अस्याः । नः । द्रुहः । अवद्यऽवत्याः । उत् । नेष्यति । क्षत्रियः । वस्यः । इच्छन् ।
कः । यज्ञऽकामः । कः । ऊं इति । पूर्तिऽकामः । कः । देवेषु । वनुते । दीर्घम् । आयुः ॥

### Against evil dreams

**VII.105.1** I draw you back from evil dream, vicious dream, and misery. I make knowledge a preventive defence, and the sorrows rising from dreams turn away.

### Against evil dreams

**VII.106.1** What food I eat in my dream, that is not obtained in the morning. May all that be propitious to me; that is not perceived by day.

### Dyāvā - Pṛthivī Pair

**VII.107.1** Bowing in reverence to heaven and earth, to midspace and to death, standing erect I will carry myself high up. May the lords (of the universe) do not harm to me.

### Ātman

**VII.108.1** Who the protecting warrior, desirous of promoting welfare, will raise us up out of this shameful mutual malice ? Who is willing to sacrifice ? Who is desirous of fulfillment ? Who bestows a long life-span on the enlightened ones ?

( १०९ ) नवोत्तरशततमं सूक्तम्
(१) एकर्चस्यास्य सूक्तस्य प्रजापतिर्ऋषिः । ब्रह्मात्मा देवता । त्रिष्टुप् छन्दः ॥

कः पृश्निं धेनुं वरुणेन दत्तामथर्वणे सुदुघां नित्यवत्साम् ।
बृहस्पतिना सख्यं जुषाणो यथावशं तन्वः कल्पयाति ॥१॥

कः । पृश्निम् । धेनुम् । वरुणेन । दत्ताम् । अथर्वणे । सुऽदुघाम् । नित्यऽवत्साम् ।
बृहस्पतिना । सख्यम् । जुषाणः । यथाऽवशम् । तन्वः । कल्पयाति ॥ १ ॥

( ११० ) दशोत्तरशततमं सूक्तम्
(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता देवता । अनुष्टुप् छन्दः ॥

अपक्रामन्पौरुषेयाद्वृणानो दैव्यं वचः ।
प्रणीतीरभ्यावर्तस्व विश्वेभिः सखिभिः सह ॥१॥

अपऽक्रामन् । पौरुषेयात् । वृणानः । दैव्यम् । वचः ।
प्रऽनीतीः । अभिऽआवर्तस्व । विश्वेभिः । सखिऽभिः । सह ॥ १ ॥

( १११ ) एकादशोत्तरशततमं सूक्तम्
(१) एकर्चस्यास्य सूक्तस्याथर्वा ऋषिः । पूर्वार्धस्य मन्त्रोक्ता जातवेदा वा, उत्तरार्धस्य च वरुणो देवते । बृहतीगर्भा त्रिष्टुप् छन्दः ॥

यदस्मृति चकृम किं चिदग्न उपारिम चरणे जातवेदः ।
ततः पाहि त्वं नः प्रचेतः शुभे सखिभ्यो अमृतत्वमस्तु नः ॥१॥

यत् । अस्मृति । चकृम । किम् । चित् । अग्ने । उपऽआरिम । चरणे । जातऽवेदः ।
ततः । पाहि । त्वम् । नः । प्रऽचेतः । शुभे । सखिऽभ्यः । अमृतऽत्वम् । अस्तु । नः ॥ १ ॥

( ११२ ) द्वादशोत्तरशततमं सूक्तम्
(१) एकर्चस्यास्य सूक्तस्य भृगुर्ऋषिः । सूर्य आपो वा देवताः । अनुष्टुप् छन्दः ॥

अव दिवस्तारयन्ति सप्त सूर्यस्य रश्मयः ।
आपः समुद्रिया धारास्तास्ते शल्यमसिस्रसन् ॥१॥

अव । दिवः । तारयन्ति । सप्त । सूर्यस्य । रश्मयः ।
आपः । समुद्रियाः । धाराः । ताः । ते । शल्यम् । असिस्रसन् ॥ १ ॥

**Ātman**

**VII.109.1** Who, enjoying the companionship of the Lord supreme, shapes according to his own will the body (and form) of the spotted milch-cow, given by the venerable Lord to the preserving seeker, and which is easy to milk and is always with her calf.

**Mantroktaḥ (As on the verse)**

**VII.110.1** Moving away from the normal activities of men, making a choice to master the speech of the enlightened ones, conduct yourself according to the good guidances with all your friends.

**Jāteveda : Varuṇa**

**VII.111.1** O adorable Lord, what we have in forgetfulness; O knower of all, what fault we have committed in our conduct, from that, O well-discerning Lord, may you save us. May there be life eternal in good actions for us, your favoured friends.

**Sūryaḥ - Āpaḥ also**

**VII.112.1** Seven rays of the Sun make the waters of the ocean to descend down in streams from the sky. May those (waters) loosen the iron-headed weapon (lodged in your body) and remove it.

( ११३ ) त्रयोदशोत्तरशततमं सूक्तम्
(१-२) द्वयृचस्यास्य सूक्तस्य भृगुर्ऋषिः । अग्निर्देवता । (१) प्रथमर्चो बृहतीगर्भा त्रिष्टुप्, (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी ॥

यो नस्तायद्दिप्सति यो न आविः स्वो विद्वानरणो वा नो अग्ने ।
प्रतीच्येत्वरणी दत्वती तान्मैषामग्ने वास्तु भून्मो अपत्यम् ॥१॥
यो नः सुप्ताञ्जाग्रतो वाभिदासात्तिष्ठतो वा चरतो जातवेदः ।
वैश्वानरेण सयुजा सजोषास्तान्प्रतीचो निर्दह जातवेदः ॥२॥

यः । नः । स्तायत् । दिप्सति । यः । नः । आविः । स्वः । विद्वान् । अरणः । वा । नः । अग्ने ।
प्रतीची । एतु । अरणी । दत्वती । तान् । मा । एषाम् । अग्ने । वास्तु । भूत् । मो इति । अपत्यम् ॥
यः । नः । सुप्तान् । जाग्रतः । वा । अभिऽदासात् । तिष्ठतः । वा । चरतः । जातऽवेदः ।
वैश्वानरेण । सऽयुजा । सऽजोषाः । तान् । प्रतीचः । निः । दह । जातऽवेदः ॥ २ ॥

( ११४ ) चतुर्दशोत्तरशततमं सूक्तम्
(१-७) सप्तर्चस्यास्य सूक्तस्य बादरायणिर्ऋषिः । अग्निर्मन्त्रोक्ता वा देवताः । (१) प्रथमर्चो विराट् पुरस्ताद्बृहती, (२-३, ५-६) द्वितीयातृतीयापञ्चमीषष्ठीनां त्रिष्टुप्, (४, ७) चतुर्थीसप्तम्योश्चानुष्टुप् छन्दांसि ॥

इदमुग्राय बभ्रवे नमो यो अक्षेषु तनूवशी ।
घृतेन कलिं शिक्षामि स नो मृडातीदृशे ॥१॥
घृतमप्सराभ्यो वह त्वमग्ने पांसूनक्षेभ्यः सिकता अपश्च ।
यथाभागं हव्यदातिं जुषाणा मदन्ति देवा उभयानि हव्या ॥२॥
अप्सरसः सधमादं मदन्ति हविर्धानमन्तरा सूर्यं च ।
ता मे हस्तौ सं सृजन्तु घृतेन सपत्नं मे कितवं रन्धयन्तु ॥३॥

इदम् । उग्राय । बभ्रवे । नमः । यः । अक्षेषु । तनूऽवशी ।
घृतेन । कलिम् । शिक्षामि । सः । नः । मृडाति । ईदृशे ॥ १ ॥
घृतम् । अप्सराभ्यः । वह । त्वम् । अग्ने । पांसून् । अक्षेभ्यः । सिकताः । अपः । च ।
यथाऽभागम् । हव्यऽदातिम् । जुषाणाः । मदन्ति । देवाः । उभयानि । हव्या ॥ २ ॥
अप्सरसः । सधऽमादम् । मदन्ति । हविःऽधानम् । अन्तरा । सूर्यम् । च ।
ताः । मे । हस्तौ । सम् । सृजन्तु । घृतेन । सऽपत्नम् । मे । कितवम् । रन्धयन्तु ॥३॥

**Agniḥ**

**VII.113.1** O adorable Lord, whoever wants to harm us secretly or whosoever openly; whoever a knowledgeable, whether our kin or a stranger, (harms us), May the toothed (datvatī) stick (araṇī), turning backwards, come upon them. O adorable Lord, may they have no home nor any child.

**VII.113.2** O knower of all, whoever assails us asleep or awake, while standing or moving, may you, in accord with and aided by the benefactor of all men, consume them in retaliation, O knower of all.

**Agniḥ etc. (Mantroktāḥ)**

**VII.114.1** Let this homage be to the formidable sustainer, who is controller of his body regarding the sense-organs. With purified butter. I put down the quarrel. May he be gracious to us in such circumstances.

**VII.114.2** O fire, may you carry purified butter for them who move in clouds; for the gamblers (may you carry) dust, sand and water. Let the enlightened ones, who enjoy their allotted shares of oblations, revel (madanti) with both these offerings.

**VII.114.3** The energies moving in the clouds revel in their common dwelling place, which is in between the oblations receptacle and the Sun. May they fill my hands with purified butter and subjugate my rival, a gambler, to me.

आदिनवं प्रतिदीव्ने घृतेनास्माँ अभि क्षर ।
वृक्षमिवाशन्या जहि यो अस्मान्प्रतिदीव्यति ॥४॥
यो नो युवे धनमिदं चकार यो अक्षाणां ग्लहनं शेषणं च ।
स नो देवो हविरिदं जुषाणो गन्धर्वेभिः सधमादं मदेम ॥५॥
संवसव इति वो नामधेयमुग्रंपश्या राष्ट्रभृतो ह्य१क्षाः ।
तेभ्यो व इन्दवो हविषा विधेम वयं स्याम पतयो रयीणाम् ॥६॥
देवान्यन्नाथितो हुवे ब्रह्मचर्यं यदूषिम । अक्षान्यद्बभ्रूनालभे ते नो मृडन्त्वीदृशे ॥७॥

आदिनवम् । प्रतिऽदीव्ने । घृतेन । अस्मान् । अभि । क्षर ।
वृक्षम्ऽइव । अशन्या । जहि । यः । अस्मान् । प्रतिऽदीव्यति ॥ ४ ॥
यः । नः । युवे । धनम् । इदम् । चकार । यः । अक्षाणाम् । ग्लहनम् । शेषणम् । च ।
सः । नः । देवः । हविः । इदम् । जुषाणः । गन्धर्वेभिः । सधऽमादम् । मदेम ॥ ५ ॥
सम्ऽवसवः । इति । वः । नामऽधेयम् । उग्रम्ऽपश्याः । राष्ट्रऽभृतः । हि । अक्षाः ।
तेभ्यः । वः । इन्दवः । हविषा । विधेम । वयम् । स्याम । पतयः । रयीणाम् ॥ ६ ॥
देवान् । यत् । नाथितः । हुवे । ब्रह्मऽचर्यम् । यत् । ऊषिम ।
अक्षान् । यत् । बभ्रून् । आऽलभे । ते । नः । मृडन्तु । ईदृशे ॥ ७ ॥

( ११५ ) पञ्चदशोत्तरशततमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य भृगुर्ऋषिः । इन्द्राग्नी देवते । (१) प्रथमर्चो गायत्री,
(२) द्वितीयायास्त्रिष्टुप् , (३) तृतीयायाश्चानुष्टुप् छन्दांसि ॥

अग्न इन्द्रश्च दाशुषे हतो वृत्राण्यप्रति । उभा हि वृत्रहन्तमा ॥१॥
याभ्यामजयन्त्स्व१रग्र एव यावातस्थतुर्भुवनानि विश्वा ।
प्रचर्षणी वृषणा वज्रबाहू अग्निमिन्द्रं वृत्रहणा हुवेहम् ॥२॥

अग्ने । इन्द्रः । च । दाशुषे । हतः । वृत्राणि । अप्रति । उभा । हि । वृत्रहन्ऽतमा ॥१॥

याभ्याम् । अजयन् । स्वः । अग्रे । एव । यौ । आऽतस्थतुः । भुवनानि । विश्वा । प्र । चर्षणी इति । वृषणा । वज्रबाहू इति वज्रऽबाहू । अग्निम् । इन्द्रम् । वृत्रऽहना । हुवे । अहम् ॥ २ ॥

**VII.114.4** I desire to obtain victory over my rival longing for victory. May you shower purified butter on us. Him, who wants to gain victory over us, may you smite like a tree with the thunder-bolt.

**VII.114.5** Who has made this wealth for us to win, and who causes attraction and satisfaction to sense-organs, may that Lord accept and enjoy our this oblation. May we rejoice in company of the sustainer of the earth.

**VII.114.6** Bestowers of wealth (samvasavaḥ) is your name; O sense-organs, you are severe in watching and are sustainers of the domain. To you as such (idam vo), we offer these oblations. May we become masters of the riches.

**VII.114.7** With what purpose, being a suppliant, I invoke the enlightened ones, and have been living a student's life (Brahmacaryam), and touch my sense-organs, the sustainers, - may they be gracious to us in such circumstances.

## Indrāgnī (Pair)

**VII.115.1** O adorable king and O resplendent army-chief (Indra), may you destroy the evil-doers for the sake of him, who gives liberally. Verily, both of you are the top destroyers of the evil. (Agni = king; Indra = army-chief)

**VII.115.2** With whose help the enlightened ones won the world of bliss in the beginning, and who two have overcome all the beings - the adorable king and the resplendent army-chief I invoke, who are excellent observers, mighty, wielders of punitive weapon and destroyers of evil.

उप॑ त्वा दे॒वो अ॑ग्रभीच्चम॒सेन॒ बृह॒स्पतिः॑ ।
इन्द्र॑ गी॒र्भिर्न॒ आ वि॑श॒ यज॑मानाय सुन्व॒ते ॥३॥

उप॑ । त्वा॒ । दे॒वः । अ॒ग्र॒भी॒त् । च॒म॒सेन॑ । बृह॒स्पतिः॑ ।
इन्द्र॑ । गी॒ःऽभिः॑ । न॒ः । आ । वि॒श॒ । यज॑मानाय । सु॒न्व॒ते ॥ ३ ॥

( ११६ ) षोडशोत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्य ब्रह्मा ऋषिः । वृषभो देवता । पराबृहती त्रिष्टुप् छन्दः ॥

इन्द्र॑स्य कु॒क्षिर॑सि सोम॒धान॑ आ॒त्मा दे॒वाना॑मु॒त मानु॑षाणाम् ।
इ॒ह प्र॒जा ज॑नय॒ यास्त॑ आ॒सु या अ॒न्यत्रे॒ह तास्ते॑ रमन्ताम् ॥१॥

इन्द्र॑स्य । कु॒क्षिः । अ॒सि॒ । सो॒म॒ऽधान॑ः । आ॒त्मा । दे॒वाना॑म् । उ॒त । मानु॑षाणाम् ।
इ॒ह । प्र॒ऽजाः । ज॒न॒य॒ । याः । ते॒ । आ॒सु । याः । अ॒न्यत्र॑ । इ॒ह । ताः । ते॒ । र॒म॒न्ता॒म् ॥ १

( ११७ ) सप्तदशोत्तरशततमं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्य वरुण ऋषिः । आपो देवताः । प्रथमर्चो भुरिगनुष्टुप्, (२) द्वितीयायाश्चानुष्टुप् छन्दसी ॥

शुम्भ॑नी॒ द्यावा॑पृथि॒वी अन्ति॑सुम्ने॒ महि॑व्रते ।
आप॑ः स॒प्त सु॑स्रुवु॒र्दे॒वीस्ता नो॑ मुञ्च॒न्त्वंह॑सः ॥१॥
मु॒ञ्चन्तु॑ मा श॒प॒थ्या॒३॒॑दथो॑ वरु॒ण्या॒॑दु॒त ।
अथो॑ य॒मस्य॒ पड्वी॑शा॒द्विश्व॑स्माद्देवकिल्बि॒षात् ॥२॥

शुम्भ॑नी॒ इति॑ । द्यावा॑पृथि॒वी इति॑ । अन्ति॑सुम्ने॒ इत्यन्ति॑ऽसुम्ने । महि॑व्रते॒ इति॑ महि॑ऽव्रते ।
आप॑ः । स॒प्त । सु॒स्रु॒वुः॒ । दे॒वीः । ताः । न॒ः । मु॒ञ्च॒न्तु॒ । अंह॑सः ॥ १ ॥
मु॒ञ्चन्तु॑ । मा॒ । श॒प॒थ्या॒त् । अथो॒ इति॑ । व॒रु॒ण्या॒त् । उ॒त ।
अथो॒ इति॑ । य॒मस्य॑ । पड्वी॑शात् । विश्व॑स्मात् । दे॒व॒ऽकि॒ल्बि॒षात् ॥ २ ॥

( ११८ ) अष्टादशोत्तरशततमं सूक्तम्

(१-२) द्व्यृचस्यास्य सूक्तस्य भार्गव ऋषिः । तृष्टिका देवता । (१) प्रथमर्चो विराडनुष्टुप्,
(२) द्वितीयायाश्च शङ्कुमती चतुष्पदा भुरिगुष्णिक् छन्दसी ॥

तृष्टि॑के॒ तृष्ट॑वन्दन॒ उद॒मूं छि॑न्धि तृष्टिके ।
यथा॑ कृ॒तद्वि॒ष्टासो॒ऽमुष्मै॑ शे॒प्याव॑ते ॥१॥

तृष्टि॑के । तृष्ट॑ऽवन्दने । उत् । अ॒मूम् । छि॒न्धि॒ । तृ॒ष्टि॒के॒ ।
यथा॑ । कृ॒तऽद्वि॑ष्टा । अस॑ः । अ॒मुष्मै॑ । शे॒प्याऽव॑ते ॥ १ ॥

**VII.115.3** The Lord supreme has won you over with a bowl of devotional bliss. O resplendent Lord, invoked with hymns, may you come unto us for the sake of this sacrificer, offering his devotional bliss.

### Vṛṣabhaḥ (Bull)

**VII.116.1** You are the womb for the resplendent one, holder of semen (Soma), the soul of the enlightened ones as well as of the human beings. May you generate offsprings here, in these females, that are yours. Those females, that are elsewhere, may come here rest and revel with you (later on).

### Āpaḥ (waters)

**VII.117.1** Beauty-bestowing heaven and earth are granters of happiness within and are observers of great vows; seven flow the divine waters; may they free us from vice (sins, malady).

**VII.117.2** May they release me from the sins, committed by breaking of vow, or committed against the Lord of law (Varuṇa). May they release me from the fetters of death and from all the sins committed against the bounties of nature.(Also Yv, XII.70)

### Triṣṭikā

**VII.118.1** O (herb) causing intense thirst and burning, O parasite creeper causing thirst, cleave such and such woman off (from him), O thirster, so that she becomes hateful to such and such man of strong virile power.

तृष्टासि तृष्टिका विषा विषातक्य॑सि ।
परिवृक्ता यथासस्यृषभस्य वशेव ॥२॥

तृष्टा । असि । तृष्टिका । विषा । विषातकी । असि ।
परिऽवृक्ता । यथा । अससि । ऋषभस्य । वशाऽइव ॥ २ ॥

( ११९ ) एकोनविंशत्युत्तरशततमं सूक्तम्

(१-२) द्विपृवस्यास्य सूक्तस्य भार्गव ऋषिः । अग्नीषोमौ देवते । अनुष्टुप् छन्दः ॥

आ तें ददे वक्षणाभ्य आ तेहं हृदयाद्ददे ।
आ ते मुखस्य संकाशात्सर्वं ते वर्च आ ददे ॥१॥
प्रेतो यन्तु व्याध्यः प्रानुध्याः प्रो अशस्तयः ।
अग्नी रक्षस्विनीर्हन्तु सोमो हन्तु दुरस्यतीः ॥२॥

आ । ते । ददे । वक्षणाभ्यः । आ । ते । अहम् । हृदयात् । ददे ।
आ । ते । मुखस्य । सम्ऽकाशात् । सर्वम् । ते । वर्चः । आ । ददे ॥ १ ॥
प्र । इतः । यन्तु । विऽआध्यः । प्र । अनुऽध्याः । प्रो इति । अशस्तयः ।
अग्निः । रक्षस्विनीः । हन्तु । सोमः । हन्तु । दुरस्यतीः ॥ २ ॥

( १२० ) विंशत्युत्तरशततमं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वाङ्गिरा ऋषिः । सविता जातवेदाश्च देवते । (१, ४) प्रथमा-चतुर्थ्योर्ऋचोरनुष्टुप्, (२-३) द्वितीयातृतीययोश्च त्रिष्टुप् छन्दसी ॥

प्र पतेतः पापि लक्ष्मि नश्येतः प्रामुतः पत ।
अयस्मयेनाङ्केन द्विषते त्वा सजामसि ॥१॥
या मा लक्ष्मीः पतयालूरजुष्टाभिचस्कन्द वन्दनेव वृक्षम् ।
अन्यत्रास्मत्सवितस्तामितो धा हिरण्यहस्तो वसु नो रराणः ॥२॥

प्र । पत । इतः । पापि । लक्ष्मि । नश्य । इतः । प्र । अमुतः । पत ।
अयस्मयेन । अङ्केन । द्विषते । त्वा । आ । सजामसि ॥ १ ॥
या । मा । लक्ष्मीः । पतयालूः । अजुष्टा । अभिऽचस्कन्द । वन्दनाऽइव । वृक्षम् ।
अन्यत्र । अस्मत् । सवितः । ताम् । इतः । धाः । हिरण्यऽहस्तः । वसु । नः । रराणः ॥ २ ॥

**VII.118.2** O (herb) causing intense thirst and burning, a thirster you are. You are poison and a poisonous drink. (Consumed by my rival), may you (as well as she) become discarded, just as a barren cow is discarded by a strong bull.

### Agni - Soma (Pair)

**VII.119.1** I take away from your inner cavities; I take away from your heart; I take away from the look of your face all lustre and strength that you have.

**VII.119.2** May all the diseases flee away from here; may the worries flee as well as the evil fames. May the fire destroy the germs of wasting up diseases; may the medicinal herb (Soma) destroy the evil viruses (durasyatīḥ). (May the devotional bliss destroy the ill-wishers).

### Savitṛ and Jātavedāḥ

**VII.120.1** O evil wealth, flee from here fast. Run away from here; flee away from there too. With an iron-hook (ayasmayena aṅkena) we fasten you to him, who hates us.

**VII.120.2** What wealth, degrading and abominable, has dried me, like a (parasite) creeper a tree, O impeller Lord, may you place that somewhere else away from us. May you, with your hands full of gold (hiraṇya - hasta), granting liberally, bestow on us (rehabilitating) riches.

एकशतं लक्ष्म्यो मर्त्यस्य साकं तन्वा जनुषोधि जाताः ।
तासां पापिष्ठा निरितः प्र हिण्मः शिवा अस्मभ्यं जातवेदो नि यच्छ ॥३॥
एता एना व्याकरं खिले गा विष्ठिता इव ।
रमन्तां पुण्या लक्ष्मीर्याः पापीस्ता अनीनशम् ॥४॥

एकऽशतम् । लक्ष्म्यः । मर्त्यस्य । साकम् । तन्वा । जनुषः । अधि । जाताः ।
तासाम् । पापिष्ठाः । निः । इतः । प्र । हिण्मः । शिवाः । अस्मभ्यम् । जातऽवेदः । नि । यच्छ ॥३॥

एताः । एनाः । विऽआकरम् । खिले । गाः । विस्थिताःऽइव ।
रमन्ताम् । पुण्याः । लक्ष्मीः । याः । पापीः । ताः । अनीनशम् ॥ ४ ॥

( १२१ ) एकविंशत्युत्तरशततमं सूक्तम्
(१-२) द्वयृचस्यास्य सूक्तस्याथर्वाङ्गिरा ऋषिः । चन्द्रमा देवता । (१) प्रथमर्चः परोष्णिक्,
(२) द्वितीयायाश्चैकावसाना द्विपदार्च्यनुष्टुप् छन्दसी ॥

नमो रूराय च्यवनाय नोदनाय धृष्णवे । नमः शीताय पूर्वकामकृत्वने ॥१॥
यो अन्येद्युरुभयद्युरभ्येतीमं मण्डूकमभ्येत्वव्रतः ॥२॥

नमः । रूराय । च्यवनाय । नोदनाय । धृष्णवे ।
नमः । शीताय । पूर्वकामऽकृत्वने ॥ १ ॥
यः । अन्येद्युः । उभयऽद्युः । अभिऽएति । इमम् । मण्डूकम् । अभि । एतु । अव्रतः ॥ २ ॥

( १२२ ) द्वाविंशत्युत्तरशततमं सूक्तम्
(१) एकर्चस्यास्य सूक्तस्याथर्वाङ्गिरा ऋषिः । इन्द्रो देवता । पथ्याबृहती छन्दः ॥

आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ।
मा त्वा के चिद्वि यमन्विं न पाशिनोति धन्वेव ताँ इहि ॥१॥

आ । मन्द्रैः । इन्द्र । हरिऽभिः । याहि । मयूररोमऽभिः ।
मा । त्वा । के । चित् । वि । यमन् । विम् । न । पाशिनः । अति । धन्वऽइव । तान् । इहि ॥ १ ॥

**VII.120.3** A hundred and one wealths are born along with the body of a mortal at his birth, Out of those, we drive the most vicious ones away from here. O knower of all, may you grant us liberally the auspicious ones.

**VII.120.4** These and those I have separated like cows straying on a common pasture. What propitious wealths (puṇyāḥ lakṣmīḥ) are there, may they stay here; and which are evil (pāpīḥ) ones, them I drive away.

## Fevers (Jvaraḥ)

**VII.121.1** Our homage be to the (fever) burning hot (rūrāya), sweating (cyavanāya), delirious (codanāya), overwhelming (dhṛṣṇave); homage to the shivering (śitāya), the one, that slashes off previous intentions.

**VII.121.2** The fever, which comes after one day's interval, or which comes after two days interval, or which comes without any rule, may that go over to this frog (maṇḍūkam).

## Indraḥ

**VII.122.1** Come, resplendent Lord, with your beautiful multicolour radiant rays like that of a peacock. Let no obstruction detain you and catch you as the fowlers catch a bird by throwing snares. Pass and get away from them quickly as travellers cross a desert. (Also Ṛg. III.45.1)

( १२३ ) त्रयोविंशत्युत्तरशततमं सूक्तम्

(१) एकर्चस्यास्य सूक्तस्याथर्वाङ्गिरा ऋषिः । मन्त्रोक्ता चन्द्रमा वा देवता । त्रिष्टुप् छन्दः ॥

**मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजामृतेनानु वस्ताम् ।**
**उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु ॥१॥**

मर्माणि । ते । वर्मणा । छादयामि । सोमः । त्वा । राजा । अमृतेन । अनु । वस्ताम् ।
उरोः । वरीयः । वरुणः । ते । कृणोतु । जयन्तम् । त्वा । अनु । देवाः । मदन्तु ॥ १ ॥

॥ इति सप्तमं काण्डम् ॥

[ सप्तमकाण्डे सूक्तानि १२३, मन्त्राः २८६ ]

### Somaḥ, Varuṇaḥ and Devaḥ

**VII.123.1** I cover your vital parts with armour; may the royal Lord of bliss (Somarājā) invest you with ambrosia; may the venerable Lord (Indra) give you what is more than ample; may the divinities rejoice and revel your victory. (Also Ṛg. VI. 75.18)

---

**Here ends Kāṇḍa VII**
**Hymns 123-Verses 286**

---

# अथाष्टमं काण्डम् ॥

( १ ) प्रथमं सूक्तम्

(१-२१) एकविंशत्यृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः। आयुर्देवता। (१) प्रथमर्चः पुरोबृहती त्रिष्टुप्, (२-३, १७-२१) द्वितीयातृतीययोः सप्तदश्यादिपञ्चानाञ्चानुष्टुप्, (४, ९, १५-१६) चतुर्थीनवमीपञ्चदशी-षोडशीनां प्रस्तारपङ्क्तिः, (५-६, १०-११) पञ्चमीषष्ठीदशम्येकादशीनां त्रिष्टुप्, (७) सप्तम्या-स्त्रिपदा विराड्गायत्री, (८) अष्टम्या विराट्पथ्याबृहती, (१२) द्वादश्यास्त्र्यवसाना पञ्चपदा जगती, (१३) त्रयोदश्यास्त्रिपदा भुरिग्महाबृहती, (१४) चतुर्दश्या एका-वसाना द्विपदा साम्नी भुरिग्बृहती छन्दांसि ॥

अन्तकाय मृत्यवे नमः प्राणा अपाना इह ते रमन्ताम्।
इहायमस्तु पुरुषः सहासुना सूर्यस्य भागे अमृतस्य लोके ॥१॥
उदेनं भगो अग्रभीदुदेनं सोमो अंशुमान्। उदेनं मरुतो देवा उदिन्द्राग्नी स्वस्तये ॥२॥
इह तेसुरिह प्राण इहायुरिह ते मनः।
उत्त्वा निर्ऋत्याः पाशेभ्यो दैव्या वाचा भरामसि ॥३॥
उत्क्रामातः पुरुष माव पत्था मृत्योः पड्वीशमवमुञ्चमानः।
मा च्छित्था अस्माल्लोकादग्नेः सूर्यस्य संदृशः ॥४॥

अन्तकाय। मृत्यवे। नमः। प्राणाः। अपानाः। इह। ते। रमन्ताम्।
इह। अयम्। अस्तु। पुरुषः। सह। असुना। सूर्यस्य। भागे। अमृतस्य। लोके ॥१॥
उत्। एनम्। भगः। अग्रभीत्। उत्। एनम्। सोमः। अंशुऽमान्।
उत्। एनम्। मरुतः। देवाः। उत्। इन्द्राग्नी इति। स्वस्तये ॥ २ ॥
इह। ते। असुः। इह। प्राणः। इह। आयुः। इह। ते। मनः।
उत्। त्वा। निःऽऋत्याः। पाशेभ्यः। दैव्या। वाचा। भरामसि ॥ ३ ॥
उत्। क्राम। अतः। पुरुष। मा। अव। पत्थाः। मृत्योः। पड्वीशम्। अवऽमुञ्चमानः।
मा। छित्थाः। अस्मात्। लोकात्। अग्नेः। सूर्यस्य। सम्ऽदृशः ॥ ४ ॥

## Āyuḥ

**VIII.1.1** Homage be to death, that puts the end. May your out-breaths and in-breaths move on here with pleasure. May this man stay here full span of life, in the realm of the Sun, in the world of immortality.

**VIII.1.2** The Lord of good fortune has raised this man up; the radiant moon and the divine cloud-bearing winds (Maruts) have raised him up; the resplendent one (Indra) and the adorable one (Agni) have raised him up for his well-being.

**VIII.1.3** Here is your life, here your vital breath; here the life-span, and here is your mind. With the divine speech, we deliver and bear you up from the bonds of perdition (nirṛti).

**VIII.1.4** Move upwards from here, O man; being released from the fetters of death, may you not sink lower. May you not be severed from this world, from the view of fire and the Sun.

तुभ्यं वातः पवतां मातरिश्वा तुभ्यं वर्षन्त्वमृतान्यापः ।
सूर्यस्ते तन्वे३ शं तपाति त्वां मृत्युर्दयतां मा प्र मेष्ठाः ॥५॥
उद्यानं ते पुरुष नावयानं जीवातुं ते दक्षतातिं कृणोमि ।
आ हि रोहेममृतं सुखं रथमथ जिर्विर्विदथमा वदासि ॥६॥
मा ते मनस्तत्र गान्मा तिरो भून्मा जीवेभ्यः प्र मदो मानु गाः पितॄन् ।
विश्वे देवा अभि रक्षन्तु त्वेह ॥७॥
मा गतानामा दीधीथा ये नयन्ति परावतम् ।
आ रोह तमसो ज्योतिरेह्या ते हस्तौ रभामहे ॥८॥
श्यामश्च त्वा मा शबलश्च प्रेषितौ यमस्य यौ पथिरक्षी श्वानौ ।
अर्वाङेहि मा वि दीध्यो मात्र तिष्ठः पराङ्मनाः ॥९॥
मैतं पन्थामनु गा भीम एष येन पूर्वं नेयथ तं ब्रवीमि ।
तम एतत्पुरुष मा प्र पत्था भयं परस्तादभयं ते अर्वाक् ॥१०॥

तुभ्यम् । वातः । पवताम् । मातरिश्वा । तुभ्यम् । वर्षन्तु । अमृतानि । आपः ।
सूर्यः । ते । तन्वे । शम् । तपाति । त्वाम् । मृत्युः । दयताम् । मा । प्र । मेष्ठाः ॥५॥
उत्ऽयानम् । ते । पुरुष । न । अवऽयानम् । जीवातुम् । ते । दक्षऽतातिम् । कृणोमि ।
आ । हि । रोह । इमम् । अमृतम् । सुऽखम् । रथम् । अथ । जिर्विः । विदथम् ।
आ । वदासि ॥ ६ ॥
मा । ते । मनः । तत्र । गात् । मा । तिरः । भूत् । मा । जीवेभ्यः । प्र । मदः । मा ।
अनु । गाः । पितॄन् । विश्वे । देवाः । अभि । रक्षन्तु । त्वा । इह ॥ ७ ॥
मा । गतानाम् । आ । दीधीथाः । ये । नयन्ति । पराऽवतम् ।
आ । रोह । तमसः । ज्योतिः । आ । इहि । आ । ते । हस्तौ । रभामहे ॥ ८ ॥
श्यामः । च । त्वा । मा । शबलः । च । प्रऽइषितौ । यमस्य । यौ । पथिरक्षी इति
पथिऽरक्षी । श्वानौ । अर्वाङ् । आ । इहि । मा । वि । दीध्यः । मा । अत्र । तिष्ठः ।
पराक्ऽमनाः ॥ ९ ॥
मा । एतम् । पन्थाम् । अनु । गाः । भीमः । एषः । येन । पूर्वम् । न । इयथ । तम् । ब्रवीमि ।
तमः । एतत् । पुरुष । मा । प्र । पत्थाः । भयम् । परस्तात् । अभयम् । ते । अर्वाक् ॥

**VIII.1.5** May the wind of the midspace blow clean and pure for you. May the water rain elixir for you. May the Sun shine hot pleasing to your body. May death have mercy on you. May you not die.

**VIII.1.6** Let upward going be for you, not downward. I give you strength for living long. Do ascend this pleasing chariot of immortality. Thereafter in your old age, may you be addressing the assembly.

**VII.1.7** Let not your mind go that way (there). Let it not go lost. Do not overlook the living one. Do not go after the forefathers. May all the bounties of nature retain you well protected here.

**VIII.1.8** Do not think of the departed ones, who lead to the distances far remote. Out of the darkness down, may you ascend to the light (enlightenment). Come on; here we clasp (hold) both your hands.

**VIII.1.9** May the black one (śyāma) and the brindled (śabela) one, two dogs guarding the path, sent out by the controller Lord (Yama), not (seize) you. Come (hither) towards us. Do not think much. Stay not here with your mind inclined to the further side. (Śyāmau - Śabalau) - Ṛg.

**VIII.1.10** Follow not this path. This is awful. By which you shall not go before your time, that I tell you of. O man, do not enter this darkness. There is danger thitherwards; hitherward no fear for you.

रक्षन्तु त्वाग्नयो ये अप्स्व१न्ता रक्षतु त्वा मनुष्या३ यमिन्धते ।
वैश्वानरो रक्षतु जातवेदा दिव्यस्त्वा मा प्र धाग्विद्युता सह ॥११॥
मा त्वा क्रव्यादभि मंस्तारात्संकसुकाच्चर ।
रक्षतु त्वा द्यौ रक्षतु पृथिवी सूर्यश्च त्वा रक्षतां चन्द्रमाश्च ।
अन्तरिक्षं रक्षतु देवहेत्याः ॥१२॥
बोधश्च त्वा प्रतीबोधश्च रक्षतामस्वप्नश्च त्वानवद्राणश्च रक्षताम् ।
गोपायंश्च त्वा जागृविश्च रक्षताम् ॥१३॥
ते त्वा रक्षन्तु ते त्वा गोपायन्तु तेभ्यो नमस्तेभ्यः स्वाहा ॥१४॥
जीवेभ्यस्त्वा समुदे वायुरिन्द्रो धाता दधातु सविता त्रायमाणः ।
मा त्वा प्राणो बलं हासीदसुं तेनु ह्वयामसि ॥१५॥
मा त्वा जम्भः संहनुर्मा तमो विदन्मा जिह्वा बर्हिः प्रमयुः कथा स्याः ।
उत्त्वादित्या वसवो भरन्तूदिन्द्राग्नी स्वस्तये ॥१६॥

रक्षन्तु । त्वा । अग्नयः । ये । अप्ऽसु । अन्तः । रक्षतु । त्वा । मनुष्याः । यम् । इन्धते ।
वैश्वानरः । रक्षतु । जातऽवेदाः । दिव्यः । त्वा । मा । प्र । धाक् । विऽद्युता । सह ॥ ११ ॥
मा । त्वा । क्रव्यऽअत् । अभि । मंस्त । आरात् । सम्ऽकसुकात् । चर । रक्षतु । त्वा । द्यौः । रक्षतु ।
पृथिवी । सूर्यः । च । त्वा । रक्षताम् । चन्द्रमाः । च । अन्तरिक्षम् । रक्षतु । देवऽहेत्याः ॥
बोधः । च । त्वा । प्रतिऽबोधः । च । रक्षताम् । अस्वप्नः । च । त्वा । अनवऽद्राणः । च । रक्षताम् ।
गोपायन् । च । त्वा । जागृविः । च । रक्षताम् ॥ १३ ॥
ते । त्वा । रक्षन्तु । ते । त्वा । गोपायन्तु । तेभ्यः । नमः । तेभ्यः । स्वाहा ॥ १४ ॥
जीवेभ्यः । त्वा । सम्ऽउदे । वायुः । इन्द्रः । धाता । दधातु । सविता । त्रायमाणः ।
मा । त्वा । प्राणः । बलम् । हासीत् । असुम् । ते । अनु । ह्वयामसि ॥ १५ ॥
मा । त्वा । जम्भः । सम्ऽहनुः । मा । तमः । विदत् । मा । जिह्वा । आ । बर्हिः । प्रऽमयुः । कथा ।
स्याः । उत् । त्वा । आदित्याः । वसवः । भरन्तु । उत् । इन्द्राग्नी इति । स्वस्तये ॥१६॥

**VIII.1.11** May the fires, that dwell within the waters, protect you. May the one, whom men kindle, protect you. May the one residing in all human beings, the omniscient, protect you. May the celestial one, not burn you, with the lightning.

**VIII.1.12** May not the flesh-consuming (fire) claim you (as victim). Keep off the corpse-devouring one. May the heaven save you, the earth save you; may the Sun and the moon save you; may the midspace save you from the dart (missile) divine.

**VIII.1.13** May the awake and attentive guard you; may the undrowsy and the unsleepy guard you. May the saviour and the wakeful guard you.

**VIII.1.14** May they guard you; may they save you. Homage be to them. I dedicate it to them.

**VIII.1.15** May the omnipresent, the resplendent, the sustainer, and the protecting impeller Lord restore you to communion with the living beings. May not your vital breath, nor your strength forsake you. We hereby call your life back to you.

**VIII.1.16** May not the crusher with terrible jaws, find you; may not the darkness. Having sacred grass (barhiṣ) on your tongue, how can you perish ? May the old and the young sages, and the Lord resplendent and adorable, raise you up for your well-being.

उत्त्वा द्यौरुत्पृथिव्युत्प्रजापतिरग्रभीत्। उत्त्वा मृत्योरोषधयः सोमराज्ञीरपीपरन् ॥१७॥
अयं देवा इहैवास्त्वयं मामुत्र गादितः । इमं सहस्रवीर्येण मृत्योरुत्पारयामसि ॥१८॥
उत्त्वा मृत्योरपीपरं सं धमन्तु वयोधसः । मा त्वा व्यस्तकेश्यो३ मा त्वाघरुदो रुदन् ॥१९॥
आहार्षमविदं त्वा पुनरागाः पुनर्णवः । सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च तेविदम् ॥२०॥
व्यवात्ते ज्योतिरभूदप त्वत्तमो अक्रमीत् ।
अप त्वन्मृत्युं निर्ऋतिमप यक्ष्मं नि दध्मसि ॥२१॥

उत् । त्वा । द्यौः । उत् । पृथिवी । उत् । प्रजाऽपतिः । अग्रभीत् ।
उत् । त्वा । मृत्योः । ओषधयः । सोमऽराज्ञीः । अपीपरन् ॥ १७ ॥

अयम् । देवाः । इह । एव । अस्तु । अयम् । मा । अमुत्र । गात् । इतः ।
इमम् । सहस्रऽवीर्येण । मृत्योः । उत् । पारयामसि ॥ १८ ॥

उत् । त्वा । मृत्योः । अपीपरम् । सम् । धमन्तु । वयःऽधसः ।
मा । त्वा । व्यस्तऽकेश्यः । मा । त्वा । अघऽरुदः । रुदन् ॥ १९ ॥

आ । अहार्षम् । अविदम् । त्वा । पुनः । आ । अगाः । पुनःऽनवः ।
सर्वऽअङ्ग । सर्वम् । ते । चक्षुः । सर्वम् । आयुः । च । ते । अविदम् ॥ २० ॥

वि । अवात् । ते । ज्योतिः । अभूत् । अप । त्वत् । तमः । अक्रमीत् ।
अप । त्वत् । मृत्युम् । निःऽऋतिम् । अप । यक्ष्मम् । नि । दध्मसि ॥ २१ ॥

## ( २ ) द्वितीयं सूक्तम्

(१-२८) अष्टाविंशत्यृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । आयुर्देवता । (१-२, ७) प्रथमाद्वितीययोर्ऋचोः सप्तम्याश्च भुरिक्त्रिष्टुप् , (३, २६) तृतीयाषड्विंश्योरास्तारपङ्क्तिः, (४) चतुर्थ्याः प्रस्तारपङ्क्तिः, (५, १०, १६, १८, २०, २३-२५, २७) पञ्चमीदशमीषोडश्यष्टादशीविंशीनां त्रयोविंश्यादितृचस्य सप्तविंश्याश्चानुष्टुप् , (६, १५) षष्ठीपञ्चदश्योः पथ्यापङ्क्तिः, (८) अष्टम्याः पुरस्ताज्ज्योतिष्मती जगती, (९) नवम्याः पञ्चपदा जगती, (११) एकादश्या विष्टारपङ्क्तिः, (१२, २२, २८) द्वादशीद्वाविंश्यष्टाविंशीनां पुरस्ताद्बृहती, (१३) त्रयोदश्यास्त्रिष्टुप् , (१४) चतुर्दश्यास्त्र्यवसाना षट्पदा जगती, (१७) सप्तदश्यास्त्रिपदानुष्टुप् , (१९) एकोनविंश्या उपरिष्टाद्बृहती, (२१) एकविंश्याश्च सतःपङ्क्तिश्छन्दांसि ॥

आ रभस्वेमाममृतस्य श्नुष्टिमच्छिद्यमाना जरदष्टिरस्तु ते ।
असुं त आयुः पुनरा भरामि रजस्तमो मोप गा मा प्र मेष्ठाः ॥१॥

आ । रभस्व । इमाम् । अमृतस्य । श्नुष्टिम् । अच्छिद्यमाना । जरतऽअष्टिः । अस्तु । ते । असुम् । ते । आयुः । पुनः । आ । भरामि । रजः । तमः । मा । उप । गाः । मा । प्र । मेष्ठाः ॥१॥

**VIII.1.17** May the heaven, may the earth, and may the Lord of creatures raise you up. May the medicines, whose lord is the moon, rescue you from death.

**VIII.1.18** O bounties of nature, may this man remain just here. May he not go yonder from here. With this thousand-fold potent medicine, we bear him up out of death.

**VIII.1.19** I have rescued you from death. May the life-bestowers blow you. May not womenfolk with dishevelled hair, nor the wailers for the dead, wail for you.

**VIII.1.20** I have snatched you (from death). I have got you back. You have come again, new again. O whole-limbed person, I have restored to you all your vision and all your life-span.

**VIII.1.21** The life has breathed in; the light has come to you; the darkness has crept away from you. May we remove you from death, perdition and the wasting disease. (yakṣmam)

## Āyuḥ

**VIII.2.1** Take hold of this stream of immortality; may unserved be your life-span unto old age. I infuse again life and longevity in you. Do not go to dust and darkness. May you not die.

जीवतां ज्योतिरभ्येह्यर्वाङा त्वा हरामि शतशारदाय ।
अवमुञ्चन्मृत्युपाशानशस्तिं द्राघीय आयुः प्रतरं ते दधामि ॥२॥
वातात्ते प्राणमविदं सूर्याच्चक्षुरहं तव ।
यत्ते मनस्त्वयि तद्धारयामि सं वित्स्वाङ्गैर्वद जिह्वयालपन् ॥३॥
प्राणेन त्वा द्विपदां चतुष्पदामग्निमिव जातमभि सं धमामि ।
नमस्ते मृत्यो चक्षुषे नमः प्राणाय तेकरम् ॥४॥

अयं जीवतु मा मृतेमं समीरयामसि ।
कृणोम्यस्मै भेषजं मृत्यो मा पुरुषं वधीः ॥५॥

जीवलां नघारिषां जीवन्तीमोषधीमहम् ।
त्रायमाणां सहमानां सहस्वतीमिह हुवेस्मा अरिष्टतातये ॥६॥
अधि ब्रूहि मा रभथाः सृजेमं तवैव सन्त्सर्वहाया इहास्तु ।
भवाशर्वौ मृडतं शर्म यच्छतमपसिध्य दुरितं धत्तमायुः ॥७॥

जीवताम् । ज्योतिः । अभिऽएहि । अर्वाङ् । आ । त्वा । हरामि । शतऽशारदाय ।
अवऽमुञ्चन् । मृत्युऽपाशान् । अशस्तिम् । द्राघीयः । आयुः । प्रऽतरम् । ते । दधामि ॥ २ ॥
वातात् । ते । प्राणम् । अविदम् । सूर्यात् । चक्षुः । अहम् । तव । यत् । ते ।
मनः । त्वयि । तत् । धारयामि । सम् । वित्स्व । अङ्गैः । वद । जिह्वया । अलपन् ॥३॥
प्राणेन । त्वा । द्विऽपदाम् । चतुःऽपदाम् । अग्निम्ऽइव । जातम् । अभि । सम् । धमामि ।
नमः । ते । मृत्यो इति । चक्षुषे । नमः । प्राणाय । ते । अकरम् ॥ ४ ॥
अयम् । जीवतु । मा । मृत । इमम् । सम् । ईरयामसि ।
कृणोमि । अस्मै । भेषजम् । मृत्यो इति । मा । पुरुषम् । वधीः ॥५॥
जीवलाम् । नघऽरिषाम् । जीवन्तीम् । ओषधीम् । अहम् ।
त्रायमाणाम् । सहमानाम् । सहस्वतीम् । इह । हुवे । अस्मै । अरिष्टऽतातये ॥ ६ ॥
अधि । ब्रूहि । मा । आ । रभथाः । सृज । इमम् । तव । एव । सन् । सर्वऽहायाः । इह ।
अस्तु । भवाशर्वौ । मृडतम् । शर्म । यच्छतम् । अपऽसिध्य । दुःऽइतम् । धत्तम् । आयुः ॥

**VIII.2.2** Come towards the light of the living. I draw you hitherward for a life of hundred autumns. Releasing the nooses (pāśān) of death and the infamy, I grant you a better and longer life-span.

**VIII.2.3** From the wind I have procured your vital breath and from the Sun your vision. What is your mind, that I confirm in you. Be in unison with your members. Speak with your tongue unlamenting.

**VIII.2.4** I blow on you from all sides with the breath of the bipeds and the quadrupeds, as on a newly born fire. Homage to your vision and homage to your vital breath, I pay, O death.

**VIII.2.5** May this man live on; let him not die. We stir him to life. I administer a medicine to him. O death, may you not slay this man.

**VIII.2.6** To keep this man out of harm's way, I administer to him the herb Jivanti, bestower of new life, producing no bad-effect, protecting, overwhelming (the disease) and an invigorating tonic.

**VIII.2.7** (O death), comfort (this man); do not seize; leave this man. Being devoted to you alone, may he remain here all his life-time. O Lord of creation and the Lord of destruction, may you, grant him happiness; give him shelter; driving away the distress grant him a full life-span.

अस्मै मृत्यो अधि ब्रूहीमं दयस्वोदितो३ऽयमेतु ।
अरिष्टः सर्वाङ्गः सुश्रुज्जरसा शतहायन आत्मना भुजमश्नुताम् ॥८॥
देवानां हेतिः परि त्वा वृणक्तु पारयामि त्वा रजस उत्त्वा मृत्योरपीपरम्।
आरादग्निं क्रव्यादं निरूहं जीवातवे ते परिधिं दधामि ॥९॥
यत्ते नियानं रजसं मृत्यो अनवधर्ष्यम्।
पथ इमं तस्माद्रक्षन्तो ब्रह्मास्मै वर्म कृण्मसि ॥१०॥
कृणोमि ते प्राणापानौ जरां मृत्युं दीर्घमायुः स्वस्ति ।
वैवस्वतेन प्रहितान्यमदूतांश्चरतोप सेधामि सर्वान् ॥११॥
आरादरातिं निर्ऋतिं परो ग्राहिं क्रव्यादः पिशाचान् ।
रक्षो यत्सर्वं दुर्भूतं तत्तम इवाप हन्मसि ॥१२॥
अग्नेष्टे प्राणममृतादायुष्मतो वन्वे जातवेदसः ।
यथा न रिष्या अमृतः सजूरसस्तत्ते कृणोमि तदु ते समृध्यताम् ॥१३॥

अस्मै । मृत्यो इति । अधि । ब्रूहि । इमम् । दयस्व । उत् । इतः । अयम् । एतु ।
अरिष्टः । सर्वऽअङ्गः । सुऽश्रुत् । जरसा । शतऽहायनः । आत्मना । भुजम् । अश्नुताम् ॥
देवानाम् । हेतिः । परि । त्वा । वृणक्तु । पारयामि । त्वा । रजसः । उत् । त्वा । मृत्योः ।
अपीपरम् । आरात् । अग्निम् । क्रव्यऽअदम् । निःऽऊहन् । जीवातवे । ते । परिऽधिम् ।
दधामि ॥ ९ ॥
यत् । ते । निऽयानम् । रजसम् । मृत्यो इति । अनवऽधर्ष्यम् ।
पथः । इमम् । तस्मात् । रक्षन्तः । ब्रह्म । अस्मै । वर्म । कृण्मसि ॥ १० ॥
कृणोमि । ते । प्राणापानौ । जराम् । मृत्युम् । दीर्घम् । आयुः । स्वस्ति ।
वैवस्वतेन । प्रऽहितान् । यमऽदूतान् । चरतः । अप । सेधामि । सर्वान् ॥ ११ ॥
आरात् । अरातिम् । निःऽऋतिम् । परः । ग्राहिम् । क्रव्यऽअदः । पिशाचान् ।
रक्षः । यत् । सर्वम् । दुःऽभूतम् । तत् । तमःऽइव । अप । हन्मसि ॥ १२ ॥
अग्नेः । ते । प्राणम् । अमृतात् । आयुष्मतः । वन्वे । जातऽवेदसः । यथा । न । रिष्याः ।
अमृतः । सऽजूः । असः । तत् । ते । कृणोमि । तत् । ऊं इति । ते । सम् । ऋध्यताम् ॥१३॥

**VIII.2.8** O death, comfort this man; have mercy on him. May he rise up from here. May he enjoy his exploits himself uninjured, whole-limbed, well-hearing, upto the old age of a hundred years.

**VIII.2.9** May the dart divine avoid you. I carry you across the midst. I have raised you up from death below. I have kept the flesh-consuming fire away from you. I set up protective enclosure for your life.

**VIII.2.10** O death, protecting this man from your misty descending path, which can never be defied, we make prayer an armour for this man.

**VIII.2.11** I make your out-breath and in-breath, your long life-span, your old age, and death peaceful. I drive away all the roaming death messengers, sent by time, born of the sun (Vaivasvata).

**VIII.2.12** Adversity, perdition, epileptic seizure, flesh-eaters, blood-suckers, germs of wasting diseases, and all that is malignant, we drive far away like darkness.

**VIII.2.13** I win your life from the adorable Lord, the immortal, the bestower of life, and the omniscient. I make it so for you,that you may remain uninjured, undying, and contented, May it prosper for you.

शिवे ते स्तां द्यावापृथिवी असंतापे अभिश्रियौ ।
शं ते सूर्य आ तपतु शं वातो वातु ते हृदे ।
शिवा अभि क्षरन्तु त्वापो दिव्याः पयस्वतीः ॥१४॥
शिवास्ते सन्त्वोषधय उत्त्वाहार्षमधरस्या उत्तरां पृथिवीमभि ।
तत्र त्वादित्यौ रक्षतां सूर्याचन्द्रमसावुभा ॥१५॥
यत्ते वासः परिधानं यां नीविं कृणुषे त्वम् ।
शिवं ते तन्वे३ तत्कृण्मः संस्पर्शेऽद्रूक्ष्णमस्तु ते ॥१६॥
यत्क्षुरेण मर्चयता सुतेजसा वप्ता वपसि केशश्मश्रु ।
शुभं मुखं मा न आयुः प्र मोषीः ॥१७॥
शिवौ ते स्तां व्रीहियवावबलासावदोमधौ ।
एतौ यक्ष्मं वि बाधेते एतौ मुञ्चतो अंहसः ॥१८॥
यदश्नासि यत्पिबसि धान्यं१ कृष्याः पयः ।
यदाद्यं१ यदनाद्यं सर्वं ते अन्नमविषं कृणोमि ॥१९॥

शिवे इति । ते । स्ताम् । द्यावापृथिवी इति । असंतापे इत्यसम्ऽतापे । अभिऽश्रियौ ।
शम् । ते । सूर्यः । आ । तपतु । शम् । वातः । वातु । ते । हृदे । शिवाः । अभि । क्षरन्तु ।
त्वा । आपः । दिव्याः । पयस्वतीः ॥ १४ ॥

शिवाः । ते । सन्तु । ओषधयः । उत् । त्वा । अहार्षम् । अधरस्याः । उत्तराम् । पृथिवीम् । अभि ।
तत्र । त्वा । आदित्यौ । रक्षताम् । सूर्याचन्द्रमसौ । उभा ॥ १५ ॥

यत् । ते । वासः । परिऽधानम् । याम् । नीविम् । कृणुषे । त्वम् ।
शिवम् । ते । तन्वे । तत् । कृण्मः । सम्ऽस्पर्शे । अद्रूक्ष्णम् । अस्तु । ते ॥ १६ ॥

यत् । क्षुरेण । मर्चयता । सुऽतेजसा । वप्ता । वपसि । केशऽश्मश्रु ।
शुभम् । मुखम् । मा । नः । आयुः । प्र । मोषीः ॥ १७ ॥

शिवौ । ते । स्ताम् । व्रीहिऽयवौ । अबलासौ । अदोमधौ ।
एतौ । यक्ष्मम् । वि । बाधेते इति । एतौ । मुञ्चतः । अंहसः ॥ १८ ॥

यत् । अश्नासि । यत् । पिबसि । धान्यम् । कृष्याः । पयः ।
यत् । आद्यम् । यत् । अनाद्यम् । सर्वम् । ते । अन्नम् । अविषम् । कृणोमि ॥ १९ ॥

**VIII.2.14** May heaven and earth be propitious to you, free from suffering and full of splendour. May the sun shine hot to your joy and happiness. May the wind blow happiness in your heart. May the celestial waters, full of milk, flow graciously to you.

**VIII.2.15** May the plants (herbs) be propitious to you. I have raised you up to the higher earth from the lower one. May the two sons of eternity, the sun and the moon, protect you there.

**VIII.2.16** What your garment is to cover your upper part (paridhāna) and what cloth you put on as under-wear (nīvi), that we make propitious for your body, so that it may be soft in touch to you.

**VIII.2.17** When as a barber, you shave hair (Keśa) and beard (Śmaśru) with an injuring and very shining razor, make our appearance pleasing to look at. Do not steal away our life-span.

**VIII.2.18** May the rice and barley, free from, wasting disease and pleasing to eat, be propitious to you. Both these resist the consumption and purge the malady.

**VIII.2.19** What grain, grown by cultivation, you eat, what milk you drink, what is edible, what is not edible - all your food I make unpoisoned.

अह्ने च त्वा रात्र्ये चोभाभ्यां परि दद्मसि ।
अरायेभ्यो जिघत्सुभ्य इमं मे परि रक्षत ॥२०॥
शतं तेयुतं हायनान्द्वे युगे त्रीणि चत्वारि कृण्मः ।
इन्द्राग्नी विश्वे देवास्तेनु मन्यन्तामहृणीयमानाः ॥२१॥
शरदे त्वा हेमन्ताय वसन्ताय ग्रीष्माय परि दद्मसि ।
वर्षाणि तुभ्यं स्योनानि येषु वर्धन्त ओषधीः ॥२२॥
मृत्युरीशे द्विपदां मृत्युरीशे चतुष्पदाम् ।
तस्मात्त्वां मृत्योर्गोपतेरुद्भरामि स मा बिभेः ॥२३॥
सोऽरिष्ट न मरिष्यसि न मरिष्यसि मा बिभेः ।
न वै तत्र म्रियन्ते नो यन्त्यधमं तमः ॥२४॥
सर्वो वै तत्र जीवति गौरश्वः पुरुषः पशुः ।
यत्रेदं ब्रह्म क्रियते परिधिर्जीवनाय कम् ॥२५॥

अह्ने । च । त्वा । रात्र्ये । च । उभाभ्याम् । परि । दद्मसि ।
अरायेभ्यः । जिघत्सुऽभ्यः । इमम् । मे । परि । रक्षत ॥ २० ॥
शतम् । ते । अयुतम् । हायनान् । द्वे इति । युगे इति । त्रीणि । चत्वारि । कृण्मः ।
इन्द्राग्नी इति । विश्वे । देवाः । ते । अनु । मन्यन्ताम् । अहृणीयमानाः ॥ २१ ॥
शरदे । त्वा । हेमन्ताय । वसन्ताय । ग्रीष्माय । परि । दद्मसि ।
वर्षाणि । तुभ्यम् । स्योनानि । येषु । वर्धन्ते । ओषधीः ॥ २२ ॥
मृत्युः । ईशे । द्विऽपदाम् । मृत्युः । ईशे । चतुःऽपदाम् ।
तस्मात् । त्वाम् । मृत्योः । गोऽपतेः । उत् । भरामि । सः । मा । बिभेः ॥२३॥
सः । अरिष्ट । न । मरिष्यसि । न । मरिष्यसि । मा । बिभेः ।
न । वै । तत्र । म्रियन्ते । नो इति । यन्ति । अधमम् । तमः ॥ २४ ॥
सर्वः । वै । तत्र । जीवति । गौः । अश्वः । पुरुषः । पशुः ।
यत्र । । इदम् । ब्रह्म । क्रियते । परिऽधिः । जीवनाय । कम् ॥ २५ ॥

**VIII.2.20** I hand you over (as a charge) to day and to night, to both of them. May you protect my this man from evil-minded ones, seeking to devour him.

**VIII.2.21** We make your hundred years of life-span ten thousand years extending over two, three, four ages. May the Lord resplendent and adorable, and all the bounties of nature approve it for you ungrudgingly.

**VIII.2.22** We hand you over (as a charge) to autumn, to winter, to spring and to summer. For you pleasing be the rains, during which the plants grow up.

**VIII.2.23** Death rules over bipeds, death rules over quadrupeds. From that death, the master of the earth, I bear you up. Now, be not afraid.

**VIII.2.24** Such one, O unharmed, you will not die. You will not die. Do not be afraid. Certainly there they do not die, nor they enter the darkness below.

**VIII.2.25** Certainly all there remain alive - the cow, the horse, the man, the animal, where this prayer is made a pleasing protective enclosure for long life.

परि त्वा पातु समानेभ्योऽभिचारात्सबन्धुभ्यः ।
अमम्रिर्भवामृतोऽतिजीवो मा ते हासिषुरसवः शरीरम् ॥२६॥
ये मृत्यव एकशतं या नाष्ट्रा अतितार्याः ।
मुञ्चन्तु तस्मात्त्वां देवा अग्नेर्वैश्वानरादधि ॥२७॥
अग्नेः शरीरमसि पारयिष्णु रक्षोहासि सपत्नहा ।
अथो अमीवचातनः पूतुद्रुर्नाम भेषजम् ॥२८॥

परि । त्वा । पातु । समानेभ्यः । अभिऽचारात् । सबन्धुऽभ्यः ।
अमम्रिः । भव । अमृतः । अतिऽजीवः । मा । ते । हासिषुः । असवः । शरीरम् ॥२६॥
ये । मृत्यवः । एकऽशतम् । याः । नाष्ट्राः । अतिऽतार्याः ।
मुञ्चन्तु । तस्मात् । त्वाम् । देवाः । अग्नेः । वैश्वानरात् । अधि ॥२७॥
अग्नेः । शरीरम् । असि । पारयिष्णु । रक्षःऽहा । असि । सपत्नऽहा ।
अथो इति । अमीवऽचातनः । पूतुद्रुः । नाम । भेषजम् ॥ २८ ॥

(३) तृतीयं सूक्तम्

(१-२६) षड्विंशत्यृचस्यास्य सूक्तस्य चातन ऋषिः । अग्निर्देवता । (१-६, ८-११, १३, १६, १८-२०, २४ ) प्रथमादिषड्ऋचामष्टम्यादिचतसृणां त्रयोदशीषोडश्योरष्टादश्यादितृचस्य चतुर्विंश्याश्च त्रिष्टुप्, (७, १२, १४-१५, १७, २१) सप्तमीद्वादशीचतुर्दशीपञ्चदशीसप्तदश्येकविंशीनां भुरिक्त्रिष्टुप्, (२२-२३) द्वाविंशीत्रयोविंश्योरनुष्टुप्, (२५) पञ्चविंश्याः पञ्चपदा बृहतीगर्भा जगती, (२६) षड्विंश्याश्च गायत्री छन्दांसि ॥

रक्षोहणं वाजिनमा जिघर्मि मित्रं प्रथिष्ठमुप यामि शर्म ।
शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा स रिषः पातु नक्तम् ॥१॥
अयोदंष्ट्रो अर्चिषा यातुधानानुप स्पृश जातवेदः समिद्धः ।
आ जिह्वया मूरदेवान्रभस्व क्रव्यादो वृष्ट्वापि धत्स्वासन् ॥२॥

रक्षःऽहनम् । वाजिनम् । आ । जिघर्मि । मित्रम् । प्रथिष्ठम् । उप । यामि । शर्म ।
शिशानः । अग्निः । क्रतुऽभिः । सम्ऽइद्धः । सः । नः । दिवा । सः । रिषः । पातु । नक्तम् ॥ १ ॥
अयःऽदंष्ट्रः । अर्चिषा । यातुऽधानान् । उप । स्पृश । जातऽवेदः । सम्ऽइद्धः ।
आ । जिह्वया । मूरऽदेवान् । रभस्व । क्रव्यऽअदः । वृष्ट्वा । अपि । धत्स्व । आसन् ॥२॥

**VIII.2.26** May this protect you from the violence coming from your equals and from your kins. May you be undying, immortal, overflowing with life. May the vital breaths not forsake your body.

**VIII.2.27** From deaths, which are of a hundred and one types, and from the calamities, which have to be crossed over, may the enlightened ones, under the leadership of the adorable Lord, the benefactor of all men, rescue you.

**VIII.2.28** O putudru (pinus deodar), you are an embodiment of fire, capable of carrying across the trouble. You are killer of germs of the wasting diseases, and slayer of the rivals; destroyer of disease, a medicine (you are) putudru by name.

## Agniḥ

**VIII.3.1** I invoke the mighty killer of wicked ones. I reach his friendly and most extended protection. May he, the adorable leader encouraged with sacrifices, and raging furiously, protect us by day; may he protect us by night.

**VIII.3.2** O knower of all, enraged, iron-jawed, may you caress the tormentors with your flame. May you assail the worshippers of foolish deities with your tongue. Cutting to pieces, the flesh-eaters, may you enclose them in your mouth.

उभोभयाविन्नुप धेहि दंष्ट्रौ हिंस्रः शिशानोवरं परं च ।
उतान्तरिक्षे परि याह्यग्ने जम्भैः सं धेह्यभि यातुधानान् ॥३॥
अग्ने त्वचं यातुधानस्य भिन्धि हिंस्राशनिर्हरसा हन्त्वेनम् ।
प्र पर्वाणि जातवेदः शृणीहि क्रव्यात्क्रविष्णुर्वि चिनोत्वेनम् ॥४॥
यत्रेदानीं पश्यसि जातवेदस्तिष्ठन्तमग्न उत वा चरन्तम् ।
उतान्तरिक्षे पतन्तं यातुधानं तमस्ता विध्य शर्वा शिशानः ॥५॥
यज्ञैरिषूः संनममानो अग्ने वाचा शल्याँ अशनिभिर्दिहानः ।
ताभिर्विध्य हृदये यातुधानान्प्रतीचो बाहून्प्रति भङ्ग्ध्येषाम् ॥६॥
उतारब्धान्स्पृणुहि जातवेद उतारेभाणाँ ऋष्टिभिर्यातुधानान् ।
अग्ने पूर्वो नि जहि शोशुचान आमादः क्ष्विङ्कास्तमदन्त्वेनीः ॥७॥
इह प्र ब्रूहि यतमः सो अग्ने यातुधानो य इदं कृणोति ।
तमा रभस्व समिधा यविष्ठ नृचक्षसश्चक्षुषे रन्धयैनम् ॥८॥

उभा । उभयाविन् । उप । धेहि । दंष्ट्रौ । हिंस्रः । शिशानः । अवरम् । परम् । च ।
उत । अन्तरिक्षे । परि । याहि । अग्ने । जम्भैः । सम् । धेहि । अभि । यातुऽधानान् ॥
अग्ने । त्वचम् । यातुऽधानस्य । भिन्धि । हिंस्रा । अशनिः । हरसा । हन्तु । एनम् ।
प्र । पर्वाणि । जातऽवेदः । शृणीहि । क्रव्यऽअत् । क्रविष्णुः । वि । चिनोतु । एनम् ॥४॥
यत्र । इदानीम् । पश्यसि । जातऽवेदः । तिष्ठन्तम् । अग्ने । उत । वा । चरन्तम् ।
उत । अन्तरिक्षे । पतन्तम् । यातुऽधानम् । तम् । अस्ता । विध्य । शर्वा । शिशानः ॥५॥
यज्ञैः । इषूः । सम्ऽनममानः । अग्ने । वाचा । शल्यान् । अशनिऽभिः । दिहानः ।
ताभिः । विध्य । हृदये । यातुऽधानान् । प्रतीचः । बाहून् । प्रति । भङ्ग्धि । एषाम् ॥
उत । आऽरब्धान् । स्पृणुहि । जातऽवेदः । उत । आऽरेभाणान् । ऋष्टिऽभिः । यातुऽधानान् ।
अग्ने । पूर्वः । नि । जहि । शोशुचानः । आमऽअदः । क्ष्विङ्काः । तम् । अदन्तु । एनीः ॥
इह । प्र । ब्रूहि । यतमः । सः । अग्ने । यातुऽधानः । यः । इदम् । कृणोति ।
तम् । आ । रभस्व । सम्ऽइधा । यविष्ठ । नृऽचक्षसः । चक्षुषे । रन्धय । एनम् ॥८॥

**VIII.3.3** O violent, burning fiercely, knowing both of them, may you dig both your jaws, the upper and the lower in them. O adorable leader, sacrificial fire, may you reach out into the midspace also and attack the tormentor with your teeth.

**VIII.3.4** O sacrificial fire, may you pierce the skin of the tormentors. May the violent lightning kill him with intense heat. O knower of all, tear his joints to pieces; let a flesh-eater, yearning for flesh, drag and devour him.

**VIII.3.5** O knower of all, wherever you see any tormentors, standing still, or moving about, or flying up in the midspace, O sacrificial fire, may you, the killer, (burning) fiercely, pierce him through and hurl him down.

**VIII.3.6** O sacrificial fire, straightening your arrows with sacrifices and sharpening the points of your shafts with sacred speech and the thunder-bolts - with them may you pierce the tormentors through their hearts and break their arms raised up for attack.

**VIII.3.7** O knower of all, may you smite with your weapons the tormentors, who have invaded and also those who are coming to invade. O sacrificial fire, may you, blazing fiercely, kill them first. Let the spotted carrion-eating birds (Kṣviṅka) devour him.

**VIII.3.8** O adorable leader, may you tell us here, which is that tormentor, who has been doing all this. Strike him with a flaming stick Samidh (wand), O most youthful; capture him, so that all the observing persons may see him.

तीक्ष्णेनाग्ने चक्षुषा रक्ष यज्ञं प्राञ्चं वसुभ्यः प्र णय प्रचेतः ।
हिंस्रं रक्षांस्यभि शोशुचानं मा त्वा दभन्यातुधाना नृचक्षः ॥९॥
नृचक्षा रक्षः परि पश्य विक्षु तस्य त्रीणि प्रति शृणीह्यग्रा ।
तस्याग्ने पृष्टीर्हरसा शृणीहि त्रेधा मूलं यातुधानस्य वृश्च ॥१०॥
त्रिर्यातुधानः प्रसितिं त एत्वृतं यो अग्ने अनृतेन हन्ति ।
तमर्चिषा स्फूर्जयञ्जातवेदः समक्षमेनं गृणते नि युङ्ग्धि ॥११॥
यदग्ने अद्य मिथुना शपातो यद्वाचस्तृष्टं जनयन्त रेभाः ।
मन्योर्मनसः शरव्या३ जायते या तया विध्य हृदये यातुधानान् ॥१२॥
परा शृणीहि तपसा यातुधानान्पराग्ने रक्षो हरसा शृणीहि ।
परार्चिषा मूरदेवाञ्छृणीहि परासुतृपः शोशुचतः शृणीहि ॥१३॥
पराद्य देवा वृजिनं शृणन्तु प्रत्यगेनं शपथा यन्तु सृष्टाः ।
वाचास्तेनं शरव ऋच्छन्तु मर्मन्विश्वस्यैतु प्रसितिं यातुधानः ॥१४॥

तीक्ष्णेन । अग्ने । चक्षुषा । रक्ष । यज्ञम् । प्राञ्चम् । वसुऽभ्यः । प्र । नय । प्रऽचेतः ।
हिंस्रम् । रक्षांसि । अभि । शोशुचानम् । मा । त्वा । दभन् । यातुऽधानाः । नृऽचक्षः ॥९॥
नृऽचक्षाः । रक्षः । परि । पश्य । विक्षु । तस्य । त्रीणि । प्रति । शृणीहि । अग्रा ।
तस्य । अग्ने । पृष्टीः । हरसा । शृणीहि । त्रेधा । मूलम् । यातुऽधानस्य । वृश्च ॥१०॥
त्रिः । यातुऽधानः । प्रऽसितिम् । ते । एतु । ऋतम् । यः । अग्ने । अनृतेन । हन्ति ।
तम् । अर्चिषा । स्फूर्जयन् । जातऽवेदः । समऽअक्षम् । एनम् । गृणते । नि । युङ्ग्धि ॥
यत् । अग्ने । अद्य । मिथुना । शपातः । यत् । वाचः । तृष्टम् । जनयन्त । रेभाः ।
मन्योः । मनसः । शरव्या । जायते । या । तया । विध्य । हृदये । यातुऽधानान् ॥ १२ ॥
परा । शृणीहि । तपसा । यातुऽधानान् । परा । अग्ने । रक्षः । हरसा । शृणीहि ।
परा । अर्चिषा । मूरऽदेवान् । शृणीहि । परा । असुऽतृपः । शोशुचतः । शृणीहि ॥ १३ ॥
परा । अद्य । देवाः । वृजिनम् । शृणन्तु । प्रत्यक् । एनम् । शपथाः । यन्तु । सृष्टाः ।
वाचाऽस्तेनम् । शरवः । ऋच्छन्तु । मर्मन् । विश्वस्य । एतु । प्रऽसितिम् । यातुऽधानः ॥

**VIII.3.9** O adorable leader, protect the sacrifice with a keen eye; O good-hearted, conduct it forward to the treasures (vasubhyaḥ). O observer of men (nṛcakṣaḥ), may not the tormentors overwhelm you, while you are violently burning down the wicked ones.

**VIII.3.10** O observer of men, look out for the wicked ones among the people. Tear down his three fore-parts. O adorable leader, break his ribs with intense heat; cut off the root of the tormentor thrice.

**VIII.3.11** May the tormentor, who smites the truth with untruth, come thrice under your fire. O adorable Lord, O knower of all, overwhelming him with your flames, may you capture and destroy him in the presence of your (this) adorer.

**VIII.3.12** What the (affectionate) couple abuse each other today, what the praise-singers (suddenly) produce bitterness of speech, what arrow is born from the anger of the heart, O fire, with that may you pierce these tormentors through the heart.

**VIII.3.13** With your heat, exterminate the tormentors; O adorable Lord, exterminate the wicked ones with your intense heat. Exterminate the worshippers of foolish gods with your flame; exterminate those, who seek satisfaction by running others lives, burning all over.

**VIII.3.14** May the enlightened ones today exterminate the sinful. May the abuses hurled by him revert to him. May the arrows of the enlightened ones smite him in the vitals, who strikes with speech. May the tormentor come within the reach (of the weapons) of all.

यः पौरुषेयेण क्रविषा समङ्क्ते यो अश्व्येन पशुना यातुधानः ।
यो अघ्न्याया भरति क्षीरमग्ने तेषां शीर्षाणि हरसापि वृश्च ॥१५॥
विषं गवां यातुधाना भरन्तामा वृश्चन्तामदितये दुरेवाः ।
परैणान्देवः सविता ददातु परा भागमोषधीनां जयन्ताम् ॥१६॥
संवत्सरीणं पय उस्रियायास्तस्य माशीद्यातुधानो नृचक्षः ।
पीयूषमग्ने यतमस्तितृप्सात्तं प्रत्यञ्चमर्चिषा विध्य मर्मणि ॥१७॥
सनादग्ने मृणसि यातुधानान्न त्वा रक्षांसि पृतनासु जिग्युः ।
सहमूरानन्तु दह क्रव्यादो मा ते हेत्या मुक्षत दैव्यायाः ॥१८॥
त्वं नो अग्ने अधरादुदक्तस्त्वं पश्चादुत रक्षा पुरस्तात् ।
प्रति त्ये ते अजरासस्तपिष्ठा अघशंसं शोशुचतो दहन्तु ॥१९॥
पश्चात्पुरस्तादधरादुतोत्तरात्कविः काव्येन परि पाह्यग्ने ।
सखा सखायमजरो जरिम्णे अग्ने मर्तां अमर्त्यस्त्वं नः ॥२०॥

यः । पौरुषेयेण । क्रविषा । सम्ऽअङ्क्ते । यः । अश्व्येन । पशुना । यातुऽधानः । यः । अघ्न्यायाः । भरति । क्षीरम् । अग्ने । तेषाम् । शीर्षाणि । हरसा । अपि । वृश्च ॥ १५ ॥
विषम् । गवाम् । यातुऽधानाः । भरन्ताम् । आ । वृश्चन्ताम् । अदितये । दुःऽएवाः । परा । एनान् । देवः । सविता । ददातु । परा । भागम् । ओषधीनाम् । जयन्ताम् ॥१६॥
सम्ऽवत्सरीणम् । पयः । उस्रियायाः । तस्य । मा आशीत् । यातुऽधानः । नृऽचक्षः । पीयूषम् । अग्ने । यतमः । तितृप्सात् । तम् । प्रत्यञ्चम् । अर्चिषा । विध्य । मर्मणि ॥
सनात् । अग्ने । मृणसि । यातुऽधानान् । न । त्वा । रक्षांसि । पृतनासु । जिग्युः । सहऽमूरान् । अनु । दह । क्रव्यऽअदः । मा । ते । हेत्याः । मुक्षत । दैव्यायाः ॥ १८ ॥
त्वम् । नः । अग्ने । अधरात् । उदक्तः । त्वम् । पश्चात् । उत । रक्ष । पुरस्तात् । प्रति । त्ये । ते । अजरासः । तपिष्ठाः । अघऽशंसम् । शोशुचतः । दहन्तु ॥ १९ ॥
पश्चात् । पुरस्तात् । अधरात् । उत । उत्तरात् । कविः । काव्येन । परि । पाहि । अग्ने । सखा । सखायम् । अजरः । जरिम्णे । अग्ने । मर्तान् । अमर्त्यः । त्वम् । नः ॥ २० ॥

**VIII.3.15** The tormentor, who feeds on human flesh, and who on the horse-meat, and on the cattle, and who steals away the milk of the inviolable cow, O adorable leader, may you cut off their head with your flame.

**VIII.3.16** The tormentors, who administer poison to cows, and those of evil ways, who slaughter them, may the impeller Lord, banish them far away; let them forfeit their share of plants.

**VIII.3.17** The ruddy cow yields milk through the year; let not the tormentor enjoy it, O observer of men. O adorable leader, whichever of them seeks his satisfaction with this nectar; pierce him straight through his vitals with your burning rage.

**VIII.3.18** From of old, O fire-divine (Agni) you have been killing the tormenters; the wicked (demons) have not conquered you in fights. Please burn up the flesh-eaters together with their female pairs (daivyāyāḥ). Let them not be freed from your heavenly missile (heti). (Also Av. V.29.11)

**VIII.3.19** O adorable leader, protect us from below, from above, from behind and also from in front. May your those never-exhausting flames, extremely hot and burning all over, consume the evil plotter.

**VIII.3.20** O adorable leader, a seer, with your forethought, may you protect us from the west, from the east, from the south and also from the north; may you a friend (protect) us, your friends; your never aging, (protect) us, the aging ones; you, O adorable, an immortal (protect) us, the mortals.

तदग्ने चक्षुः प्रति धेहि रेभे शफारुजो येन पश्यसि यातुधानान् ।
अथर्ववज्ज्योतिषा दैव्येन सत्यं धूर्वन्तमचितं न्योष ॥२१॥

परि त्वाग्ने पुरं वयं विप्रं सहस्य धीमहि ।
धृषद्वर्णं दिवेदिवे हन्तारं भङ्गुरावतः ॥२२॥

विषेण भङ्गुरावतः प्रति स्म रक्षसो जहि ।
अग्ने तिग्मेन शोचिषा तपुरग्राभिरर्चिभिः ॥२३॥

वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा ।
प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षोभ्यो विनिक्ष्वे ॥२४॥

ये ते शृङ्गे अजरे जातवेदस्तिग्महेती ब्रह्मसंशिते ।
ताभ्यां दुर्हार्दमभिदासन्तं किमीदिनं प्रत्यञ्चमर्चिषा जातवेदो वि निक्ष्व ॥२५॥

अग्नी रक्षांसि सेधति शुक्रशोचिरमर्त्यः । शुचिः पावक ईड्यः ॥२६॥

तत् । अग्ने । चक्षुः । प्रति । धेहि । रेभे । शफऽआरुजः । येन । पश्यसि । यातुऽधानान् ।
अथर्वऽवत् । ज्योतिषा । दैव्येन । सत्यम् । धूर्वन्तम् । अचितम् । नि । ओष ॥ २१ ॥

परि । त्वा । अग्ने । पुरम् । वयम् । विप्रम् । सहस्य । धीमहि ।
धृषत्ऽवर्णम् । दिवेऽदिवे । हन्तारम् । भङ्गुरऽवतः ॥ २२ ॥

विषेण । भङ्गुरऽवतः । प्रति । स्म । रक्षसः । जहि ।
अग्ने । तिग्मेन । शोचिषा । तपुःऽअग्राभिः । अर्चिऽभिः ॥ २३ ॥

वि । ज्योतिषा । बृहता । भाति । अग्निः । आविः । विश्वानि । कृणुते । महिऽत्वा ।
प्र । अदेवीः । मायाः । सहते । दुःऽएवाः । शिशीते । शृङ्गे इति । रक्षःऽभ्यः । विऽनिक्षे ॥२४॥

ये इति । ते । शृङ्गे इति । अजरे इति । जातऽवेदः । तिग्महेती इति तिग्मऽहेती । ब्रह्मसंशिते इति ब्रह्मऽसंशिते । ताभ्याम् । दुःऽहार्दम् । अभिऽदासन्तम् । किमीदिनम् । प्रत्यञ्चम् । अर्चिषा । जातऽवेदः । वि । निक्ष्व ॥ २५ ॥

अग्निः । रक्षांसि । सेधति । शुक्रऽशोचिः । अमर्त्यः । शुचिः । पावकः । ईड्यः ॥२६॥

**VIII.3.21** O adorable Lord, may you set that eye on the shouting (noisy) wicked, with which you trace out the tormentors, attacking with their power. May you, like the uninjurable seer, burn down the real, unconscientious killer with your divine glare.

**VIII.3.22** You, O devout adorable, powerful one, shall we be faining in erecting a stronghold around us, O you of daring colour, day by day slayer of the destructive one. (hantāram bhaṅgurāvataḥ). (Also Av.VIII 74 .1; Yv XI. 26)

**VIII.3.23** With your poisonous, intense burning heat, and with flames scorching at their points, O fire divine, may you annihilate the destructive wicked ones.

**VIII.3.24** This fire-divine shines out with immense light. With his mighty glow, he makes all the things visible. He overpowers the demoniac and ill-intentioned deceits; and He sharpens his horns for destroying the wicked ones.

**VIII.3.25** O fire-divine, what two horns, never-decaying keen-thrusting and sharpened with knowledge, you have, with those, and your flame, O knower of all, may you gore the evil-hearted, and advancing ever-hungry devourer.

**VIII.3.26** May the bright, radiant, immortal with refulgent glow, adorable Lord, drive off wickedness from us. (Also Ṛg.VII.15.10)

(४) चतुर्थं सूक्तम्

(१-२५) पञ्चविंशत्यृचस्यास्य सूक्तस्य चातन ऋषिः। मन्त्रोक्ता देवताः। (१-७, १५, १८, २१) प्रथमादि-सप्तर्चां पञ्चदश्यष्टादश्येकविंशीनाञ्च जगती, (८-१४, १६-१७, १९, २२, २४) अष्टम्यादि-सप्तानां षोडशीसप्तदश्येकोनविंशीद्वाविंशीचतुर्विंशीनां त्रिष्टुप्, (२०, २३) विंशीत्रयो-विंश्योर्भुरिक्त्रिष्टुप्, (२५) पञ्चविंश्याश्चानुष्टुप् छन्दांसि॥

इन्द्रासोमा तपतं रक्ष उब्जतं न्यर्पयतं वृषणा तमोवृधः।
परा शृणीतमचितो न्योषतं हतं नुदेथां नि शिशीतमत्रिणः ॥१॥
इन्द्रासोमा समघशंसमभ्यघं तपुर्ययस्तु चरुरग्निमाँ इव।
ब्रह्मद्विषे क्रव्यादे घोरचक्षसे द्वेषो धत्तमनवायं किमीदिने ॥२॥
इन्द्रासोमा दुष्कृतो वव्रे अन्तरनारम्भणे तमसि प्र विध्यतम्।
यतो नैषां पुनरेकश्चनोदयत्तद्वामस्तु सहसे मन्युमच्छवः ॥३॥
इन्द्रासोमा वर्तयतं दिवो वधं सं पृथिव्या अघशंसाय तर्हणम्।
उत्तक्षतं स्वर्यं पर्वतेभ्यो येन रक्षो वावृधानं निजूर्वथः ॥४॥
इन्द्रासोमा वर्तयतं दिवस्पर्यग्नितप्तेभिर्युवमश्महन्मभिः।
तपुर्वधेभिरजरेभिरत्रिणो नि पर्शाने विध्यतं यन्तु निस्वरम् ॥५॥

इन्द्रासोमा। तपतम्। रक्षः। उब्जतम्। नि। अर्पयतम्। वृषणा। तमःऽवृधः।
परा। शृणीतम्। अचितः। नि। ओषतम्। हतम्। नुदेथाम्। नि। शिशीतम्। अत्रिणः॥
इन्द्रासोमा। सम्। अघऽशंसम्। अभि। अघम्। तपुः। ययस्तु। चरुः। अग्निमान्ऽइव।
ब्रह्मऽद्विषे। क्रव्यऽअदे। घोरऽचक्षसे। द्वेषः। धत्तम्। अनवायम्। किमीदिने॥ २॥
इन्द्रासोमा। दुःऽकृतः। वव्रे। अन्तः। अनारम्भणे। तमसि। प्र। विध्यतम्। यतः। न।
एषाम्। पुनः। एकः। चन। उत्ऽअयत्। तत्। वाम्। अस्तु। सहसे। मन्युऽमत्। शवः॥
इन्द्रासोमा। वर्तयतम्। दिवः। वधम्। सम्। पृथिव्याः। अघऽशंसाय। तर्हणम्।
उत्। तक्षतम्। स्वर्यम्। पर्वतेभ्यः। येन। रक्षः। वावृधानम्। निऽजूर्वथः॥ ४॥
इन्द्रासोमा। वर्तयतम्। दिवः। परि। अग्निऽतप्तेभिः। युवम्। अश्महन्मऽभिः।
तपुःऽवधेभिः। अजरेभिः। अत्रिणः। नि। पर्शाने। विध्यतम्। यन्तु। निऽस्वरम्॥ ५॥

**VIII.4.1** O Lord of resplendence and love-divine, may you cause affliction to and destroy the wicked. It is worthy of showerers (of benefits) to cast down those who delight in darkness. Please drive away of all of them who are stupids; and also consume, slay, turn out and exterminate them once for all who are cannibals. (Also Ṛg. VII. 104.1).

**VIII.4.2** O Lord of resplendence and love-divine, treat him mercilessly who is destructive and indulges in undesirable activities. Consume him with your wrath; let him perish thereby like a libation in fire. Never hesitate to show hatred towards one who hates people of divine learning, who is a cannibal, the hideous, the villain. (Also Ṛg. VII.104.2)

**VIII.4.3** O Lord of resplendence and love-divine, please treat the malevolents with severity, and plunge them in a dingy dark dungeon and see that none of them again comes out of it. May your wrathful courage gain triumphs over their wickedness. (Also Ṛg. VII.104.3)

**VIII.4.4** O Lord of resplendence and love-divine, please hurl your crushing thunderbolt towards the wicked forces from heaven, as well as from earth. Forge out of the mountains the consuming thunderbolt and order to burn to death the ever-increasing demonic race. (Also Ṛg VII.104.4).

**VIII.4.5** O Lord of resplendence and love-divine, please scatter your deadly weapons from heaven from all-sides, pierce the sides of the enemies with fiery scorching thunderbolts, so that, they die out without uttering a syllable. (Also Ṛg. VII.104.5)

इन्द्रासोमा परि वां भूतु विश्वत इयं मतिः कक्ष्याश्वेव वाजिना ।
यां वां होत्रां परिहिनोमि मेधयेमा ब्रह्माणि नृपती इव जिन्वतम् ॥६॥
प्रति स्मरेथां तुजयद्भिरेवैर्हतं द्रुहो रक्षसो भङ्गुरावतः ।
इन्द्रासोमा दुष्कृते मा सुगं भूद्यो मा कदा चिदभिदासति द्रुहुः ॥७॥
यो मा पाकेन मनसा चरन्तमभिचष्टे अनृतेभिर्वचोभिः ।
आप इव काशिना संगृभीता असन्नस्त्वासत इन्द्र वक्ता ॥८॥
ये पाकशंसं विहरन्त एवैर्ये वा भद्रं दूषयन्ति स्वधाभिः ।
अहये वा तान्प्रददातु सोम आ वा दधातु निर्ऋतेरुपस्थे ॥९॥
यो नो रसं दिप्सति पित्वो अग्ने अश्वानां गवां यस्तनूनाम् ।
रिपु स्तेन स्तेयकृद्दभ्रमेतु नि ष हीयतां तन्वा३ तना च ॥१०॥
परः सो अस्तु तन्वा३ तना च तिस्रः पृथिवीरधो अस्तु विश्वाः ।
प्रति शुष्यतु यशो अस्य देवा यो मा दिवा दिप्सति यश्च नक्तम् ॥११॥

इन्द्रासोमा । परि । वाम् । भूतु । विश्वतः । इयम् । मतिः । कक्ष्या ऽ । अश्वाऽइव । वाजिना । याम् । वाम् । होत्राम् । परिऽहिनोमि । मेधया । इमा । ब्रह्माणि । नृपती इवेति नृपतीऽइव । जिन्वतम् ॥
प्रति । स्मरेथाम् । तुजयत्ऽभिः । एवैः । हतम् । द्रुहः । रक्षसः । भङ्गुरऽवतः ।
इन्द्रासोमा । दुःऽकृते । मा । सुऽगम् । भूत् । यः । मा । कदा । चित् । अभिऽदासति । द्रुहुः ॥७॥
यः । मा । पाकेन । मनसा । चरन्तम् । अभिऽचष्टे । अनृतेभिः । वचःऽभिः ।
आपःऽइव । काशिना । समऽगृभीताः । असन् । अस्तु । असतः । इन्द्र । वक्ता ॥ ८ ॥
ये । पाकऽशंसम् । विऽहरन्ते । एवैः । ये । वा । भद्रम् । दूषयन्ति । स्वधाभिः ।
अहये । वा । तान् । प्रऽददातु । सोमः । आ । वा । दधातु । निःऽऋतेः । उपऽस्थे ॥
यः । नः । रसम् । दिप्सति । पित्वः । अग्ने । अश्वानाम् । गवाम् । यः । तनूनाम् ।
रिपुः । स्तेनः । स्तेयऽकृत् । दभ्रम् । एतु । नि । सः । हीयताम् । तन्वा ऽ । तना । च ॥१०॥
परः । सः । अस्तु । तन्वा ऽ । तना । च । तिस्रः । पृथिवीः । अधः । अस्तु । विश्वाः ।
प्रति । शुष्यतु । यशः । अस्य । देवाः । यः । मा । दिवा । दिप्सति । यः । च । नक्तम् ॥११॥

**VIII.4.6** O Lord of resplendence and love-divine, may this hymn invest you, who are mighty on every side as the girth encompassing two steeds. I am offering this hymn to both of you with sincerity and integrity. May this homage of mine be accepted and animated by both of you, as if, you are two kings.(Also Ṛg. VII.104.6)

**VIII.4.7** O Lord of resplendence and love-divine, may both of you come without delay, as if riding on rapid horses, and slay these evil beings and destroy the treacherous forces. Let there be no comfort or rest to the malignant who harasses us with his wickedness. (Also Ṛg. VII.104.7)

**VIII.4.8** How dares he to malign me with false charges when I am of pure heart ? O Lord of resplendence, may such a person, who indulges in falsehood, cease to exist, like water, which slips down from the hollow of the palm. (Also Ṛg. VII.104.8)

**VIII.4.9** May Lord of love-divine surrender him to a serpent or throw him into the lap of death, who falsely accuses me or persecutes me, whilst I always adhere to truth. May this be also the fate of them, who, with jealousy, vilify everything that is good in me.

**VIII.4.10** O adorable Lord, he, who tries to pollute the essence of food or injure our horses, our cattle and our bodies even, may such an adversary, the thief, the robber, sink to destruction, - not only he himself, but also his progeny.

**VIII.4.11** May he be deprived of his bodily existence, as well as his posterity. May he be thrown out from all the three worlds and may his fair glory be blighted, who thinks of our destruction during the day or at night.(Also Ṛg. VII.104.11)

सुविज्ञानं चिकितुषे जनाय सच्चासच्च वचसी पस्पृधाते ।
तयोर्यत्सत्यं यतरदृजीयस्तदित्सोमोऽवति हन्त्यासत् ॥१२॥
न वा उ सोमो वृजिनं हिनोति न क्षत्रियं मिथुया धारयन्तम् ।
हन्ति रक्षो हन्त्यासद्वदन्तमुभाविन्द्रस्य प्रसितौ शयाते ॥१३॥
यदि वाहमनृतदेवो अस्मि मोघं वा देवाँ अप्यूहे अग्ने ।
किमस्मभ्यं जातवेदो हृणीषे द्रोघवाचस्ते निर्ऋथं सचन्ताम् ॥१४॥
अद्या मुरीय यदि यातुधानो अस्मि यदि वायुस्ततप पूरुषस्य ।
अधा स वीरैर्दशभिर्वि यूया यो मा मोघं यातुधानेत्याह ॥१५॥
यो मायातुं यातुधानेत्याह यो वा रक्षाः शुचिरस्मीत्याह ।
इन्द्रस्तं हन्तु महता वधेन विश्वस्य जन्तोरधमस्पदीष्ट ॥१६॥
प्र या जिगाति खर्गलेव नक्तमप द्रुहुस्तन्वं१ गूहमाना ।
वव्रमनन्तमव सा पदीष्ट ग्रावाणो घ्नन्तु रक्षस उपब्दैः ॥१७॥

सुऽविज्ञानम् । चिकितुषे । जनाय । सत् । च । असत् । च । वचसी इति । पस्पृधाते इति ।
तयोः । यत् । सत्यम् । यतरत् । ऋजीयः । तत् । इत् । सोमः । अवति । हन्ति । असत् ॥१२॥
न । वै । ऊं इति । सोमः । वृजिनम् । हिनोति । न । क्षत्रियम् । मिथुया । धारयन्तम् ।
हन्ति । रक्षः । हन्ति । असत् । वदन्तम् । उभौ । इन्द्रस्य । प्रऽसितौ । शयाते इति ॥
यदि । वा । अहम् । अनृतऽदेवः । अस्मि । मोघम् । वा । देवान् । अपिऽऊहे । अग्ने ।
किम् । अस्मभ्यम् । जातऽवेदः । हृणीषे । द्रोघऽवाचः । ते । निःऽऋथम् । सचन्ताम् ॥१४॥
अद्य । मुरीय । यदि । यातुऽधानः । अस्मि । यदि । वा । आयुः । ततप । पुरुषस्य ।
अध । सः । वीरैः । दशऽभिः । वि । यूयाः । यः । मा । मोघम् । यातुऽधान । इति । आह ॥१५॥
यः । मा । अयातुम् । यातुऽधान । इति । आह । यः । वा । रक्षाः । शुचिः । अस्मि । इति । आह ।
इन्द्रः । तम् । हन्तु । महता । वधेन । विश्वस्य । जन्तोः । अधमः । पदीष्ट ॥ १६ ॥
प्र । या । जिगाति । खर्गलाऽइव । नक्तम् । अप । द्रुहुः । तन्वम् । गूहमाना ।
वव्रम् । अनन्तम् । अव । सा । पदीष्ट । ग्रावाणः । घ्नन्तु । रक्षसः । उपब्दैः ॥ १७ ॥

**VIII.4.12** A prudent person easily discriminates between truth and falsehood, since the two words are mutually at variance. Of these two, the love-divine cherishes truth and virtue. He, verily, destroys the falsehood. (Also Ṛg. VII. 104.12)

**VIII.4.13** Love-divine encourages not the wicked, nor he instigates such a man of strength even, who deals in falsehood. He, verily, destroys the fiend and wicked and also the one who speaks untruth. All such persons lie entangled in the chain of Lord of resplendence. (Also Ṛg. VII. 104.13)

**VIII.4.14** O adorable Lord, when did I worship the deities of falsehood or when did I think adversely about Nature's bounties ? O Lord, the knower of all that is born, why are you angry with us ? May destruction fall upon them who lie against you (Also Ṛg. VII.104.14)



**VIII.4.15** In case I have harassed any one in this life, or if I have behaved like a demon, may death come to me this day. May he, verily, lose all his ten children and may he die also who with his false tongue has called me a fiend coming in disguise. (Also Ṛg. VII.104.15)

**VIII.4.16** May the Lord of resplendence annihilate him with His dreadful weapon, who addresses me as a fiend appearing in disguise which I am not and may He slay such a demon who says to himself, 'I am pure' . May he, the most wretched amongst all beings perish. (Also Ṛg. VII.104.16)

**VIII.4.17** May she too, who wanders like owl during the darkness of night, hiding her body in concealment of person, fall head-long down into endless caverns. May the strong implements with their loud shrill destroy such female demons. (Also Ṛg. VII.104.17- Variation)

वि तिष्ठध्वं मरुतो विक्ष्वी३च्छत गृभायत रक्षसः सं पिनष्टन ।
वयो ये भूत्वा पतयन्ति नक्तभिर्ये वा रिपो दधिरे देवे अध्वरे ॥१८॥
प्र वर्तय दिवोऽश्मानमिन्द्र सोमशितं मघवन्त्सं शिशाधि ।
प्राक्तो अपाक्तो अधरादुदक्तो३ऽभि जहि रक्षसः पर्वतेन ॥१९॥
एत उ त्ये पतयन्ति श्वयातव इन्द्रं दिप्सन्ति दिप्सवोऽदाभ्यम् ।
शिशीते शक्रः पिशुनेभ्यो वधं नूनं सृजदशनिं यातुमद्भ्यः ॥२०॥
इन्द्रो यातूनामभवत्पराशरो हविर्मथीनामभ्या३विवासताम् ।
अभीदु शक्रः परशुर्यथा वनं पात्रेव भिन्दन्त्सत एतु रक्षसः ॥२१॥
उलूकयातुं शुशुलूकयातुं जहि श्वयातुमुत कोकयातुम् ।
सुपर्णयातुमुत गृध्रयातुं दृषदेव प्र मृण रक्ष इन्द्र ॥२२॥
मा नो रक्षो अभि नड्यातुमावदपोच्छन्तु मिथुना ये किमीदिनः ।
पृथिवी नः पार्थिवात्पात्वंहसोऽन्तरिक्षं दिव्यात्पात्वस्मान् ॥२३॥

वि । तिष्ठध्वम् । मरुतः । विक्षु । इच्छत । गृभायत । रक्षसः । सम् । पिनष्टन ।
वयः । ये । भूत्वा । पतयन्ति । नक्तऽभिः । ये । वा । रिपः । दधिरे । देवे । अध्वरे ॥ १८ ॥
प्र । वर्तय । दिवः । अश्मानम् । इन्द्र । सोमऽशितम् । मघऽवन् । सम् । शिशाधि ।
प्राक्तः । अपाक्तः । अधरात् । उदक्तः । अभि । जहि । रक्षसः । पर्वतेन ॥ १९ ॥
एते । ऊं इति । त्ये । पतयन्ति । श्वऽयातवः । इन्द्रम् । दिप्सन्ति । दिप्सवः । अदाभ्यम् ।
शिशीते । शक्रः । पिशुनेभ्यः । वधम् । नुनम् । सृजत् । अशनिम् । यातुमत्ऽभ्यः ॥२०॥
इन्द्रः । यातूनाम् । अभवत् । पराऽशरः । हविःऽमथीनाम् । अभि । आऽविवासताम् । अभि ।
इत् । ऊं इति । शक्रः । परशुः । यथा । वनम् । पात्राऽइव । भिन्दन् । सतः । एतु । रक्षसः ॥२१॥
उलूकऽयातुम् । शुशुलूकऽयातुम् । जहि । श्वऽयातुम् । उत । कोकऽयातुम् ।
सुपर्णऽयातुम् । उत । गृध्रऽयातुम् । दृषदाऽइव । प्र । मृण । रक्षः । इन्द्र ॥२२॥
मा । नः । रक्षः । अभि । नट् । यातुऽमावत् । अप । उच्छन्तु । मिथुनाः । ये । किमीदिनः ।
पृथिवी । नः । पार्थिवात् । पातु । अंहसः । अन्तरिक्षम् । दिव्यात् । पातु । अस्मान् ॥

**VIII.4.18** O Lord of resplendence, hurl down from the celestial place your adamantine bolts. O Lord of bounties, may you sharpen the weapon and make its edge further tempered in the herbal chemicals (poisons), and smite the demons down with your rocky implements from forward, from behind, from above and from below. (Also Ṛg. VII.104.18- Variation)

**VIII.4.19** O vital winds, may you carefully conduct out a search amongst people; take them into custody and grind the demons to powder, who having transformed themselves to birds fly all over during the darkness and then proceed to sully and pollute the sacred worship. (Also Ṛg. VII.19- Variation)

**VIII.4.20** These demons march ahead accompanied by dogs; they try to assail indomitable Lord of resplendence with a desire to annul His influence. For such miscreants, the omnipotent Lord whets His thunderbolt. Now let Him cast His bolt upon the fiends, appearing in disguise. (Also Ṛg. VII. 104.20)

**VIII.4.21** Whensoever the evil fiends proceed to obstruct the sacred rites of the invoker, the Lord of resplendence always comes to destroy them. The omnipotent Lord advance and crushes down the assailing demons, as an axe cuts down the forest timber, and smashes them like an earthen vessel. (Also Ṛg. 104.21- Variation)

**VIII.4.22** Destroy the evil being, whether he comes in the fiendish grab of an owl, or of an owlet, or of a dog, or of a duck or of a falcon, or of a vulture. O Lord of resplendence, slay such a demoniac person by the stroke of your stones. (Also Ṛg. VII.104.22)

**VIII.4.23** May not the wicked fiends harm us. Let the dawn drive off the couples of timid ones. May the earth protect us from the terrestrial wickedness and may the firmament protect from the celestial one. (Also Ṛg. VII.104.23- Variation)

इन्द्र जहि पुमांसं यातुधानमुत स्त्रियं मायया शाशदानाम्।
विग्रीवासो मूरदेवा ऋदन्तु मा ते दृशन्त्सूर्यमुच्चरन्तम् ॥२४॥
प्रति चक्ष्व वि चक्ष्वेन्द्रश्च सोम जागृतम्।
रक्षोभ्यो वधमस्यतमशनिं यातुमद्भ्यः ॥२५॥

इन्द्र । जहि । पुमांसम् । यातुऽधानम् । उत । स्त्रियम् । मायया । शाशदानाम् ।
विऽग्रीवासः । मूरऽदेवाः । ऋदन्तु । मा । ते । दृशन् । सूर्यम् । उत्ऽचरन्तम् ॥२४॥

प्रति । चक्ष्व । वि । चक्ष्व । इन्द्रः । च । सोम । जागृतम् ।
रक्षःऽभ्यः । वधम् । अस्यतम् । अशनिम् । यातुमत्ऽभ्यः ॥२५॥

( ५ ) पञ्चमं सूक्तम्

(१-२२) द्वाविंशत्यृचस्यास्य सूक्तस्य शुक्र ऋषिः । कृत्यादूषणं मन्त्रोक्ता वा देवताः । (१, ६) प्रथमाषष्ठयोरूर्ध्वबृहती, (२) द्वितीयायास्त्रिपदा विराड्गायत्री, (३) तृतीयायाश्चतुष्पदा भुरिग्जगती, (४, १२-१३, १६-१८) चतुर्थीद्वादशीत्रयोदशीनां षोडश्यादितृचस्य चानुष्टुप्, (५) पञ्चम्या भुरिक्संस्तारपङ्क्तिः, (७-८) सप्तम्यष्टम्योः ककुम्मत्यनुष्टुप्, (९) नवम्याश्चतुष्पदा पुरस्कृतिर्जगती, (१०) दशम्यास्त्रिष्टुप्, (११) एकादश्याः पथ्यापङ्क्तिः, (१४) चतुर्दश्यास्त्र्यवसाना षट्पदा जगती, (१५) पञ्चदश्याः पुरस्ताद्बृहती, (१९) एकोनविंश्या जगतीगर्भा त्रिष्टुप्, (२०) विंश्या विराड्गर्भास्तारपङ्क्तिः, (२१) एकविंश्याः पराविराडनुष्टुप्, (२२) द्वाविंश्याश्च त्र्यवसाना सप्तपदा विराड्गर्भा भुरिक्शक्वरी छन्दांसि ॥

अयं प्रतिसरो मणिर्वीरो वीराय बध्यते।
वीर्यवान्त्सपत्नहा शूरवीरः परिपाणः सुमङ्गलः ॥१॥
अयं मणिः सपत्नहा सुवीरः सहस्वान्वाजी सहमान उग्रः।
प्रत्यक्कृत्या दूषयन्नेति वीरः ॥२॥
अनेनेन्द्रो मणिना वृत्रमहन्ननेनासुरान्पराभावयन्मनीषी।
अनेनाजयद्द्यावापृथिवी उभे इमे अनेनाजयत्प्रदिशश्चतस्रः ॥३॥

अयम् । प्रतिऽसरः । मणिः । वीरः । वीराय । बध्यते ।
वीर्यऽवान् । सपत्नऽहा । शूरऽवीरः । परिऽपानः । सुऽमङ्गलः ॥ १ ॥
अयम् । मणिः । सपत्नऽहा । सुऽवीरः । सहस्वान् । वाजी । सहमानः । उग्रः ।
प्रत्यक् । कृत्याः । दूषयन् । एति । वीरः ॥ २ ॥
अनेन । इन्द्रः । मणिना । वृत्रम् । अहन् । अनेन । असुरान् । परा । अभावयत् । मनीषी । अनेन ।
अजयत् । द्यावापृथिवी इति । उभे इति । इमे इति । अनेन । अजयत् । प्रऽदिशः । चतस्रः ॥३॥

**VIII.4.24** O Lord of resplendence, may you slay the fiend appearing in disguise whether he belongs to the class of man or woman, playing mischief by her deceptions. May those fools who murder by chopping necks perish and see no more of the Sun when he arises. (Also Ṛg. VII.104.24)

**VIII.4.25** O love-divine, may you and the Lord of resplendence severally watch, keep a vigil all around and cast forth your weapons at the malignant demoniac person and smite all of them with bolt who attack in disguise. (Also Ṛg. VII.104.25)

**Mantroktāḥ**

**VIII.5.1** This counter-acting blessing, scatterer of enemies, vigorous, slayer of rivals, brave among the brave, sure-protector, and very propitious, is put on a brave person.

**VIII.5.2** This blessing is the slayer of rivals, very heroic, full of over whelming power, speedy, over-whelmer and formidable. This scatterer of enemies comes to the fore destroying the evil plottings of the enemies.

**VIII.5.3** With this blessing, the resplendent self killed the nescience; with this he, the wise, defeated and destroyed the life-enjoyers (life-spoilers, murderers); with this, he conquered both these heaven and earth; with this, he conquered all the four regions.

अयं स्राक्त्यो मणिः प्रतीवर्तः प्रतिसरः ।
ओजस्वान्विमृधो वशी सो अस्मान्पातु सर्वतः ॥४॥
तदग्निराह तदु सोम आह बृहस्पतिः सविता तदिन्द्रः ।
ते मे देवाः पुरोहिताः प्रतीचीः कृत्याः प्रतिसरैरजन्तु ॥५॥
अन्तर्दधे द्यावापृथिवी उताहरुत सूर्यम् ।
ते मे देवाः पुरोहिताः प्रतीचीः कृत्याः प्रतिसरैरजन्तु ॥६॥
ये स्राक्त्यं मणिं जना वर्माणि कृण्वते ।
सूर्य इव दिवमारुह्य वि कृत्या बाधते वशी ॥७॥
स्राक्त्येन मणिन ऋषिणेव मनीषिणा ।
अजैषं सर्वाः पृतना वि मृधो हन्मि रक्षसः ॥८॥
याः कृत्या आङ्गिरसीर्याः कृत्या आसुरीर्याः कृत्याः स्वयंकृता या उ चान्येभिराभृताः ।
उभयीस्ताः परा यन्तु परावतो नवतिं नाव्या३ अति ॥९॥

अयम् । स्राक्त्यः । मणिः । प्रतिऽवर्तः । प्रतिऽसरः ।
ओजस्वान् । विऽमृधः । वशी । सः । अस्मान् । पातु । सर्वतः ॥ ४ ॥
तत् । अग्निः । आह । तत् । ऊं इति । सोमः । आह । बृहस्पतिः । सविता । तत् । इन्द्रः ।
ते । मे । देवाः । पुरःऽहिताः । प्रतीचीः । कृत्याः । प्रतिऽसरैः । अजन्तु ॥ ५ ॥
अन्तः । दधे । द्यावापृथिवी इति । उत । अहः । उत । सूर्यम् ।
ते । मे । देवाः । पुरःऽहिताः । प्रतीचीः । कृत्याः । प्रतिऽसरैः । अजन्तु ॥ ६ ॥
ये । स्राक्त्यम् । मणिम् । जनाः । वर्माणि । कृण्वते ।
सूर्यःऽइव । दिवम् । आऽरुह्य । वि । कृत्याः । बाधते । वशी ॥ ७ ॥
स्राक्त्येन । मणिना । ऋषिणाऽइव । मनीषिणा ।
अजैषम् । सर्वाः । पृतनाः । वि । मृधः । हन्मि । रक्षसः ॥ ८ ॥
याः । कृत्याः । आङ्गिरसीः । याः । कृत्याः । आसुरीः । याः । कृत्याः । स्वयम्ऽकृताः ।
याः । ऊं इति । च । अन्येभिः । आऽभृताः ।
उभयीः । ताः । परा । यन्तु । पराऽवतः । नवतिम् । नाव्याः । अति ॥ ९ ॥

**VIII.5.4** This blessing of the progress is a reverter, counter-acting, full of vigour, and crusher and subduer of enemies. May this protect us from all the sides.

**VIII.5.5** This is what the fire-divine has declared, the blissful Lord has declared; the Lord supreme, the impeller Lord, the resplendent Lord has declared the same. May those enlightened ones, placed in my forefront, drive the evil plottings back with the counter-acting blessings.

**VIII.5.6** I have put the heaven and earth, also the day, also the Sun, between (the plottings-kṛttyāḥ of the enemy and myself). May these bounties of nature, placed in my forefront, drive the evil plottings back with the counter-acting blessings.

**VIII.5.7** Those people, who put on this blessing of progress as an armour, ascend to heaven like the Sun, and subduing others, destroy the evil plottings.

**VIII.5.8** With this blessing of progress, as if with the help of a wise seer, I conquer all the enemy-hordes and slaughter the hateful wicked ones.

**VIII.5.9** The evil-plottings (kṛttāḥ) first applied by the angry sages; the evil-plottings, applied by the life-enjoyers; the evil-plottings applied by some one himself and the evil-plottings applied through some other persons, may those, of both types, go farther than the far away, past the ninety navigable (rivers). (navatim nāvyāḥ).

अस्मै मणिं वर्म बध्नन्तु देवा इन्द्रो विष्णुः सविता रुद्रो अग्निः ।
प्रजापतिः परमेष्ठी विराड्वैश्वानर ऋषयश्च सर्वे ॥१०॥
उत्तमो अस्योषधीनामनड्वाञ्जगतामिव व्याघ्रः श्वपदामिव ।
यमैच्छामाविदाम तं प्रतिस्पाशनमन्तितम् ॥११॥
स इद्व्याघ्रो भवत्यथो सिंहो अथो वृषा ।
अथो सपत्नकर्शनो यो बिभर्तीमं मणिम् ॥१२॥
नैनं घ्नन्त्यप्सरसो न गन्धर्वा न मर्त्याः ।
सर्वा दिशो वि राजति यो बिभर्तीमं मणिम् ॥१३॥
कश्यपस्त्वामसृजत कश्यपस्त्वा समैरयत् ।
अबिभस्त्वेन्द्रो मानुषे बिभ्रत्संश्रेषिणेऽजयत् ।
मणिं सहस्रवीर्यं वर्म देवा अकृण्वत ॥१४॥
यस्त्वा कृत्याभिर्यस्त्वा दीक्षाभिर्यज्ञैर्यस्त्वा जिघांसति ।
प्रत्यक्त्वमिन्द्र तं जहि वज्रेण शतपर्वणा ॥१५॥

अस्मै । मणिम् । वर्म । बध्नन्तु । देवाः । इन्द्रः । विष्णुः । सविता । रुद्रः । अग्निः ।
प्रजाऽपतिः । परमेऽस्थी । विऽराट् । वैश्वानरः । ऋषयः । च । सर्वे ॥ १० ॥
उत्ऽतमः । असि । ओषधीनाम् । अनड्वान् । जगताम्ऽइव । व्याघ्रः । श्वपदाम्ऽइव ।
यम् । ऐच्छाम । अविदाम । तम् । प्रतिऽस्पाशनम् । अन्तितम् ॥ ११ ॥
सः । इत् । व्याघ्रः । भवति । अथो इति । सिंहः । अथो इति । वृषा ।
अथो इति । सपत्नऽकर्शनः । यः । बिभर्ति । इमम् । मणिम् ॥ १२ ॥
न । एनम् । घ्नन्ति । अप्सरसः । न । गन्धर्वाः । न । मर्त्याः ।
सर्वाः । दिशः । वि । राजति । यः । बिभर्ति । इमम् । मणिम् ॥ १३ ॥
कश्यपः । त्वाम् । असृजत । कश्यपः । त्वा । सम् । ऐरयत् ।
अबिभः । त्वा । इन्द्रः । मानुषे । बिभ्रत् । सम्ऽश्रेषिणे । अजयत् ।
मणिम् । सहस्रऽवीर्यम् । वर्म । देवाः । अकृण्वत ॥ १४ ॥
यः । त्वा । कृत्याभिः । यः । त्वा । दीक्षाभिः । यज्ञैः । यः । त्वा । जिघांसति ।
प्रत्यक् । त्वम् । इन्द्र । तम् । जहि । वज्रेण । शतऽपर्वणा ॥ १५ ॥

**VIII.5.10** May the enlightened ones, the resplendent Lord, the omnipresent Lord, the impeller Lord, the terrible-punisher, the adorable Lord, the Lord of creatures the Lord staying in the highest abode, the Lord in His majesty (Virat), the benefactor of all men, and all the seers, put this blessing as an armour on this (sacrificer).

**VIII.5.11** You are the best among the plants, like a bullock among the roaming animals, and like a tiger among the beasts of prey. We have found, what we have been seeking for, an effective reverter near at hand.

**VIII.5.12** He verily becomes a tiger, he a lion, he a bull, he a subduer of rivals, whoever puts on this blessing.

**VIII.5.13** The Apsaras (those moving in the clouds) do not kill him nor the Gandharvas (sustainers of our earth); nor the mortals kill him; he, who puts on this blessing, rules over all the quarters.

**VIII.5.14** Kaśyapa (seer of reality) has bestowed you. Kaśyapa has stirred you to action. The resplendent self puts you on; putting you on among men, he wins in the battles. The enlightened ones have made this blessing an armour with thousands of protective powers.

**VIII.5.15** Whoever seeks to kill you with evil plottings, with consecrations, or with sacrifices, O resplendent one, may you smite him on face with the thunder-bolt of a hundred joints.

अयमिद्वै प्रतीवर्त ओजस्वान्संजयो मणिः ।
प्रजां धनं च रक्षतु परिपाणः सुमङ्गलः ॥१६॥
असपत्नं नो अधरादसपत्नं न उत्तरात् ।
इन्द्रासपत्नं नः पश्चाज्ज्योतिः शूर पुरस्कृधि ॥१७॥
वर्म मे द्यावापृथिवी वर्माहर्वर्म सूर्यः ।
वर्म म इन्द्रश्चाग्निश्च वर्म धाता दधातु मे ॥१८॥
ऐन्द्राग्नं वर्म बहुलं यदुग्रं विश्वे देवा नाति विध्यन्ति सर्वे ।
तन्मे तन्वं त्रायतां सर्वतो बृहदायुष्मां जरदष्टिर्यथासानि ॥१९॥
आ मारुक्षद्देवमणिर्मह्या अरिष्टतातये ।
इमं मेथिमभिसंविशध्वं तनूपानं त्रिवरूथमोजसे ॥२०॥
अस्मिन्निन्द्रो नि दधातु नृम्णमिमं देवासो अभिसंविशध्वम् ।
दीर्घायुत्वाय शतशारदायायुष्माञ्जरदष्टिर्यथासत् ॥२१॥

अयम् । इत् । वै । प्रतिऽवर्तः । ओजस्वान् । सम्ऽजयः । मणिः ।
प्रऽजाम् । धनम् । च । रक्षतु । परिऽपानः । सुऽमङ्गलः ॥ १६ ॥
असपत्नम् । नः । अधरात् । असपत्नम् । नः । उत्तरात् ।
इन्द्र । असपत्नम् । नः । पश्चात् । ज्योतिः । शूर । पुरः । कृधि ॥ १७ ॥
वर्म । मे । द्यावापृथिवी इति । वर्म । अहः । वर्म । सूर्यः ।
वर्म । मे । इन्द्रः । च । अग्निः । च । वर्म । धाता । दधातु । मे ॥ १८ ॥
ऐन्द्राग्नम् । वर्म । बहुलम् । यत् । उग्रम् । विश्वे । देवाः । न । अतिऽविध्यन्ति । सर्वे ।
तत् । मे । तन्वम् । त्रायताम् । सर्वतः । बृहत् । आयुष्मान् । जरत्ऽअष्टिः । यथा । असानि ॥
आ । मा । अरुक्षत् । देवऽमणिः । मह्यै । अरिष्टऽतातये ।
इमम् । मेथिम् । अभिऽसंविशध्वम् । तनूऽपानम् । त्रिऽवरूथम् । ओजसे ॥ २० ॥
अस्मिन् । इन्द्रः । नि । दधातु । नृम्णम् । इमम् । देवासः । अभिऽसंविशध्वम् ।
दीर्घायुऽत्वाय । शतऽशारदाय । आयुष्मान् । जरत्ऽअष्टिः । यथा । असत् ॥ २१ ॥

**VIII.5.16** This powerful, all-conquering blessing, verily, is a reverser one. May this all round protector protect our progeny and wealth.

**VIII.5.17** O resplendent one, may there be for us freedom from rivals in the north, freedom from rivals in the west. O brave hero, set light before us.

**VIII.5.18** May the heaven and earth be an armour for me; an armour the day, an armour the Sun. May the resplendent Lord and the adorable Lord be an armour for me. May the sustainer (dhātā) put an armour on me.

**VIII.5.19** This blessing of the resplendent Lord and the adorable Lord is a vast and formidable shield, which none of the bounties of Nature can pierce through. May that great-shield protect my person from all sides, so that I may have a long life attaining full old age.

**VIII.5.20** May this blessing of the enlightened ones be put on me for guarding me against harm, (O bounties of nature) may you enter together this pillar of strength, a three-fold defence, protecting the body, for bestowing vigour on me.

**VIII.5.21** May the resplendent Lord fill this man with valour. O bounties of Nature, may you enter him together, for a long life-span of a hundred autumns so that he may have a long life, attaining full old-age.

स्वस्तिदा विशां पतिर्वृत्रहा विमृधो वशी ।
इन्द्रो बध्नातु ते मणिं जिगीवाँ अपराजितः सोमपा अभयंकरो वृषा ।
स त्वा रक्षतु सर्वतो दिवा नक्तं च विश्वतः ॥२२॥

स्वस्तिऽदाः । विशाम् । पतिः । वृत्रऽहा । विऽमृधः । वशी ।
इन्द्रः । बध्नातु । ते । मणिम् । जिगीवान् । अपराऽजितः । सोमऽपाः । अभयम्ऽकरः ।
वृषा । सः । त्वा । रक्षतु । सर्वतः । दिवा । नक्तम् । च । विश्वतः ॥ २२ ॥

(६) षष्ठं सूक्तम्

(१–२६) षड्विंशत्यृचस्यास्य सूक्तस्य मातृनामा ऋषिः । (१–१४, १६–२६) प्रथमादिचतुर्दशर्चां षोडश्याद्येकादशानाञ्च मातृनामा मन्त्रोक्ता वा, (१५) पञ्चदश्याश्च ब्रह्मणस्पतिर्देवता । (१, ३–९, १३, १८–२६) प्रथमायास्तृतीयादि-सप्तानां त्रयोदश्या अष्टादश्यादिनवानाञ्चानुष्टुप्, (२) द्वितीयायाः पुरस्ताद्बृहती, (१०) दशम्यास्त्र्यवसाना षट्पदा जगती, (११–१२, १४, १६) एकादशीद्वादशीचतुर्दशीषोडशीनां पथ्यापङ्क्तिः, (१५) पञ्चदश्यास्त्र्यवसाना सप्तपदा शक्वरी, (१७) सप्तदश्याश्च त्र्यवसाना सप्तपदा जगती छन्दांसि ॥

यौ ते मातोन्ममार्ज जातायाः पतिवेदनौ ।
दुर्णामा तत्र मा गृधदलिंश उत वत्सपः ॥१॥
पलालानुपलालौ शर्कुं कोकं मलिम्लुचं पलीजकम् ।
आश्रेषं वव्रिवाससमृक्षग्रीवं प्रमीलिनम् ॥२॥
मा सं वृतो मोप सृप ऊरू माव सृपोऽन्तरा ।
कृणोम्यस्यै भेषजं बजं दुर्णामचातनम् ॥३॥
दुर्णामा च सुनामा चोभा संवृतमिच्छतः ।
अरायानप हन्मः सुनामा स्त्रैणमिच्छताम् ॥४॥

यौ । ते । माता । उत्ऽममार्ज । जातायाः । पतिऽवेदनौ ।
दुःऽनामा । तत्र । मा । गृधत् । अलिंशः । उत । वत्सऽपः ॥ १ ॥
पलालऽअनुपलालौ । शर्कुम् । कोकम् । मलिम्लुचम् । पलीजकम् ।
आऽश्रेषम् । वव्रिऽवाससम् । ऋक्षऽग्रीवम् । प्रऽमीलिनम् ॥ २ ॥
मा । सम् । वृतः । मा । उप । सृपः । ऊरू इति । मा । अव । सृपः । अन्तरा ।
कृणोमि । अस्यै । भेषजम् । बजम् । दुर्नामऽचातनम् ॥ ३ ॥
दुःऽनामा । च । सुऽनामा । च । उभा । सम्ऽवृतम् । इच्छतः ।
अरायान् । अप । हन्मः । सुऽनामा । स्त्रैणम् । इच्छताम् ॥४॥

**VIII.5.22** May the resplending Lord, the bestower of weal, the Lord of people, slayer of nescience, subduer of hateful enemies, the conqueror, ever-undefeated, provider of freedom from fear, the showerer of gifts, put this blessing on you. May He guard you day and night on all sides and from all.

## Mantroktāḥ - matṛnāmā

**VIII.6.1** These two parts of your body, which are meant for the husband, and which your mother cleansed when you were born, let not evil germs named durṇāmā, ill-named, alinśaḥ and vatsapaḥ seek to reach there.

**VIII.6.2** Palāla (straw-like), O anupalala (similar to palāla), śarkum (injurer), kokan (venereal), malimlucam (robber), palījakam (disturber), the āśreṣam (sticky), vavrivāsas (discolouring), ṛkṣagrīvam (bear-necked), and pramīlin (winking) - (all these I banish from here).

**VIII.6.3** Do not approach. Do not creep up. Do not creep inside between the two things. I administer to her the medicine bajam (white mustard), that removes durṇāmā (ill-named) germs.

**VIII.6.4** Durṇāmā (ill-famed) and sunāmā (of good reputation), both desire to approach her. We smite off the evil ones. Let sunāmā desire the women-folk.

यः कृष्णः केश्यसुर स्तम्बज उत तुण्डिकः ।
अरायानस्या मुष्काभ्यां भंससोप हन्मसि ॥५॥
अनुजिघ्रं प्रमृशन्तं क्रव्यादमुत रेरिहम् ।
अरायाँछ्वकिष्किणो बजः पिङ्गो अनीनशत् ॥६॥
यस्त्वा स्वप्ने निपद्यते भ्राता भूत्वा पितेव च ।
बजस्तान्त्सहतामितः क्लीबरूपांस्तिरीटिनः ॥७॥
यस्त्वा स्वपन्तीं त्सरति यस्त्वा दिप्सति जाग्रतीम् ।
छायामिव प्र तान्त्सूर्यः परिक्रामन्ननीनशत् ॥८॥
यः कृणोति मृतवत्सामवतोकामिमां स्त्रियम् ।
तमोषधे त्वं नाशयास्याः कमलमञ्जिवम् ॥९॥
ये शालाः परिनृत्यन्ति सायं गर्दभनादिनः ।
कुसूला ये च कुक्षिलाः ककुभाः करुमाः स्रिमाः ।
तानोषधे त्वं गन्धेन विषूचीनान्वि नाशय ॥१०॥

यः । कृष्णः । केशी । असुरः । स्तम्बऽजः । उत । तुण्डिकः ।
अरायान् । अस्याः । मुष्काभ्याम् । भंससः । अप । हन्मसि ॥ ५ ॥
अनुऽजिघ्रम् । प्रऽमृशन्तम् । क्रव्यऽअदम् । उत । रेरिहम् ।
अरायान् । श्वऽकिष्किणः । बजः । पिङ्गः । अनीनशत् ॥ ६ ॥
यः । त्वा । स्वप्ने । निऽपद्यते । भ्राता । भूत्वा । पिताऽइव । च ।
बजः । तान् । सहताम् । इतः । क्लीबऽरूपान् । तिरीटिनः ॥ ७ ॥
यः । त्वा । स्वपन्तीम् । त्सरति । यः । त्वा । दिप्सति । जाग्रतीम् ।
छायाम्ऽइव । प्र । तान् । सूर्यः । परिऽक्रामन् । अनीनशत् ॥ ८ ॥
यः । कृणोति । मृतऽवत्साम । अवऽतोकाम् । इमाम् । स्त्रियम् ।
तम् । ओषधे । त्वम् । नाशय । अस्याः । कमलम् । अञ्जिऽवम् ॥ ९ ॥
ये । शालाः । परिऽनृत्यन्ति । सायम् । गर्दभऽनादिनः ।
कुसूलाः । ये । च । कुक्षिलाः । ककुभाः । करुमाः । स्रिमाः ।
तान् । ओषधे । त्वम् । गन्धेन । विषूचीनान् । वि । नाशय ॥ १० ॥

**VIII.6.5** That block, hairy spoilter of life, born in the trunk of the body, and also snouted one, - all these evil ones we drive away from her two ovaries and from the perineum.

**VIII.6.6** The yellow bajam destroys the evil germs that attack following the smell, eat into flesh, lick one to death and are ever-injuring.

**VIII.6.7** Whoever approaches you, while asleep, posing himself as (your) brother or (your) father, may the bajam (white mustard) chase them away, dressed as eunuchs moving about in secrecy.

**VIII.6.8** Whoever creeps to you, while asleep, or who wants to violate you while awake, may it (bajam) drive them away, as the circling Sun drives the shade.

**VIII.6.9** Whoso makes this woman to bear a dead child, or causes her miscarriage, O herb, you destroy him, who makes her womb slippery.

**VIII.6.10** Those flesh-eaters, that dance around the houses, making noises like donkeys, and those needles-shaped, (kusūlā) big-bellied (kukṣilā), paunechy, kakubhāḥ-karumāḥ, Srimāḥ (srimāḥ) them. O herb, may you scatter and destroy with your smell. (Kusūlā-grainaries, kuksilā = paunchy; kukubhāḥ = exalted - karumaḥ,Srimaḥ).

ये कुकुन्धाः कुकूरभाः कृत्तीर्दूर्शानि बिभ्रति ।
क्लीबा इव प्रनृत्यन्तो वने ये कुर्वते घोषं तानितो नाशयामसि ॥११॥

ये सूर्यं न तितिक्षन्त आतपन्तममुं दिवः ।
अरायान्बस्तवासिनो दुर्गन्धींल्लोहितास्यान्मककान्नाशयामसि ॥१२॥

य आत्मानमतिमात्रमंस आधाय बिभ्रति ।
स्त्रीणां श्रोणिप्रतोदिन इन्द्र रक्षांसि नाशय ॥१३॥

ये पूर्वे वध्वो३ यन्ति हस्ते शृङ्गाणि बिभ्रतः ।
आपाकेस्थाः प्रहासिन स्तम्बे ये कुर्वते ज्योतिस्तानितो नाशयामसि ॥१४॥

येषां पश्चात्प्रपदानि पुरः पार्ष्णीः पुरो मुखा ।
खलजाः शकधूमजा उरुण्डा ये च मट्मटाः कुम्भमुष्का अयाशवः ।
तानस्या ब्रह्मणस्पते प्रतीबोधेन नाशय ॥१५॥

पर्यस्ताक्षा अप्रचङ्कशा अस्त्रैणाः सन्तु पण्डगाः ।
अव भेषज पादय य इमां संविवृत्सत्यपतिः स्वपतिं स्त्रियम् ॥१६॥

ये । कुकुन्धाः । कुकूरभाः । कृत्तीः । दूर्शानि । बिभ्रति ।
क्लीबाःऽइव । प्रऽनृत्यन्तः । वने । ये । कुर्वते । घोषम् । तान् । इतः । नाशयामसि ॥ ११ ॥

ये । सूर्यम् । न । तितिक्षन्ते । आऽतपन्तम् । अमुम् । दिवः ।
अरायान् । बस्तऽवासिनः । दुःऽगन्धीन् । लोहितऽआस्यान् । मककान् । नाशयामसि ॥

ये । आत्मानम् । अतिऽमात्रम् । अंसे । आऽधाय । बिभ्रति ।
स्त्रीणाम् । श्रोणिऽप्रतोदिनः । इन्द्र । रक्षांसि । नाशय ॥ १३ ॥

ये । पूर्वे । वध्वः । यन्ति । हस्ते । शृङ्गाणि । बिभ्रतः ।
आपाकेऽस्थाः । प्रऽहासिनः । स्तम्बे । ये । कुर्वते । ज्योतिः । तान् । इतः । नाशयामसि ॥१४॥

येषाम् । पश्चात् । प्रऽपदानि । पुरः । पार्ष्णीः । पुरः । मुखा ।
खलऽजाः । शकधूमऽजाः । उरुण्डाः । ये । च । मट्मटाः । कुम्भऽमुष्काः । अयाशवः ।
तान् । अस्याः । ब्रह्मणः । पते । प्रतिऽबोधेन । नाशय ॥ १५ ॥

पर्यस्तऽअक्षाः । अप्रऽचङ्कशाः । अस्त्रैणाः । सन्तु । पण्डगाः ।
अव । भेषज । पादय । यः । इमाम् । सम्ऽविवृत्सति । अपतिः । स्वपतिम् । स्त्रियम् ॥१६॥

**VIII.6.11** Kukukundhas and kukurabhas (making ku ku sounds), who are equipped with biting stings; dancing like eunuchs, who make a much noise in the forest - all those we make disappear from here.

**VIII.6.12** Those who cannot tolerate the Sun, burning down from the sky, those troublesome mosquitoes we destroy. We destroy those troublesome mosquitoes, who cannot tolerate the sun burning down from the sky, live on goats, and are evil-smelling and bloody-mouthed.

**VIII.6.13** Who bear an excessively large head over their shoulders, and who cause severe pain in women's loins, - those germs O resplendent Lord, may you destroy.

**VIII.6.14** Who go to a bride first carrying (drinking) horns (śṛṅgāṇi) in their hands, visiting taverns and laughingly loudly, who flash lights in the bushes, - all of them we cause to disappear from here.

### Brahamaṇaspatiḥ

**VIII.6.15** Those, who have their toes backwards, their heels in front, and faces in front; born on the thrashing-floor, born of dung-smoke, headless, aggravating the pains, large-testicled, and swift-moving - all of them of this woman, O lord of knowledge, may you destroy by proper diagnosis.

**VIII.6.16** May those with distorted vision, not looking froward, and impotent remain without women. O herb, thrust him down, who not being a husband, seeks to violate this woman, true to her husband. (sleeping woman).

उद्धर्षिणं मुनिकेशं जम्भयन्तं मरीमृशम् ।
उपेषन्तमुदुम्बलं तुण्डेलमुत शालुडम् ।
पदा प्र विध्य पार्ष्ण्या स्थालीं गौरिव स्पन्दना ॥१७॥
यस्ते गर्भं प्रतिमृशाज्जातं वा मारयाति ते ।
पिङ्गस्तमुग्रधन्वा कृणोतु हृदयाविधम् ॥१८॥
ये अम्नो जातान्मारयन्ति सूतिका अनुशेरते ।
स्त्रीभागान्पिङ्गो गन्धर्वान्वातो अभ्रमिवाजतु ॥१९॥
परिसृष्टं धारयतु यद्धितं माव पादि तत् ।
गर्भं त उग्रौ रक्षतां भेषजौ नीविभार्यौ ॥२०॥
पवीनसात्तङ्गल्वा३च्छायकादुत नग्नकात् ।
प्रजायै पत्ये त्वा पिङ्गः परि पातु किमीदिनः ॥२१॥
द्व्यास्याच्चतुरक्षात्पञ्चपादादनङ्गुरेः ।
वृन्तादभि प्रसर्पतः परि पाहि वरीवृतात् ॥२२॥

उत्ऽहर्षिणम् । मुनिऽकेशम् । जम्भयन्तम् । मरीमृशम् ।
उपऽएषन्तम् । उदुम्बलम् । तुण्डेलम् । उत । शालुडम् ।
पदा । प्र । विध्य । पार्ष्ण्या । स्थालीम् । गौःऽइव । स्पन्दना ॥ १७ ॥
यः । ते । गर्भम् । प्रतिऽमृशात् । जातम् । वा । मारयाति । ते ।
पिङ्गः । तम् । उग्रऽधन्वा । कृणोतु । हृदयाविधम् ॥ १८ ॥
ये । अम्नः । जातान् । मारयन्ति । सूतिकाः । अनुऽशेरते ।
स्त्रीऽभागान् । पिङ्गः । गन्धर्वान् । वातः । अभ्रम्ऽइव । अजतु ॥ १९ ॥
परिऽसृष्टम् । धारयतु । यत् । हितम् । मा । अव । पादि । तत् ।
गर्भम् । ते । उग्रौ । रक्षताम् । भेषजौ । नीविऽभार्यौ ॥ २० ॥
पविऽनसात् । तङ्गल्वात् । छायकात् । उत । नग्नकात् ।
प्रऽजायै । पत्ये । त्वा । पिङ्गः । परि । पातु । किमीदिनः ॥२१॥
द्विऽआस्यात् । चतुःऽअक्षात् । पञ्चऽपादात् । अनङ्गुरेः ।
वृन्तात् । अभि । प्रऽसर्पतः । परि । पाहि । वरीवृतात् ॥ २२ ॥

**VIII.6.17** Coming with erect member, the hermit-haired, vile, the fondler, creeping near (with lust), violent, snouty, and the evil-minded - him may you hit with your sole and heel, as a kicking cow hits her milking-pot.

**VIII.6.18** Whoever touches your embryo, or whoever kills your new-born - may the pinga (brown-one), formidable with bow, pierce him through the heart.

**VIII.6.19** They, who kill the half-born babies, and who sleep by the recently delivered women, may the pinga chase those women-seeking scented ones (gandharva), as the wind chases a cloud.

**VIII.6.20** Let it hold the seed deposited. What is laid, may that not abort. May these two strong medicines, to be kept in your underwear, protect your embryo.

**VIII.6.21** From the rim-nosed, full-cheeked, the shady, and the naked devourer germ, may the pinga (yellow mustard) protect you well for the sake of your offsprings and your husband.

**VIII.6.22** May you protect her well from the two-mouthed, four-eyed, five-footed, fingerless worm, that creeps up and twines again and again (varīvrtao).

य आमं मांसमदन्ति पौरुषेयं च ये क्रविः ।
गर्भान्खादन्ति केशवास्तानितो नाशयामसि ॥२३॥
ये सूर्यात्परिसर्पन्ति स्नुषेव श्वशुरादधि ।
बजश्च तेषां पिङ्गश्च हृदयेधि नि विध्यताम् ॥२४॥
पिङ्ग रक्ष जायमानं मा पुमांसं स्त्रियं क्रन् ।
आण्डादो गर्भान्मा दभन्बाधस्वेतः किमीदिनः ॥२५॥
अप्रजास्त्वं मार्तवत्समाद्रोदमघमावयम् ।
वृक्षादिव स्रजं कृत्वाप्रिये प्रति मुञ्च तत् ॥२६॥

ये । आमम् । मांसम् । अदन्ति । पौरुषेयम् । च । ये । क्रविः ।
गर्भान् । खादन्ति । केशऽवाः । तान् । इतः । नाशयामसि ॥ २३ ॥
ये । सूर्यात् । परिऽसर्पन्ति । स्नुषाऽइव । श्वशुरात् । अधि ।
बजः । च । तेषाम् । पिङ्गः । च । हृदये । अधि । नि । विध्यताम् ॥ २४ ॥
पिङ्ग । रक्ष । जायमानम् । मा । पुमांसम् । स्त्रियम् । क्रन् ।
आण्डऽअदः । गर्भान् । मा । दभन् । बाधस्व । इतः । किमीदिनः ॥ २५ ॥
अप्रजाःऽत्वम् । मार्तऽवत्सम् । आत् । रोदम् । अघम् । आऽवयम् ।
वृक्षात्ऽइव । स्रजम् । कृत्वा । अप्रिये । प्रति । मुञ्च । तत् ॥ २६ ॥

### ( ७ ) सप्तमं सूक्तम्

(१-२८) अष्टाविंशत्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । भेषजमायुश्च, ओषधयो वा देवताः । (१, ७-८, ११, १३, १५-२४, २७) प्रथमर्चः सप्तम्यष्टम्येकादशीत्रयोदशीनां पञ्चदश्यादिदशानां सप्तविंश्याश्चानुष्टुप्, (२) द्वितीयाया उपरिष्टाद्भुरिग्बृहती, (३) तृतीयायाः पुरउष्णिक्, (४) चतुर्थ्याः पञ्चपदा परानुष्टुबतिजगती, (५, १०, २५) पञ्चमीदशमीपञ्चविंशीनां पथ्यापङ्क्तिः, (६) षष्ठ्या विराड्गर्भा भुरिक्पथ्यापङ्क्तिः, (९) नवम्या द्विपदार्ची भुरिगनुष्टुप्, (१२) द्वादश्याः पञ्चपदा विराडतिशक्वरी, (१४) चतुर्दश्या उपरिष्टान्निचृद्बृहती, (२६) षड्विंश्या निचृदनुष्टुप्, (२८) अष्टाविंश्याश्च भुरिगनुष्टुप् छन्दांसि ॥

या बभ्रवो याश्च शुक्रा रोहिणीरुत पृश्नयः ।
असिक्नीः कृष्णा ओषधीः सर्वा अच्छावदामसि ॥१॥

याः । बभ्रवः । याः । च । शुक्राः । रोहिणीः । उत । पृश्नयः ।
असिक्नीः । कृष्णाः । ओषधीः । सर्वाः । अच्छऽआवदामसि ॥ १ ॥

**VIII.6.23** Those who eat into flesh, and those who (eat) human flesh, and those hairy ones, that eat the unborn foetus - we drive them away from here.

**VIII.6.24** Those who shy away from the Sun, like a daughter-in-law from the father-in-law, let baja and piṇga pierce them through their heart.

**VIII.6.25** O pinga (white mustard), may you protect the baby at birth. Do not turn a male (baby) into a female. May not the eaters cause harm to embryos. Drive the devouring germs away from here.

**VIII.6.26** Sterility, still-birth, wailing and crying, and the fault causing barrenness - all these may you lay on our foe, as if having made a garland from (the flowers of) a tree.

**Bhaiṣajyam (herbs), Āyuṣyam (life span) 0ṣadhayaḥ (plants)**

**VIII.7.1** Those which are brown (tonic), those which are bright (increase virility), those which are red (heal up the wounds quickly); the spotted, the grayish, and the black– all those medicinal herbs we praise and summon here.

त्राय॑न्तामि॒मं पुरु॑षं॒ यक्ष्मा॑द्दे॒वेषि॑ता॒दधि ।
यासां॒ द्यौष्पि॒ता पृ॑थि॒वी मा॒ता स॑मु॒द्रो मूलं॑ वी॒रुधां॑ ब॒भूव॑ ॥२॥
आपो॒ अग्रं॑ दि॒व्या ओष॑धयः । तास्ते॒ यक्ष्म॑मेन॒स्यं१॒॑मङ्गा॑दङ्गादनीनश॒न् ॥३॥
प्र॒स्तृ॒ण॒ती स्त॒म्बिनी॒रेक॑शुङ्गाः प्रतन्व॒तीरोष॑धी॒रा व॑दामि ।
अं॒शु॒मतीः॑ का॒ण्डिनी॒र्या विशा॑खा॒ ह्वया॑मि ते वी॒रुधो॑ वैश्वदे॒वीरु॒ग्राः पु॑रुष॒जीव॑नीः ॥४॥
यद्वः॒ सहः॒ सहमाना वी॒र्यं१॒॑ यच्च॑ वो॒ बल॑म् ।
तेने॒मम॒स्माद्यक्ष्मा॒त्पुरु॑षं मुञ्चतौषधी॒रथो॑ कृणोमि भेष॒जम् ॥५॥
जी॒व॒लां न॑घारि॒षां जी॒वन्ती॒मोष॑धी॒म॒हम् ।
अ॒रु॒न्ध॒तीमु॒न्नय॑न्तीं पु॒ष्पां मधु॑मतीमि॒ह हु॑वे॒स्मा अ॑रि॒ष्टता॑तये ॥६॥
इ॒हा य॑न्तु॒ प्रचे॑तसो मे॒दिनी॒र्वच॑सो॒ मम॑ । यथे॒मं पा॒रया॑मसि॒ पुरु॑षं दुरि॒तादधि॑ ॥७॥

त्राय॑न्ताम् । इ॒मम् । पुरु॑षम् । यक्ष्मा॑त् । दे॒वऽइ॑षितात् । अधि॑ ।
यासा॑म् । द्यौः । पि॒ता । पृ॒थि॒वी । मा॒ता । स॒मु॒द्रः । मूल॑म् । वी॒रुधा॑म् । ब॒भूव॑ ॥ २ ॥
आप॑ः । अग्र॑म् । दि॒व्याः । ओष॑धयः ।
ताः । ते॒ । यक्ष्म॑म् । ए॒न॒स्य॑म् । अङ्गा॑त्ऽअङ्गात् । अ॒नी॒न॒श॒न् ॥ ३ ॥
प्र॒ऽस्तृ॒ण॒तीः । स्त॒म्बिनीः॑ । एक॑ऽशुङ्गाः । प्र॒ऽत॒न्व॒तीः । ओष॑धीः । आ । व॒दा॒मि॒ ।
अं॒शु॒ऽमतीः॑ । का॒ण्डिनीः॑ । याः । वि॒ऽशाखाः । ह्वया॑मि । ते॒ । । वी॒रुधः॑ । वै॒श्व॒ऽदे॒वीः ।
उ॒ग्राः । पु॒रु॒ष॒ऽजीव॑नीः ॥ ४ ॥
यत् । व॒ः । सहः॑ । स॒ह॒मा॒नाः । वी॒र्य॑म् । यत् । च॒ । व॒ः । बल॑म् । तेन॑ । इ॒मम् । अ॒स्मात् ।
यक्ष्मा॑त् । पुरु॑षम् । मु॒ञ्च॒त॒ । ओ॒ष॒धीः॒ । अथो॑ इति॑ । कृ॒णो॒मि॒ । भे॒ष॒जम् ॥ ५ ॥
जी॒व॒लाम् । न॒घ॒ऽरि॒षाम् । जी॒वन्ती॑म् । ओष॑धीम् । अ॒हम् ।
अ॒रु॒न्ध॒तीम् । उ॒त्ऽनय॑न्तीम् । पु॒ष्पाम् । मधु॑ऽमतीम् । इ॒ह । हु॒वे॒ । अ॒स्मै । अ॒रि॒ष्टऽता॑तये ॥
इ॒ह । आ । य॒न्तु॒ । प्र॒ऽचे॑तसः । मे॒दिनीः॑ । वच॑सः । मम॑ ।
यथा॑ । इ॒मम् । पा॒रया॑मसि । पुरु॑षम् । दुः॒ऽइ॒तात् । अधि॑ ॥ ७ ॥

**VIII.7.2** May you save this man from the consumptive disease, sent by the bounties of Nature, O herbs, whose father is the sky, mother the earth, and the origin is ocean (atmospheric ocean).

**VIII.7.3** The waters are the foremost divine remedy. May they remove your consumptive disease, caused by misdeeds (sin) from each and every limb.

**VIII.7.4** I call out the medicinal herbs wide-spreading, the bushy, the one-sheathed, and the far-extending. I invoke for you the creepers, rich in shoots, having joints and plentiful branches, blessed with all the divine properties, efficacious, and giving new life to men.

**VIII.7.5** What is your conquering power, O conquerors, what your potency, and strength, with that may you deliver this man from this consumptive disease. O herbs, now I make you the medicine.

**VIII.7.6** To keep this man out of harm's way, I administer to him the herb Jīvantī, bestower of new life, producing no bad after-effect, making painful wounds to heal, leading upwards, nourishing and very sweet.

**VIII.7.7** At my call, may those herbs come here, which restore the consciousness and provide fatness (nourishment), so that we may get this man out of his plight.

अग्नेर्घासो अपां गर्भो या रोहन्ति पुनर्णवाः ।
ध्रुवाः सहस्रनाम्नीर्भेषजीः सन्त्वाभृताः ॥८॥
अवकोल्बा उदकात्मान ओषधयः । व्यृषन्तु दुरितं तीक्ष्णशृङ्ग्यः ॥९॥
उन्मुञ्चन्तीर्विवरुणा उग्रा या विषदूषणीः ।
अथो बलासनाशनीः कृत्यादूषणीश्च यास्ता इहा यन्त्वोषधीः ॥१०॥
अपक्रीताः सहीयसीर्वीरुधो या अभिष्टुताः । त्रायन्तामस्मिन्ग्रामे गामश्वं पुरुषं पशुम् ॥११॥
मधुमन्मूलं मधुमदग्रमासां मधुमन्मध्यं वीरुधां बभूव ।
मधुमत्पर्णं मधुमत्पुष्पमासां मधोः संभक्ता अमृतस्य भक्षो घृतमन्नं दुह्रतां गोपुरोगवम् ॥१२॥
यावतीः कियतीश्चेमाः पृथिव्यामध्योषधीः । ता मा सहस्रपर्ण्यो मृत्योर्मुञ्चन्त्वंहसः ॥१३॥

अग्नेः । घासः । अपाम् । गर्भः । याः । रोहन्ति । पुनःऽनवाः ।
ध्रुवाः । सहस्रऽनाम्नीः । भेषजीः । सन्तु । आऽभृताः ॥ ८ ॥
अवकाऽउल्बाः । उदकऽआत्मानः । ओषधयः । वि । ऋषन्तु । दुःऽइतम् । तीक्ष्णऽशृङ्ग्यः ॥
उत्ऽमुञ्चन्तीः । विऽवरुणाः । उग्राः । याः । विषऽदूषणीः ।
अथो इति । बलासऽनाशनीः । कृत्याऽदूषणीः । च । याः । ताः । इह । आ । यन्तु । ओषधीः ॥१०
अपऽक्रीताः । सहीयसीः । वीरुधः । याः । अभिऽस्तुताः ।
त्रायन्ताम् । अस्मिन् । ग्रामे । गाम् । अश्वम् । पुरुषम् । पशुम् ॥ ११ ॥
मधुऽमत् । मूलम् । मधुऽमत् । अग्रम् । आसाम् । मधुऽमत् । मध्यम् । वीरुधाम् । बभूव ।
मधुऽमत् । पर्णम् । मधुऽमत् । पुष्पम् । आसाम् । मधोः । सम्ऽभक्ताः । अमृतस्य । भक्षः ।
घृतम् । अन्नम् । दुह्रताम् । गोऽपुरोगवम् ॥ १२ ॥
यावतीः । कियतीः । च । इमाः । पृथिव्याम् । अधि । ओषधीः ।
ताः । मा । सहस्रऽपर्ण्यः । मृत्योः । मुञ्चन्तु । अंहसः ॥ १३ ॥

**VIII.7.8** Fodder (food) of fire, and abode of waters, and those, that grow again anew, unfailing in cure, bearing a thousand names - may those herbs be medicinal, when brought here.

**VIII.7.9** May the plants, covered with duck-weed (Blyxa octandra; Avakā); and with water as their soul, equipped with sharp horns, remove the distress. (Also Av. IX.37.8 for Avaka)

**VIII.7.10** May here come the herbs, delivering, variously-coloured, strong, antidotes of poison, and also the removers of wasting disease, and those, that spoil the evil plottings (kṛtyā) (of the foes).

**VIII.7.11** May the medicinal plants, that have been purchased, and are very potent and much-praised, save cow, horse, man and animal in this village.

**VIII.7.12** The root of these plants is rich in sweetness; rich in sweetness is their top, and rich in sweetness their middle. Their leaf is sweet and the flower sweet. Born (sambhaktā) of sweetness, they are food for immortality. May they yield purified butter and food, preceded by cows.

**VIII.7.13** All these herbs whatsoever that grow in such a large number on earth - may those, having a thousand leaves, save me from the distress of death.

वैयाघ्रो मणिर्वीरुधां त्रायमाणोभिशस्तिपाः ।
अमीवाः सर्वा रक्षांस्यप हन्त्वधि दूरमस्मत् ॥१४॥
सिंहस्येव स्तनथोः सं विजन्तेग्नेरिव विजन्त आभृताभ्यः ।
गवां यक्ष्मः पुरुषाणां वीरुद्भिरतिनुत्तो नाव्या एतु स्रोत्याः ॥१५॥
मुमुचाना ओषधयोग्नेर्वैश्वानरादधि ।
भूमिं संतन्वतीरित यासां राजा वनस्पतिः ॥१६॥
या रोहन्त्याङ्गिरसीः पर्वतेषु समेषु च ।
ता नः पयस्वतीः शिवा ओषधीः सन्तु शं हृदे ॥१७॥
याश्चाहं वेद वीरुधो याश्च पश्यामि चक्षुषा ।
अज्ञाता जानीमश्च या यासु विद्म च संभृतम् ॥१८॥
सर्वाः समग्रा ओषधीर्बोधन्तु वचसो मम ।
यथेमं पारयामसि पुरुषं दुरितादधि ॥१९॥

वैयाघ्रः । मणिः । वीरुधाम् । त्रायमाणः । अभिशस्तिऽपाः ।
अमीवाः । सर्वाः । रक्षांसि । अप । हन्तु । अधि । दूरम् । अस्मत् ॥ १४ ॥
सिंहस्यऽइव । स्तनथोः । सम् । विजन्ते । अग्नेःऽइव । विजन्ते । आऽभृताभ्यः ।
गवाम् । यक्ष्मः । पुरुषाणाम् । वीरुत्ऽभिः । अतिऽनुत्तः । नाव्याः । एतु । स्रोत्याः ॥ १५ ॥
मुमुचानाः । ओषधयः । अग्नेः । वैश्वानरात् । अधि ।
भूमिम् । समऽतन्वतीः । इत । यासाम् । राजा । वनस्पतिः ॥ १६ ॥
याः । रोहन्ति । आङ्गिरसीः । पर्वतेषु । समेषु । च ।
ताः । नः । पयस्वतीः । शिवाः । ओषधीः । सन्तु । शम् । हृदे ॥ १७ ॥
याः । च । अहम् । वेद । वीरुधः । याः । च । पश्यामि । चक्षुषा ।
अज्ञाताः । जानीमः । च । याः । यासु । विद्म । च । समऽभृतम् ॥ १८ ॥
सर्वाः । समऽअग्राः । ओषधीः । बोधन्तु । वचसः । मम ।
यथा । इमम् । पारयामसि । पुरुषम् । दुःऽइतात् । अधि ॥ १९ ॥

**VIII.7.14** May the strong-smelling (vaiyāghraḥ) essence of plants, a protector, guarding against infection, beat all the disease and the germs far away from us.

**VIII.7.15** From the medicinal herbs (plants) brought here, they are frightened, as they are frightened from a roaring lion or fire. May the consumptive disease of cows and men, chased by herbs, flee across the navigable river.

**VIII.7.16** May the (plants) herbs, whose king is the Lord of vegetation, freed from fire, the benefactor of all men, go on spreading over the earth.

**VIII.7.17** The herbs, that fill the limbs with sap, and that grow on mountains and plains, may those, rich in milk, be propitious to us and beneficial for heart.

**VIII.7.18** The plants, which I know, and those which I see with my eye, and those unknown to us, and those known to us, and those, about which we know that in them the curing power is stored (samibhṛtam)

**VIII.7.19** May all the herbs along with their leaders listen to my call, so that we may get this man out of distress.

अश्वत्थो दर्भो वीरुधां सोमो राजामृतं हविः ।
व्रीहिर्यवश्च भेषजौ दिवस्पुत्रावमर्त्यौ ॥२०॥
उज्जिहीध्वे स्तनयत्यभिक्रन्दत्योषधीः । यदा वः पृश्निमातरः पर्जन्यो रेतसावति ॥२१॥
तस्यामृतस्येमं बलं पुरुषं पाययामसि । अथो कृणोमि भेषजं यथासच्छतहायनः ॥२२॥
वराहो वेद वीरुधं नकुलो वेद भेषजीम् ।
सर्पा गन्धर्वा या विदुस्ता अस्मा अवसे हुवे ॥२३॥
याः सुपर्णा आङ्गिरसीर्दिव्या या रघटो विदुः ।
वयांसि हंसा या विदुर्याश्च सर्वे पतत्रिणः ।
मृगा या विदुरोषधीस्ता अस्मा अवसे हुवे ॥२४॥
यावतीनामोषधीनां गावः प्राश्नन्त्यघ्न्या यावतीनामजावयः ।
तावतीस्तुभ्यमोषधीः शर्म यच्छन्त्वाभृताः ॥२५॥

अश्वत्थः । दर्भः । वीरुधाम् । सोमः । राजा । अमृतम् । हविः ।
व्रीहिः । यवः । च । भेषजौ । दिवः । पुत्रौ । अमर्त्यौ ॥ २० ॥
उत् । जिहीध्वे । स्तनयति । अभिऽक्रन्दति । ओषधीः ।
यदा । वः । पृश्निऽमातरः । पर्जन्यः । रेतसा । अवति ॥ २१ ॥
तस्य । अमृतस्य । इमम् । बलम् । पुरुषम् । पाययामसि ।
अथो इति । कृणोमि । भेषजम् । यथा । असत् । शतऽहायनः ॥ २२ ॥
वराहः । वेद । वीरुधम् । नकुलः । वेद । भेषजीम् ।
सर्पाः । गन्धर्वाः । याः । विदुः । ताः । अस्मै । अवसे । हुवे ॥ २३ ॥
याः । सुऽपर्णाः । आङ्गिरसीः । दिव्याः । याः । रघटः । विदुः ।
वयांसि । हंसाः । याः । विदुः । याः । च । सर्वे । पतत्रिणः ।
मृगाः । याः । विदुः । ओषधीः । ताः । अस्मै । अवसे । हुवे ॥ २४ ॥
यावतीनाम् । ओषधीनाम् । गावः । प्रऽअश्नन्ति । अघ्न्याः । यावतीनाम् । अजऽअवयः ।
तावतीः । तुभ्यम् । ओषधीः । शर्म । यच्छन्तु । आऽभृताः ॥ २५ ॥

**VIII.7.20** The holy fig (aśvattha), the sacred grass (barhiṣ), and Soma, the king of plants, are the immortal sacrificial offerings. Rice and barley are two good medicines, the two immortal sons of heaven.

**VIII.7.21** When it thunders, it cries out to you. Rise up, O herbs, offsprings of mother earth. The cloud helps you with flow of rain water.

**VIII.7.22** The strength of that nectar we make this man to drink. Then I administer the medicine, so that he may live a hundred years.

**VIII.7.23** The boar knows the plant; the mungoose knows the medicinal herb; the herb, which the serpents and the sustainers of the earth know - those we call to save this man.

**VIII.7.24** The herbs with sapful limbs, that the eagles know; the divine herbs, that the sparrow (suparṇa) knows (radhataḥ); the herbs, that are known to the birds and the swans (haṅsāḥ), and to all the winged ones (patatriṇoḥ); and the medicinal plants, that are known to the deer (mṛgāḥ) - those I call to save this man.

**VIII.7.25** As many plants as the inviolable cows feed upon, and as many as the goats and sheep feed upon, may so many medicinal plants brought here, give relief to you.

यावतीषु मनुष्या भेषजं भिषजो विदुः । तावतीर्विश्वभेषजीरा भरामि त्वामभि ॥२६॥
पुष्पवतीः प्रसूमतीः फलिनीरफला उत । संमातर इव दुह्रामस्मा अरिष्टतातये ॥२७॥

उत्त्वाहार्षं पञ्चशलादथो दशशलादुत ।
अथो यमस्य पड्वीशाद्विश्वस्माद्देवकिल्बिषात् ॥२८॥

यावतीषु । मनुष्याः । भेषजम् । भिषजः । विदुः ।
तावतीः । विश्वऽभेषजीः । आ । भरामि । त्वाम् । अभि ॥ २६ ॥
पुष्पऽवतीः । प्रसूऽमतीः । फलिनीः । अफलाः । उत ।
संमातरःऽइव । दुह्राम् । अस्मै । अरिष्टऽतातये ॥ २७ ॥
उत् । त्वा । अहार्षम् । पञ्चऽशलात् । अथो इति । दशऽशलात् । उत ।
अथो इति । यमस्य । पड्वीशात् । विश्वस्मात् । देवऽकिल्बिषात् ॥ २८ ॥

( ८ ) अष्टमं सूक्तम्

(१–२४) चतुर्विंशत्यृचस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः । इन्द्रो वनस्पतिर्वा देवता । (१, ५, १३–१८) प्रथमापञ्चम्यो-र्क्चोत्रयोदश्याविषण्णाश्चानुष्टुप्, (२, ८–१०, २३) द्वितीयाया अष्टम्यादितृचस्य त्रयोविंश्याश्चोपरिष्टाद्बृहती, (३) तृतीयाया विराड्बृहती, (४) चतुर्थ्या बृहतीपुरस्तात्प्रस्तारपङ्क्तिः, (६) षष्ठ्या आस्तारपङ्क्तिः, (७) सप्तम्या विपरीतपादलक्ष्मा चतुष्पदातिजगती, (११) एकादश्याः पथ्याबृहती, (१२) द्वादश्या भुरिगनुष्टुप्, (१९) एकोनविंश्या विराट् पुरस्ताद्बृहती, (२०) विंश्या निचृत्पुरस्ताद्बृहती, (२१) एकविंश्या-स्त्रिष्टुप्, (२२) द्वाविंश्याश्चतुष्पदा शक्वरी, (२४) चतुर्विंश्याश्च त्र्यवसाना त्रिष्टुबु-ष्णिग्गर्भा पराशक्वरी पञ्चपदा जगती छन्दांसि ॥

इन्द्रो मन्थतु मन्थिता शक्रः शूरः पुरंदरः ।
यथा हनाम सेना अमित्राणां सहस्रशः ॥१॥
पूतिरज्जुरुपध्मानी पूतिं सेनां कृणोत्वमूम् ।
धूममग्निं परादृश्यामित्रा हृत्स्वा दधतां भयम् ॥२॥

इन्द्रः । मन्थतु । मन्थिता । शक्रः । शूरः । पुरम्ऽदरः ।
यथा । हनाम । सेनाः । अमित्राणाम् । सहस्रशः ॥ १ ॥
पूतिऽरज्जुः । उपऽध्मानी । पूतिम् । सेनाम् । कृणोतु । अमूम् ।
धूमम् । अग्निम् । पराऽदृश्य । अमित्राः । हृत्ऽसु । आ । दधताम् । भयम् ॥ २ ॥

**VIII.7.26** As many medicinal herbs as the human physicians know of, so many herbs, curing all diseases, I shall bring to you.

**VIII.7.27** Those rich in flowers, those rich in shoots, those bearing fruit and also those bearing no fruit, like good mothers, may they yield their milk to this man for freedom from suffering.

**VIII.7.28** From the five-pointed and also from the ten-pointed sufferings, and even from the fetters of the controller Lord (death), I have delivered and raised you up, and also out of all offence committed against the enlightened ones.

### Indraḥ, Vanaspatiḥ, Defeat of enemies

**VIII.8.1** May the army-chief, the stirrer, the mighty hero, demolisher of fortifications, make us stir, so that may we kill the armies of our foes in thousands.

**VIII.8.2** Let the stinking rope, emitting putrid smell, make the yonder army putrid. Looking at the smoke and fire from distance, may our enemies heart be filled with fear.

अमूनश्वत्थ निः शृणीहि खादामून्खदिराजिरम् ।
ताजद्भङ्ग इव भज्यन्तां हन्त्वेनान्वधको वधैः ॥३॥
परुषानमून्परुषाह्वः कृणोतु हन्त्वेनान्वधको वधैः ।
क्षिप्रं शर इव भज्यन्तां बृहज्जालेन संदिताः ॥४॥
अन्तरिक्षं जालमासीज्जालदण्डा दिशो महीः ।
तेनाभिधाय दस्यूनां शक्रः सेनामपावपत् ॥५॥
बृहद्धि जालं बृहतः शक्रस्य वाजिनीवतः ।
तेन शत्रूनभि सर्वान्न्युब्ज यथा न मुच्यातै कतमश्चनैषाम् ॥६॥
बृहत्ते जालं बृहत इन्द्र शूर सहस्रार्घस्य शतवीर्यस्य ।
तेन शतं सहस्रमयुतं न्यर्बुदं जघान शक्रो दस्यूनामभिधाय सेनया ॥७॥
अयं लोको जालमासीच्छक्रस्य महतो महान् ।
तेनाहमिन्द्रजालेनामूंस्तमसाभि दधामि सर्वान् ॥८॥

अमून् । अश्वत्थ । निः । शृणीहि । खाद । अमून् । खदिर । अजिरम् ।
ताजद्भङ्गःऽइव । भज्यन्ताम् । हन्तु । एनान् । वधकः । वधैः ॥ ३ ॥
परुषान् । अमून् । परुषऽआह्वः । कृणोतु । हन्तु । एनान् । वधकः । वधैः ।
क्षिप्रम् । शरःऽइव । भज्यन्ताम् । बृहत्ऽजालेन । सम्ऽदिताः ॥ ४ ॥
अन्तरिक्षम् । जालम् । आसीत् । जालऽदण्डाः । दिशः । महीः ।
तेन । अभिऽधाय । दस्यूनाम् । शक्रः । सेनाम् । अप । अवपत् ॥ ५ ॥
बृहत् । हि । जालम् । बृहतः । शक्रस्य । वाजिनीऽवतः ।
तेन । शत्रून् । अभि । सर्वान् । नि । उब्ज । यथा । न । मुच्यातै । कतमः । चन । एषाम् ॥
बृहत् । ते । जालम् । बृहतः । इन्द्र । शूर । सहस्रऽअर्घस्य । शतऽवीर्यस्य । तेन । शतम् ।
सहस्रम् । अयुतम् । निऽअर्बुदम् । जघान । शक्रः । दस्यूनाम् । अभिऽधाय । सेनया ॥
अयम् । लोकः । जालम् । आसीत् । शक्रस्य । महतः । महान् ।
तेन । अहम् । इन्द्रऽजालेन । अमून् । तमसा । अभि । दधामि । सर्वान् ॥ ८ ॥

**VIII.8.3** O horseman, may you tear them down; O devourer, may you eat them up quickly. May that break at once like hemp and may the slayer slay them with weapons.

**VIII.8.4** May he of harsh command (paruṣāhvah) turn those yonder soldiers into reeds. May the slayer slay them with weapons. Caught up in a wide net, may they break instantly like reed.

**VIII.8.5** The midspace was the net; great quarters the stakes holding the net. Covering the army of robbers (dasyūs) with that (net), the mighty army-chief, heaped them on the ground.

**VIII.8.6** Verily, vast is the net of the great and mighty leader of the army. With that, may you heap all the enemies down, so that none of them may escape.

**VIII.8.7** O resplendent army-chief, vast is your net, O brave, who are adored by thousands and who possess hundreds of powers. With that (net), the mighty army-chief slaughtered a hundred, a thousand, ten thousand, and ten millions of the robbers, surrounding them with the army.

**VIII.8.8** This world is the mighty net of the mighty Lord (army-chief). With that net of the resplendent Lord, I cover all of those foes with the darkness.

सेदिरुग्रा व्यृद्धिरार्तिश्चानपवाचना ।
श्रमस्तन्द्रीश्च मोहश्च तैरमूनभि दधामि सर्वान् ॥९॥
मृत्यवेमून्प्र यच्छामि मृत्युपाशैरमी सिताः ।
मृत्योर्ये अघला दूतास्तेभ्य एनान्प्रति नयामि बद्ध्वा ॥१०॥
नयतामून्मृत्युदूता यमदूता अपोम्भत ।
परःसहस्रा हन्यन्तां तृणेढ्वेनान्मत्यं भवस्य ॥११॥
साध्या एकं जालदण्डमुद्यत्य यन्त्योजसा ।
रुद्रा एकं वसव एकमादित्यैरेक उद्यतः ॥१२॥
विश्वे देवा उपरिष्टादुब्जन्तो यन्त्वोजसा ।
मध्येन घ्नन्तो यन्तु सेनामङ्गिरसो महीम् ॥१३॥
वनस्पतीन्वानस्पत्यानोषधीरुत वीरुधः ।
द्विपाच्चतुष्पादिष्णामि यथा सेनाममूं हनन् ॥१४॥

सेदिः । उग्रा । विऽऋद्धिः । आर्तिः । च । अनपऽवाचना ।
श्रमः । तन्द्रीः । च । मोहः । च । तैः । अमून् । अभि । दधामि । सर्वान् ॥ ९ ॥
मृत्यवे । अमून् । प्र । यच्छामि । मृत्युऽपाशैः । अमी इति । सिताः ।
मृत्योः । ये । अघलाः । दूताः । तेभ्यः । एनान् । प्रति । नयामि । बद्ध्वा ॥ १० ॥
नयत । अमून् । मृत्युऽदूताः । यमऽदूताः । अप । उम्भत ।
परःऽसहस्राः । हन्यन्ताम् । तृणेढु । एनान् । मत्यम् । भवस्य ॥ ११ ॥
साध्याः । एकम् । जालऽदण्डम् । उत्ऽयत्य । यन्ति । ओजसा ।
रुद्राः । एकम् । वसवः । एकम् । आदित्यैः । एकः । उत्ऽयतः ॥ १२ ॥
विश्वे । देवाः । उपरिष्टात् । उब्जन्तः । यन्तु । ओजसा ।
मध्येन । घ्नन्तः । यन्तु । सेनाम् । अङ्गिरसः । महीम् ॥ १३ ॥
वनस्पतीन् । वानस्पत्यान् । ओषधीः । उत । वीरुधः ।
द्विऽपात् । चतुःऽपात् । इष्णामि । यथा । सेनाम् । अमूम् । हनन् ॥ १४ ॥

**VIII.8.9** Extreme exhaustion (debility), failure, suffering or mishap which the words cannot soothe away, fatigue, languor, and confusion - with these I cover all of the yonder host.

**VIII.8.10** I commit those men of the yonder army to death; tied with noose of death are they. Binding them fast, I carry them to the messengers of death, the merciless killers.

**VIII.8.11** Take them away, O messengers of death (mṛtyu); O messengers of controller Lord (yama dūta), kill them straight away. Let them be killed in thousands. May the club of the Lord of being crush them to pulp.

**VIII.8.12** (Those moving towards perfection). The perfectibles march vigorously holding one pole of the net; Rudras hold one, Vasus one, and one is held by the Ādityas.

**VIII.8.13** May all the bounties of Nature march vigorously pressing from above. May the wrathful soldiers (shining like burning coal) march on smiting that large army in the middle.

**VIII.8.14** Forest trees, and those subsisting on forest trees, plants, also the creepers, bipeds and the quadrupeds - all I despatch so that they may strike the yoder army dead.

गन्धर्वाप्सरसः सर्पान्देवान्पुण्यजनान्पितॄन् ।
दृष्टानदृष्टानिष्णामि यथा सेनाममूं हनन् ॥१५॥
इम उप्ता मृत्युपाशा यानाक्रम्य न मुच्यसे ।
अमुष्या हन्तु सेनाया इदं कूटं सहस्रशः ॥१६॥
घर्मः समिद्धो अग्निनायं होमः सहस्रहः ।
भवश्च पृश्निबाहुश्च शर्व सेनाममूं हतम् ॥१७॥
मृत्योराषमा पद्यन्तां क्षुधं सेदिं वधं भयम् ।
इन्द्रश्चाक्षुजालाभ्यां शर्व सेनाममूं हतम् ॥१८॥
पराजिताः प्र त्रसतामित्रा नुत्ता धावत ब्रह्मणा ।
बृहस्पतिप्रणुत्तानां मामीषां मोचि कश्चन ॥१९॥
अव पद्यन्तामेषामायुधानि मा शकन्प्रतिधामिषुम् ।
अथैषां बहु बिभ्यतामिषवो घ्नन्तु मर्मणि ॥२०॥

गन्धर्वऽअप्सरसः । सर्पान् । देवान् । पुण्यऽजनान् । पितॄन् ।
दृष्टान् । अदृष्टान् । इष्णामि । यथा । सेनाम् । अमूम् । हनन् ॥ १५ ॥
इमे । उप्ताः । मृत्युऽपाशाः । यान् । आऽक्रम्य । न । मुच्यसे ।
अमुष्याः । हन्तु । सेनायाः । इदम् । कूटम् । सहस्रऽशः ॥ १६ ॥
घर्मः । सम्ऽइद्धः । अग्निना । अयम् । होमः । सहस्रऽहः ।
भवः । च । पृश्निऽबाहुः । च । शर्व । सेनाम् । अमूम् । हतम् ॥ १७ ॥
मृत्योः । आषम् । आ । पद्यन्ताम् । क्षुधम् । सेदिम् । वधम् । भयम् ।
इन्द्रः । च । अक्षुऽजालाभ्याम् । शर्व । सेनाम् । अमूम् । हतम् ॥ १८ ॥
पराऽजिताः । प्र । त्रसत । अमित्राः । नुत्ताः । धावत । ब्रह्मणा ।
बृहस्पतिऽप्रनुत्तानाम् । मा । अमीषाम् । मोचि । कः । चन ॥ १९ ॥
अव । पद्यन्ताम् । एषाम् । आयुधानि । मा । शकन् । प्रतिऽधाम् । इषुम् ।
अथ । एषाम् । बहु । बिभ्यताम् । इषवः । घ्नन्तु । मर्मणि ॥ २० ॥

**VIII.8.15** The sustainer of the earth (gandharvas), and those, who move in the clouds (apsaras), the serpents, the enlightened ones, pious persons, and the elders, seen and unseen - all of them I despatch, so that they may strike the yonder army dead.

**VIII.8.16** These are the nooses of death set up firmly. Having stepped on them, you shall not escape. May this horn kill by thousands of the yonder army (host).

**VIII.8.17** The cauldron of the hot drink (gharma) has been heated with fire; killer of thousands is this offering. O Lord of being, and O Lord of destruction with wonderful arms, may both of you slay that yonder host.

**VIII.8.18** May their lot be the suffering of death, hunger, exhaustion, killing weapon, and terror. With snares and nets, may you, the resplendent Lord and the Lord of destruction slay that yonder host.

**VIII.8.19** Flee away, you defeated enemies; smitten by knowledge run fast. May out of those yonder smitten, by the Lord supreme, not even one escape.

**VIII.8.20** May their weapons fall down. May they not be able to aim an arrow. Then, let the arrows pierce in the vitals of them, terribly afraid.

सं क्रोशतामेनान्द्यावापृथिवी समन्तरिक्षं सह देवताभिः ।
मा ज्ञातारं मा प्रतिष्ठां विदन्त मिथो विघ्नाना उप यन्तु मृत्युम् ॥२१॥
दिशश्चतस्रोऽश्वतर्यो देवरथस्य पुरोडाशाः शफा अन्तरिक्षमुद्धिः ।
द्यावापृथिवी पक्षसी ऋतवोऽभीशवोऽन्तर्देशाः किंकरा वाक्परिरथ्यम् ॥२२॥
संवत्सरो रथः परिवत्सरो रथोपस्थो विराडीषाग्नी रथमुखम् ।
इन्द्रः सव्यष्ठाश्चन्द्रमाः सारथिः ॥२३॥
इतो जयेतो वि जय सं जय जय स्वाहा ।
इमे जयन्तु परामी जयन्तां स्वाहैभ्यो दुराहामीभ्यः । नीललोहितेनामूनभ्यवतनोमि ॥२४॥

सम् । क्रोशताम् । एनान् । द्यावापृथिवी इति । सम् । अन्तरिक्षम् । सह । देवताभिः ।
मा । ज्ञातारम् । मा । प्रतिऽस्थाम् । विदन्त । मिथः । विऽघ्नानाः । उप । यन्तु । मृत्युम् ॥२१॥

दिशः । चतस्रः । अश्वतर्यः । देवऽरथस्य । पुरोडाशाः । शफाः । अन्तरिक्षम् । उद्धिः ।
द्यावापृथिवी इति । पक्षसी इति । ऋतवः । अभीशवः । अन्तःऽदेशाः । किम्ऽकराः । वाक् ।
परिऽरथ्यम् ॥ २२ ॥

समऽवत्सरः । रथः । परिऽवत्सरः । रथऽउपस्थः । विऽराट् । ईषा । अग्निः । रथऽमुखम् ।
इन्द्रः । सव्यऽस्थाः । चन्द्रमाः । सारथिः ॥ २३ ॥

इतः । जय । इतः । वि । जय । सम् । जय । जय । स्वाहा ।
इमे । जयन्तु । परा । अमी इति । जयन्ताम् । स्वाहा । एभ्यः । दुराहा । अमीभ्यः ।
नीलऽलोहितेन । अमून् । अभिऽअवतनोमि ॥ २४ ॥

( ९ ) नवमं सूक्तम्

(१-२६) षड्विंशत्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । कश्यपः सर्वर्षिच्छन्दांसि वा देवताः । (१, ६-७, १०, १३, १५-२१, २४) प्रथमाषष्ठीसप्तमीदशमीत्रयोदशीनामृचां पञ्चदश्यादिसप्तानाश्चतुर्विंश्याश्च त्रिष्टुप्, (२) द्वितीयायाः पङ्क्तिः, (३) तृतीयाया आस्तारपङ्क्तिः, (४-५, २३, २५-२६) चतुर्थीपञ्चमीत्रयोविंशीपञ्चविंशीषड्विंशीनामनुष्टुप्, (८, ११-१२, २२) अष्टम्येकादशीद्वादशीद्वाविंशीनां जगती, (९) नवम्या भुरिक्त्रिष्टुप्, (१४) चतुर्दश्याश्च चतुष्पदातिजगती छन्दांसि ॥

कुतस्तौ जातौ कतमः सो अर्धः कस्माल्लोकात्कतमस्याः पृथिव्याः ।
वत्सौ विराजः सलिलादुदैतां तौ त्वा पृच्छामि कतरेण दुग्धा ॥१॥

कुतः । तौ । जातौ । कतमः । सः । अर्धः । कस्मात् । लोकात् । कतमस्याः । पृथिव्याः ।
वत्सौ । विऽराजः । सलिलात् । उत् । ऐताम् । तौ । त्वा । पृच्छामि । कतरेण । दुग्धा ॥१॥

**VIII.8.21** May the heaven and earth together, together the midspace along with the bounties of Nature wail for them. May they not find an identifier. May they find no recognition. Hitting furiously at each other, may they find their death.

**VIII.8.22** Four quarters are the she-mules (aśvataryaḥ) of the chariot of the enlightened ones; sacrificial cakes (purodaāśāḥ) (are) the hoofs; the midspase (is) the body (of the chariot); heaven and earth (are) the two sides; seasons (are) the rains; intermediate regions (are) the attendants (kinkarāḥ) and the speech (vāk) (is) the hood. (parirathyam).

**VIII.8.23** Year is the chariot. Parivatsara (second year of a cycle of five years) is the driver's seat; Virāt is the pole; fire-divine is the Chariot's front; the resplendent self is the warrior sitting on the left (savyaṣṭhāḥ); and the pleasing moon (candramaḥ) is the chariot driver (sārathiḥ).

**VIII.8.24** May you conquer here, conquer well here, conquer all together; win completely Svāhā. May these conquer. May those yonder be defeated. Cheers for these; fire upon those yonder. With black and red blood, I cover those yonder.

**Mantroktāḥ**

**VIII.9.1** Where from those two were born ? Which half part was that ? From what world, (and) from which of the earths did the two calves of Virāj rose out of water ? I ask you about those two. By which of them was she milked ?

यो अक्रन्दयत्सलिलं महित्वा योनिं कृत्वा त्रिभुजं शयानः ।
वत्सः कामदुघो विराजः स गुहा चक्रे तन्वः पराचैः ॥२॥
यानि त्रीणि बृहन्ति येषां चतुर्थं वियुनक्ति वाचम् ।
ब्रह्मैनद्विद्यात्तपसा विपश्चिद्यस्मिन्नेकं युज्यते यस्मिन्नेकम् ॥३॥
बृहतः परि सामानि षष्ठात्पञ्चाधि निर्मिता ।
बृहद्बृहत्या निर्मितं कुतोधि बृहती मिता ॥४॥
बृहती परि मात्राया मातुर्मात्राधि निर्मिता ।
माया ह जज्ञे मायाया मायाया मातली परि ॥५॥
वैश्वानरस्य प्रतिमोपरि द्यौर्यावद्रोदसी विबबाधे अग्निः ।
ततः षष्ठादामुतो यन्ति स्तोमा उदितो यन्त्यभि षष्ठमह्नः ॥६॥
षट् त्वा पृच्छाम ऋषयः कश्यपेमे त्वं हि युक्तं युयुक्षे योग्यं च ।
विराजमाहुर्ब्रह्मणः पितरं तां नो वि धेहि यतिधा सखिभ्यः ॥७॥

यः । अक्रन्दयत् । सलिलम् । महिऽत्वा । योनिम् । कृत्वा । त्रिऽभुजम् । शयानः ।
वत्सः । कामऽदुघः । विऽराजः । सः । गुहा । चक्रे । तन्वः । पराचैः ॥ २ ॥
यानि । त्रीणि । बृहन्ति । येषाम् । चतुर्थम् । विऽयुनक्ति । वाचम् ।
ब्रह्म । एनत् । विद्यात् । तपसा । विपःऽचित् । यस्मिन् । एकम् । युज्यते । यस्मिन् । एकम् ॥३॥
बृहतः । परि । सामानि । षष्ठात् । पञ्च । अधि । निःऽमिता ।
बृहत् । बृहत्याः । निःऽमितम् । कुतः । अधि । बृहती । मिता ॥ ४ ॥
बृहती । परि । मात्रायाः । मातुः । मात्रा । अधि । निःऽमिता ।
माया । ह । जज्ञे । मायायाः । मायायाः । मातली । परि ॥ ५ ॥
वैश्वानरस्य । प्रतिऽमा । उपरि । द्यौः । यावत् । रोदसी इति । विऽबबाधे । अग्निः ।
ततः । षष्ठात् । आ । अमुतः । यन्ति । स्तोमाः । उत् । इतः । यन्ति । अभि । षष्ठम् । अह्नः ॥
षट् । त्वा । पृच्छाम । ऋषयः । कश्यप । इमे । त्वम् । हि । युक्तम् । युयुक्षे । योग्यम् । च ।
विऽराजम् । आहुः । ब्रह्मणः । पितरम् । ताम् । नः । वि । धेहि । यतिऽधा । सखिऽभ्यः ॥७॥

**VIII.9.2** He, who makes the Ocean roar with his might and who sleeps making a three-tired (tribhujam) abode (for himself), is the calf of Virāj, the milch-cow fulfilling all the desires. Secretly He makes the bodies in remotest distance. (Three tired abode = heaven, midspace and earth)

**VIII.9.3** What the three bṛhats are there, the speech (sound) of which is made clear by the fourth ? By practicing austerities, let the learned one find out that knowledge (supreme), in which one is united, in which (one) becomes one. (yāni trīṇi bṛhanti = three mighty three)

**VIII.9.4** From the sixth bṛhat five Sāmans have been composed. Bṛhat was fashioned out of bṛhatī. Wherefrom the bṛhatī was composed ?

**VIII.9.5** Bṛhatī the measure (mātrā), was fashioned forth from the measure as a mother, Māyā was born from māyā (illusion born out of illusion). Mātali out of māyā is illusion.

**VIII.9.6** The sky above is the image of vaisvānara (the benefactor of all men) so far as the Agni (the fire) forces (keeps) the heaven and the earth apart. From there, the yonder sixth (firmament), the Stomas (praise verses) come. From here they go upwards on the sixth day. (ṣaṣṭham ahnaḥ)

**VIII.9.7** O Kaśyapa (minute observer), we, the six seers here, ask you, as you the concentrator of mind with that who is to be concentrated upon. Virāj is said to be the parent of the Lord of knowledge (Brahmaṇ). Please describe her to us, the friends (sakhibhyaḥ), in as many ways (yatidhā = in all her possible figures).

यां प्रच्युतामनु यज्ञाः प्रच्यवन्त उपतिष्ठन्त उपतिष्ठमानाम् ।
यस्या व्रते प्रसवे यक्षमेजति सा विराडृषयः परमे व्योमन् ॥८॥
अप्राणैति प्राणेन प्राणतीनां विराट् स्वराजमभ्येति पश्चात् ।
विश्वं मृशन्तीमभिरूपां विराजं पश्यन्ति त्वे न त्वे पश्यन्त्येनाम् ॥९॥
को विराजो मिथुनत्वं प्र वेद क ऋतून्क उ कल्पमस्याः ।
क्रमान्को अस्याः कतिधा विदुग्धान्को अस्या धाम कतिधा व्युष्टीः ॥१०॥
इयमेव सा या प्रथमा व्यौच्छदास्वितरासु चरति प्रविष्टा ।
महान्तो अस्यां महिमानो अन्तर्वधूर्जिगाय नवगज्जनित्री ॥११॥
छन्दःपक्षे उषसा पेपिशाने समानं योनिमनु सं चरेते ।
सूर्यपत्नी सं चरतः प्रजानती केतुमती अजरे भूरिरेतसा ॥१२॥
ऋतस्य पन्थामनु तिस्र आगुस्त्रयो घर्मा अनु रेत आगुः ।
प्रजामेका जिन्वत्यूर्जमेका राष्ट्रमेका रक्षति देवयूनाम् ॥१३॥

याम् । प्रऽच्युताम् । अनु । यज्ञाः । प्रऽच्यवन्ते । उपऽतिष्ठन्ते । उपऽतिष्ठमानाम् ।
यस्याः । व्रते । प्रऽसवे । यक्षम् । एजति । सा । विऽराट् । ऋषयः । परमे । विऽओमन् ॥८॥
अप्राणा । एति । प्राणेन । प्राणतीनाम् । विऽराट् । स्वऽराजम् । अभि । एति । पश्चात् । विश्वम् ।
मृशन्तीम् । अभिऽरूपाम् । विऽराजम् । पश्यन्ति । त्वे इति । न । त्वे इति । पश्यन्ति । एनाम् ॥९॥
कः । विऽराजः । मिथुनऽत्वम् । प्र । वेद । कः । ऋतून् । कः । ऊं इति । कल्पम् । अस्याः ।
क्रमान् । कः । अस्याः । कतिऽधा । विऽदुग्धान् । कः । अस्याः । धाम । कतिऽधा । विऽउष्टीः ॥
इयम् । एव । सा । या । प्रथमा । विऽऔच्छत् । आसु । इतरासु । चरति । प्रऽविष्टा ।
महान्तः । अस्याम् । महिमानः । अन्तः । वधूः । जिगाय । नवऽगत् । जनित्री ॥ ११ ॥
छन्दःपक्षे इति छन्दःऽपक्षे । उषसा । पेपिशाने इति । समानम् । योनिम् । अनु । सम् । चरेते इति ।
सूर्यपत्नी इति सूर्यऽपत्नी । सम् । चरतः । प्रजानती इति प्रऽजानती । केतुमती इति केतुऽमती ।
अजरे इति । भूरिऽरेतसा ॥ १२ ॥
ऋतस्य । पन्थाम् । अनु । तिस्रः । आ । अगुः । त्रयः । घर्माः । अनु । रेतः । आ । अगुः ।
प्रऽजाम् । एका । जिन्वति । ऊर्जम् । एका । राष्ट्रम् । एका । रक्षति । देवऽयूनाम् ॥१३॥

**VIII.9.8** Following whose stumblings (pracyutām), the sacrifices depart stumble; following whose approaches, they approach near, under whose law and impulsion, the supreme spirit (yakṣa) stirs, that Virāj, O seers, is in the highest firmament.

**VIII.9.9** Unbreathing Virāj moves about by the breath of the breathing ones; later on she approaches the self-illumined Lord. Some persons behold Virāj, who takes care of all and who adapts her appearance to every thing, while some others do not behold her.

**VIII.9.10** Who has ever known the mating of Viraj, who has known her seasons, and who (has known) her manner of acting (kalpa) ? Who (know) her proceedings (kramān, progress)? (Who knows) how many times she is milded? Who (knows) her abode and in how many forms she appears ?

**VIII.9.11** She is the very same who shone out first of all. She moves about having entered into all these others. Tremendous majesties are within her. Like a bride, newly becoming mother, she overcomes.

**VIII.9.12** The two dawns, with metres as their wings, richly adorning themselves, move towards their common abode; these two spouses of the Sun move on together, with good understanding, full of light, ever-unfading and very prolific.

**VIII.9.13** All the three follow the path of the eternal law (ṛta). Three heats come after the seed (being deposited). One promotes the progeny, one promotes the vigour; and one defends the domain of the pious (people).

अग्नीषोमावदधुर्या तुरीयासीद्यज्ञस्य पक्षावृषयः कल्पयन्तः ।
गायत्रीं त्रिष्टुभं जगतीमनुष्टुभं बृहदर्कीं यजमानाय स्वराभरन्तीम् ॥१४॥
पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवोऽनु पञ्च ।
पञ्च दिशः पञ्चदशेन क्लृप्तास्ता एकमूर्ध्नीरभि लोकमेकम् ॥१५॥
षड्जाता भूता प्रथमजर्तस्य षडु सामानि षडहं वहन्ति ।
षड्योगं सीरमनु सामसाम षडाहुर्द्यावापृथिवीः षडुर्वीः ॥१६॥
षडाहुः शीतान्षडु मास उष्णानृतुं नो ब्रूत यतमोऽतिरिक्तः ।
सप्त सुपर्णाः कवयो नि षेदुः सप्त च्छन्दांस्यनु सप्त दीक्षाः ॥१७॥
सप्त होमाः समिधो ह सप्त मधूनि सप्तर्तवो ह सप्त ।
सप्ताज्यानि परि भूतमायन्ताः सप्तगृध्रा इति शुश्रुमा वयम् ॥१८॥
सप्त च्छन्दांसि चतुरुत्तराण्यन्यो अन्यस्मिन्नध्यार्पितानि ।
कथं स्तोमाः प्रति तिष्ठन्ति तेषु तानि स्तोमेषु कथमार्पितानि ॥१९॥

अग्नीषोमौ । अदधुः । या । तुरीया । आसीत् । यज्ञस्य । पक्षौ । ऋषयः । कल्पयन्तः ।
गायत्रीम् । त्रिऽस्तुभम् । जगतीम् । अनुऽस्तुभम् । बृहत्ऽअर्कीम् । यजमानाय । स्वः ।
आऽभरन्तीम् ॥ १४ ॥

पञ्च । विऽउष्टीः । अनु । पञ्च । दोहाः । गाम् । पञ्चऽनाम्नीम् । ऋतवः । अनु । पञ्च ।
पञ्च । दिशः । पञ्चऽदशेन । क्लृप्ताः । ताः । एकऽमूर्ध्नीः । अभि । लोकम् । एकम् ॥१५॥
षट् । जाता । भूता । प्रथमऽजा । ऋतस्य । षट् । ऊं इति । सामानि । षट्ऽअहम् । वहन्ति ।
षट्ऽयोगम् । सीरम् । अनु । सामऽसाम । षट् । आहुः । द्यावापृथिवीः । षट् । उर्वीः ॥१६॥

षट् । आहुः । शीतान् । षट् । ऊं इति । मासः । उष्णान् । ऋतुम् । नः । ब्रुत । यतमः ।
अतिऽरिक्तः । सप्त । सुऽपर्णाः । कवयः । नि । सेदुः । सप्त । छन्दांसि । अनु । सप्त । दीक्षाः ॥१७॥

सप्त । होमाः । समऽइधः । ह । सप्त । मधूनि । सप्त । ऋतवः । ह । सप्त ।
सप्त । आज्यानि । परि । भूतम् । आयन् । ताः । सप्तऽगृध्राः । इति । शुश्रुम । वयम् ॥१८॥

सप्त । छन्दांसि । चतुःऽउत्तराणि । अन्यः । अन्यस्मिन् । अधि । आर्पितानि ।
कथम् । स्तोमाः । प्रति । तिष्ठन्ति । तेषु । तानि । स्तोमेषु । कथम् । आर्पितानि ॥१९॥

**VIII.9.14** She, that was the fourth, was adopted by the fire-divine (Agni) and the divine bless (Soma); the seers fashioned her as the two wings of the sacrifice - the Gāyatrī, the Triṣṭubh, the Jagatī, the Anuṣṭup and Bṛhaadarkī, bringing bliss to sacrificer.

**VIII.9.15** Five-fold dawnings (vyuṣṭīḥ), and five milking times corresponding to them; the earth or the cow having five names or titles, and five seasons corresponding to them; and the five quarters have been fashioned by the Pañcadaśa (Stoma). All of them having one common head are directed towards one abode.

**VIII.9.16** Six are the beings (Saḍyogam) born, (that are) the first-born of the eternal law. Six are the Sāmans; they carry the six-day (sacrifice). The six-yoked plough is named after each of the Sāmans. They say, six are the heaven-and-earths. Six are the vast spaces.

**VIII.9.17** Six, they say, are cold, and six hot months. Tell us, which of the seasons is surplus. Seven sages with excellent pages (leave or parṇāḥ) sit together. Seven are the metres. Accordingly, seven are the consecrations (dīkṣāḥ).

**VIII.9.18** Seven are the offerings. Verily, seven are the fuel-woods. Honeys are seven and seven the seasons. Seven are the melted butters, that have come to this world. These are the seven (attractions) (gṛdhra), thus we have heard.

**VIII.9.19** Seven are the metres, one set upon the other, (each) increasing by four syllables (the previous one). How the stomas (praise-songs) have been adjusted in them ? How have they been adjusted to the stomas ?

कथं गायत्री त्रिवृतं व्याप कथं त्रिष्टुप्पञ्चदशेन कल्पते ।
त्रयस्त्रिंशेन जगती कथमनुष्टुप्कथमेकविंशः ॥२०॥
अष्ट जाता भूता प्रथमजर्तस्याष्टेन्द्रर्त्विजो दैव्या ये ।
अष्टयोनिरदितिरष्टपुत्राष्टमीं रात्रिमभि हव्यमेति ॥२१॥
इत्थं श्रेयो मन्यमानेदमागमं युष्माकं सख्ये अहमस्मि शेवा ।
समानजन्मा क्रतुरस्ति वः शिवः स वः सर्वाः सं चरति प्रजानन् ॥२२॥
अष्टेन्द्रस्य षड्यमस्य ऋषीणां सप्त सप्तधा ।
अपो मनुष्या३नोषधीस्ताँ उ पञ्चानु सेचिरे ॥२३॥
केवलीन्द्राय दुदुहे हि गृष्टिर्वशं पीयूषं प्रथमं दुहाना ।
अथातर्पयच्चतुरश्चतुर्धा देवान्मनुष्याँ३ असुरानुत ऋषीन् ॥२४॥
को नु गौः क एकऋषिः किमु धाम का आशिषः ।
यक्षं पृथिव्यामेकवृदेकर्तुः कतमो नु सः ॥२५॥

कथम् । गायत्री । त्रिऽवृतम् । वि । आप । कथम् । त्रिऽस्तुप् । पञ्चऽदशेन । कल्पते ।
त्रयःऽत्रिंशेन । जगती । कथम् । अनुऽस्तुप् । कथम् । एकऽविंशः ॥ २० ॥
अष्ट । जाता । भूता । प्रथमऽजा । ऋतस्य । अष्ट । इन्द्र । ऋत्विजः । दैव्याः । ये ।
अष्टऽयोनिः । अदितिः । अष्टऽपुत्रा । अष्टमीम् । रात्रिम् । अभि । हव्यम् । एति ॥२१॥
इत्थम् । श्रेयः । मन्यमाना । इदम् । आ । अगमम् । युष्माकम् । सख्ये । अहम् । अस्मि ।
शेवा । समानऽजन्मा । क्रतुः । अस्ति । वः । शिवः । सः । वः । सर्वाः । सम् । चरति । प्रऽजानन् ॥
अष्ट । इन्द्रस्य । षट् । यमस्य । ऋषीणाम् । सप्त । सप्तऽधा ।
अपः । मनुष्यान् । ओषधीः । तान् । ऊं इति । पञ्च । अनु । सेचिरे ॥ २३ ॥
केवली । इन्द्राय । दुदुहे । हि । गृष्टिः । वशम् । पीयूषम् । प्रथमम् । दुहाना ।
अथ । अतर्पयत । चतुरः । चतुःऽधा । देवान् । मनुष्यान् । असुरान् । उत । ऋषीन् ॥२४॥
कः । नु । गौः । कः । एकऽऋषिः । किम् । ऊं इति । धाम । काः । आऽशिषः ।
यक्षम् । पृथिव्याम् । एकऽवृत् । एकऽऋतुः । कतमः । नु । सः ॥ २५ ॥

**VIII.9.20** How does the Gāyatrī coincide the Trivṛt Stoma ? How does the Triṣṭup correspond to the Pañcadaśa stoma ? How does the Jagatī coincide with the Trayastrimśa and how is the Anuṣṭup the Ekviṇśa stoma.

**VIII.9.21** Eight are the beings born (that are) first-born of the eternal law. O resplendent one, eight are the divine priests. Aditi (the earth) has eight wombs; she has eight sons as well. On the eighth night the sacrificial supplies are obtained.

**VIII.9.22** Thus, thinking it beneficial for you, I have come into your friendship. I am gracious. Your auspicious sacrifice is also of the same origin. Full of understanding, he (the sacrifice) moves within all of you.

**VIII.9.23** Eight to the resplendent Lord, six to the controller Lord, seven into seven to the seers, and the number five follows waters, men and plants.

**VIII.9.24** The heifer yields milk solely for the resplendent Lord, supreme control and the nectar being her first beastings (prathamam duhānā). Thereafter, she gratifies in four ways the four - (i) the devāḥ, (ii) the men (manuṣya), (iii) the life-enjoyers (asura), and (iv) the seers (ṛṣis).

**VIII.9.25** Who is the cow ? Who is the one seer ? Which is the abode ? What are the blessings ? On the earth, there is one Lord, worthy of thought and adoration, and of one season; who is he ?

एको गौरेक एकऋषिरेकं धामैकधाशिषः ।
यक्षं पृथिव्यामेकवृदेकर्तुर्नाति रिच्यते ॥२६॥

एकः । गौः । एकः । एकऽऋषिः । एकम् । धाम । एकऽधा । आऽशिषः ।
यक्षम् । पृथिव्याम् । एकऽवृत् । एकऽऋतुः । न । अति । रिच्यते ॥ २६ ॥

॥ 'विराड्वा इदम्' (८।१०।१) इत्यारभ्य 'वस्योभूयाय' (१६।९।४) इत्यन्तानां पर्यायमन्त्राणामथर्वाचार्य ऋषिः ॥

( १० ) दशमं सूक्तम्

'विराड्वा इदम्' इत्यारभ्य 'विषमेवास्याप्रियम्' इत्यन्तानां षट्पर्यायाणां विराड् देवता ।

[ १ ] प्रथमः पर्यायः

(१-१३) त्रयोदशर्चस्यास्य पर्यायस्य (१) प्रथमर्चस्त्रिपदार्ची पङ्क्तिः, (२, ४, ६, ८, १०, १२) द्वितीयादिसमर्चा याजुषी जगती, (३, ९) तृतीयानवम्योः साम्न्यनुष्टुप्, (५) पञ्चम्या आर्च्यनुष्टुप्, (७, १३) सप्तमीत्रयोदश्योर्विराड्गायत्री, (११) एकादश्याश्च साम्नी बृहती छन्दांसि ॥

विराड्वा इदमग्र आसीत्तस्या जातायाः सर्वमबिभेदियमेवेदं भविष्यतीति ॥१॥
सोदक्रामत्सा गार्हपत्ये न्यक्रामत् ॥२॥
गृहमेधी गृहपतिर्भवति य एवं वेद ॥३॥
सोदक्रामत्साहवनीये न्यक्रामत् ॥४॥
यन्त्यस्य देवा देवहूतिं प्रियो देवानां भवति य एवं वेद ॥५॥

विऽराट् । वै । इदम् । अग्रे । आसीत् । तस्याः । जातायाः । सर्वम् । अबिभेत् । इयम् । एव । इदम् । भविष्यति । इति ॥ १ ॥
सा । उत् । अक्रामत् । सा । गार्हऽपत्ये । नि । अक्रामत् ॥ २ ॥
गृहऽमेधी । गृहऽपतिः । भवति । यः । एवम् । वेद ॥ ३ ॥
सा । उत् । अक्रामत् । सा । आऽहवनीये । नि । अक्रामत् ॥ ४ ॥
यन्ति । अस्य । देवाः । देवऽहूतिम् । प्रियः । देवानाम् । भवति । यः । एवम् । वेद ॥

**VIII.9.26** (That) one is the cow. (That) one is the one-seer. (That) one is the abode. (That) one is the blessings. On the earth, (that) one is one Lord, worthy of thought and adoration and of season; He is untranscended (nātiricyate).

PARYĀYA - I

## Virāṭ

**VIII.10(I).1** In the beginning, surely, Viraj (an immense blaze) was this (universe). When she was born, all were afraid that she alone will be this (universe).

**VIII.10(I).2** She (Virāj) moved up. She entered into Gārhapatya (the house-holder's fire).

**VIII.10(I).3** He, Who knows thus, becomes a household-chief, duly performing household sacrifices (duties).

**VIII.10(I).4** She moved up. She entered the Āhavanīya (the eastern sacrificial fire; fire of invocations and offerings).

**VIII.10(I).5** He, who knows thus, becomes dear to the enlightened ones. The enlightened ones come in response to his invocations of the enlightened ones.

सोदक्रामत्सा दक्षिणाग्नौ न्यक्रामत् ॥६॥
यज्ञर्तो दक्षिणीयो वासतेयो भवति य एवं वेद ॥७॥
सोदक्रामत्सा सभायां न्यक्रामत् ॥८॥
यन्त्यस्य सभां सभ्यो भवति य एवं वेद ॥९॥
सोदक्रामत्सा समितौ न्यक्रामत् ॥१०॥
यन्त्यस्य समितिं सामित्यो भवति य एवं वेद ॥११॥
सोदक्रामत्सामन्त्रणेन्यक्रामत् ॥१२॥
यन्त्यस्यामन्त्रणमामन्त्रणीयो भवति य एवं वेद ॥१३॥

सा । उत् । अक्रामत् । सा । दक्षिणऽअग्नौ । नि । अक्रामत् ॥ ६ ॥

यज्ञऽऋतः । दक्षिणीयः । वासतेयः । भवति । यः । एवम् । वेद ॥ ७ ॥

सा । उत् । अक्रामत् । सा । सभायाम् । नि । अक्रामत् ॥ ८ ॥

यन्ति । अस्य । सभाम् । सभ्यः । भवति । यः । एवम् । वेद ॥ ९ ॥

सा । उत् । अक्रामत् । सा । समऽइतौ । नि । अक्रामत् ॥ १० ॥

यन्ति । अस्य । समऽइतिम् । साम्ऽइत्यः । भवति । यः । एवम् । वेद ॥ ११ ॥

सा । उत् । अक्रामत् । सा । आऽमन्त्रणे । नि । अक्रामत् ॥ १२ ॥

यन्ति । अस्य । आऽमन्त्रणम् । आऽमन्त्रणीयः । भवति । यः । एवम् । वेद ॥ १३ ॥

**VIII.10(I).6** She moved up. She entered the Dakṣiṇāgni (the southern sacrificial fire).

**VIII.10(I).7** He, who knows thus, becomes true to sacrifice, worthy of sacrificial gifts, and deserving good shelter.

**VIII.10(I).8** She moved up. She entered the Sabhā (the assembly).

**VIII.10(I).9** He, who knows thus, becomes a parliamentarian. People go to attend his meetings.

**VIII.10(I).10** She moved up. She entered the Samiti (the war-council).

**VIII.10(I).11** He, who knows thus, becomes a councillor. People go his council.

**VIII.10(I).12** She moved up. She entered āmantraṇa (the consultative committee).

**VIII.10(I).13** He, who knows thus, becomes fit to be consulted. People go to him for consultation.

[ २ ] द्वितीयः पर्यायः

(१-१०) दशर्चस्यास्य पर्यायस्य (१) प्रथमर्चस्त्रिपदा साम्न्यनुष्टुप्, (२) द्वितीयाया उष्णिग्गर्भा चतुष्पदो-
परिष्टाद्विराड्बृहती, (३) तृतीयाया एकपदा याजुषी गायत्री, (४) चतुर्थ्या एकपदा साम्नी पङ्क्तिः,
(५) पञ्चम्या विराड्गायत्री, (६) षष्ठ्या आर्च्यनुष्टुप्, (७) सप्तम्याः साम्नी पङ्क्तिः,
(८) अष्टम्या आसुरी गायत्री, (९) नवम्याः साम्न्यनुष्टुप्,
(१०) दशम्याश्च साम्नी बृहती छन्दांसि ॥

सोदक्रामत्सान्तरिक्षे चतुर्धा विक्रान्तातिष्ठत् ॥१॥
तां देवमनुष्या अब्रुवन्नियमेव तद्वेद यदुभय उपजीवेमेमामुप ह्वयामहा इति ॥२॥
तामुपाह्वयन्त ॥३॥
ऊर्ज एहि स्वध एहि सूनृत एहीरावत्येहीति ॥४॥
तस्या इन्द्रो वत्स आसीद्गायत्र्यभिधान्यभ्रमूधः ॥५॥
बृहच्च रथन्तरं च द्वौ स्तनावास्तां यज्ञायज्ञियं च वामदेव्यं च द्वौ ॥६॥
ओषधीरेव रथन्तरेण देवा अदुह्रन्व्यचो बृहता ॥७॥

सा । उत् । अक्रामत् । सा । अन्तरिक्षे । चतुःऽधा । विऽक्रान्ता । अतिष्ठत् ॥ १ ॥

ताम् । देवऽमनुष्याः । अब्रुवन् । इयम् । एव । तत् । वेद । यत् । उभये । उपऽजीवेम । इमाम् । उप । ह्वयामहै । इति ॥ २ ॥

ताम् । उप । अह्वयन्त ॥ ३ ॥

ऊर्जे । आ । इहि । स्वधे । आ । इहि । सूनृते । आ । इहि । इराऽवति । आ । इहि । इति ॥

तस्याः । इन्द्रः । वत्सः । आसीत् । गायत्री । अभिऽधानी । अभ्रम् । ऊधः ॥ ५ ॥

बृहत् । च । रथम्ऽतरम् । च । द्वौ । स्तनौ । आस्ताम् । यज्ञायज्ञियम् । च । वामऽदेव्यम् । च । द्वौ ॥ ॥

ओषधीः । एव । रथम्ऽतरेण । देवाः । अदुह्रन् । व्यचः । बृहता ॥ ७ ॥

PARYĀYA - II

## Viraṭ

**VIII.10(2).1** She moved up. She stayed in the midspace divided four-fold.

**VIII.10(2).2** About her the enlightened ones the Devas, and the men said; "Verily it is she, who knows from whom both of us get sustenance. Let us call her.

**VIII.10(2).3** Her they called out :

**VIII.10(2).4** "Come, O vigour (ūrja); come, O sustenance (svadhā); Come, O delight (sūnṛta); come, O bestower (arāvati) of food "

**VIII.10(2).5** The aspirant was her calf, the Gāyatrī her halter, and the cloud was her udder.

**VIII.10(2).6** Bṛhat and Rathantara were her two teats (stanau); yajñayajñiya and Vāmadevya the other two.

**VIII.10(2).7** The enlightened ones milked only the (medicinal) plants out of Rathantara, and the space out of Bṛhat.

अपो वामदेव्येन यज्ञं यज्ञायज्ञियेन ॥८॥
ओषधीरेवास्मै रथन्तरं दुहे व्यचो बृहत् ॥९॥
अपो वामदेव्यं यज्ञं यज्ञायज्ञियं य एवं वेद ॥१०॥

अपः । वामऽदेव्येन । यज्ञम् । यज्ञायज्ञियेन ॥ ८ ॥

ओषधीः । एव । अस्मै । रथम्ऽतरम् । दुहे । व्यचः । बृहत् ॥ ९ ॥

अपः । वामऽदेव्यम् । यज्ञम् । यज्ञायज्ञियम् । यः । एवम् । वेद ॥ १० ॥

[ ३ ] तृतीयः पर्यायः

(१-८) अष्टर्चस्यास्य पर्यायस्य (१) प्रथमर्चः चतुष्पदा विराडनुष्टुप्, (२) द्वितीयाया आर्ची त्रिष्टुप्, (३, ५, ७) तृतीया-पञ्चमीसप्तमीनां चतुष्पदा प्राजापत्या पङ्क्तिः, (४, ६, ८) चतुर्थीषष्ठ्यष्टमीनाञ्चार्ची बृहती छन्दांसि ॥

सोदक्रामत्सा वनस्पतीनागच्छत्तां वनस्पतयोघ्नत सा संवत्सरे समभवत् ॥१॥
तस्माद्वनस्पतीनां संवत्सरे वृक्णमपि रोहति वृश्चतेस्याप्रियो भ्रातृव्यो य एवं वेद ॥२॥
सोदक्रामत्सा पितॄनागच्छत्तां पितरोघ्नत सा मासि समभवत् ॥३॥

सा । उत् । अक्रामत् । सा । वनस्पतीन् । आ । अगच्छत् । ताम् । वनस्पतयः । अघ्नत । सा । सम्ऽवत्सरे । सम् । अभवत् ॥ १ ॥

तस्मात् । वनस्पतीनाम् । सम्ऽवत्सरे । वृक्णम् । अपि । रोहति । वृश्चते । अस्य । अप्रियः । भ्रातृव्यः । यः । एवम् । वेद ॥ २ ॥

सा । उत् । अक्रामत् । सा । पितॄन् । आ । अगच्छत् । ताम् । पितरः । अघ्नत । सा । मासि । सम् । अभवत् ॥ ३ ॥

**VIII.10(2).8** Waters out of Vāmadevya, and the sacrifice out of yajñāyajñiya.

**VIII.10(2).9** Rathantara yields to him only the (oṣadhīḥ) and Bṛhat the space (vyacaḥ).

**VIII.10(2).10** Vāmadevya (yields) the waters, and yajñāyajñiya the sacrifice, to him, who knows it thus.

PARYĀYA - III

## Viraṭ

**VIII.10(3).1** She moves up. She came to the forest-trees. The forest-trees smote her. In a year, she came into being (again).

**VIII.10(3).2** Therefore, even the cuttings of forest trees grow out in a year (samvatsara). He, who knows it thus, his hated enemy is hacked down.

**VIII.10(4).3** She moved up. She came to the elders (pitṛn). The elders smote her. In a month (māsi), she came into being (again).

**तस्मात्पितृभ्यो मास्युपमास्यं ददति प्र पितृयाणं पन्थां जानाति य एवं वेद ॥४॥**
**सोदक्रामत्सा देवानागच्छत्तां देवा अघ्नत सार्धमासे समभवत् ॥५॥**
**तस्माद्देवेभ्योर्धमासे वषट्कुर्वन्ति प्र देवयानं पन्थां जानाति य एवं वेद ॥६॥**
**सोदक्रामत्सा मनुष्या३नागच्छत्तां मनुष्या३ अघ्नत सा सद्यः समभवत् ॥७॥**
**तस्मान्मनुष्येभ्य उभयद्युरुप हरन्त्युपास्य गृहे हरन्ति य एवं वेद ॥८॥**

तस्मात् । पितृऽभ्यः । मासि । उपऽमास्यम् । ददति । प्र । पितृऽयानम् । पन्थाम् । जानाति । यः । एवम् । वेद ॥ ४ ॥ [१९]

सा । उत् । अक्रामत् । सा । देवान् । आ । अगच्छत् । ताम् । देवाः । अघ्नत । सा । अर्धऽमासे । सम् । अभवत् ॥५॥

तस्मात् । देवेभ्यः । अर्धऽमासे । वषट् । कुर्वन्ति । प्र । देवऽयानम् । पन्थाम् । जानाति । यः । एवम् । वेद ॥ ६ ॥ [२०]

सा । उत् । अक्रामत् । सा । मनुष्या३न् । आ । अगच्छत् । ताम् । मनुष्या३ः । अघ्नत । सा । सद्यः । सम् । अभवत् ॥७॥

तस्मात् । मनुष्येभ्यः । उभयऽद्युः । उप । हरन्ति । उप । अस्य । गृहे । हरन्ति । यः । एवम् । वेद ॥८॥

[४] चतुर्थः पर्यायः

(१–१६) षोडशर्चस्यास्य पर्यायस्य (१, ५) प्रथमापञ्चम्योर्ऋचोश्चतुष्पदा साम्नी जगती, (२, ६, १०) द्वितीया-षष्ठीदशमीनां साम्नी बृहती, (३, १४) तृतीयाचतुर्दश्योः साम्न्युष्णिक्, (४, ८) चतुर्थ्यष्टम्योरार्च्यनुष्टुप्, (७) सप्तम्या आसुरी गायत्री, (९, १३) नवमीत्रयोदश्योश्चतुष्पदोष्णिक्, (११) एकादश्याः प्राजापत्यानुष्टुप्, (१२, १६) द्वादशीषोडश्योरार्ची त्रिष्टुप्, (१५) पञ्चदश्याश्च विराड्गायत्री छन्दांसि ॥

**सोदक्रामत्सासुरानागच्छत्तामसुरा उपाह्वयन्त माय एहीति ॥१॥**

सा । उत् । अक्रामत् । सा । असुरान् । आ । अगच्छत् । ताम् । असुराः । उप । अह्वयन्त । माये । आ । इहि । इति ॥१॥

**VIII.10(5).4** Therefore, they present monthly food-offerings to elders every month (māsi-upamāsi). He, who knows it thus, knows well the path, the elders tread.

**VIII.10(6).5** She moved up. She came to the enlightened ones (Devān). The enlightened ones smote her. In half-a- month (ardhamāse), she came into being (again).

**VIII.10(3).6** Therefore, they offer oblations with vaśat to the enlightened ones every fortnight (ardhamāsa). He, who knows it thus, knows well the path, the enlightened ones tread.

**VIII.10(3).7** She moved up. She came to men. Men smote (slow) her. Immediately (sadyaḥ), she came into being (again).

**VIII.10(3).8** Therefore, for men they bring food (upa-hṛ) twice a day (ubhayaduḥ). He, who knows it thus, to his house they bring presents and gifts.

PARYĀYA - IV

## Viraṭ

**VIII.10(4).1** She moved up. She came to life-enjoyers (asurāh). The life-enjoyers called to her: "O deception māya (illusion), come here."

तस्या विरोचनः प्राह्लादिर्वत्स आसीदयस्पात्रं पात्रम् ॥२॥
तां द्विमूर्धार्त्व्यो॑ऽधोक्तां मायामेवाधोक् ॥३॥
तां मायामसुरा उप जीवन्त्युपजीवनीयो भवति य एवं वेद ॥४॥
सोदक्रामत्सा पितृनागच्छत्तां पितर उपाह्वयन्त स्वध एहीति ॥५॥
तस्या यमो राजा वत्स आसीद्रजतपात्रं पात्रम् ॥६॥
तामन्तको मार्त्यवोधोक्तां स्वधामेवाधोक् ॥७॥
तां स्वधां पितर उप जीवन्त्युपजीवनीयो भवति य एवं वेद ॥८॥
सोदक्रामत्सा मनुष्या३नागच्छत्तां मनुष्या३ उपाह्वयन्तेरावत्येहीति ॥९॥

तस्याः । विऽरोचनः । प्राह्लादिः । वत्सः । आसीत् । अयःऽपात्रम् । पात्रम् ॥ २ ॥

ताम् । द्विऽमूर्धा । आर्त्व्य३ः । अधोक् । ताम् । मायाम् । एव । अधोक् ॥ ३ ॥

ताम् । मायाम् । असुराः । उप । जीवन्ति । उपऽजीवनीयः । भवति । यः । एवम् । वेद ॥४॥

सा । उत् । अक्रामत् । सा । पितॄन् । आ । अगच्छत् । ताम् । पितरः । उप । अह्वयन्त । स्वधे । आ । इहि । इति ॥ ५ ॥

तस्याः । यमः । राजा । वत्सः । आसीत् । रजतऽपात्रम् । पात्रम् ॥ ६ ॥

ताम् । अन्तकः । मार्त्यवः । अधोक् । ताम् । स्वधाम् । एव । अधोक् ॥ ७ ॥

ताम् । स्वधाम् । पितरः । उप । जीवन्ति । उपऽजीवनीयः । भवति । यः । एवम् । वेद ॥ ८ ॥

सा । उत् । अक्रामत् । सा । मनुष्यान् । आ । अगच्छत् । ताम् । मनुष्या३ः । उप । अह्वयन्त । इराऽवति । आ । इहि । इति ॥ ९ ॥

**VIII.10(4).2** Virocana (very charming), son of Prāhrādir-vatsa (very pleasing) was her calf; the copper-vessel (ayas-pātra) was the milking pot. (Prāhrādir vatsa)

**VIII.10(4).3** Dvimūrdha (Two-headed one), son of Ṛtu (season) milked her; milked only the deception (illusion) from her.

**VIII.10(4).4** On that deception (illusion) the life enjoyers (asurāḥ) subsist. He, who knows it thus, becomes worthy of subsistence.

**VIII.10(4).5** She moved up. She came to the elders (pitṛn). The elders called to her : "O sustenance (svadha), come here (ehiiti)."

**VIII.10(4).6** Radiant Yama (the controller) was her calf; the silver-vessel (rajata-pātra) was the milking-pot.

**VIII.10(4).7** Antaka (the ender), son of Mṛtyu (death) milked her; milked only the sustanance from her.

**VIII.10.(4).8** On that sustenance the elders (pitraḥ) live. He, who knows it thus, becomes worthy of getting sustenance.

**VIII.10(4).9** She moved up. She came to men (manuṣyāḥ). Men called to her : "O you, one with food, come here."

तस्या मनुर्वैवस्वतो वत्स आसीत्पृथिवी पात्रम् ॥१०॥
तां पृथी वैन्योऽधोक्तां कृषिं च सस्यं चाधोक् ॥११॥
ते कृषिं च सस्यं च मनुष्या३ उप जीवन्ति कृष्टराधिरुपजीवनीयो भवति य एवं वेद ॥१२॥
सोदक्रामत्सा सप्तऋषीनागच्छत्तां सप्तऋषय उपाह्वयन्त ब्रह्मण्वत्येहीति ॥१३॥
तस्याः सोमो राजा वत्स आसीच्छन्दः पात्रम् ॥१४॥
तां बृहस्पतिराङ्गिरसोऽधोक्तां ब्रह्म च तपश्चाधोक् ॥१५॥
तद्ब्रह्म च तपश्च सप्तऋषय उप जीवन्ति ब्रह्मवर्चस्युपजीवनीयो भवति य एवं वेद ॥१६॥

तस्याः। मनुः। वैवस्वतः। वत्सः। आसीत्। पृथिवी। पात्रम्॥ १०॥

ताम्। पृथी। वैन्यः। अधोक्। ताम्। कृषिम्। च। सस्यम्। च। अधोक्॥११॥

ते। कृषिम्। च। सस्यम्। च। मनुष्याः। उप। जीवन्ति। कृष्टऽराधिः। उपऽजीवनीयः।
भवति। यः। एवम्। वेद॥ १२॥

सा। उत्। अक्रामत्। सा। सप्तऽऋषीन्। आ। अगच्छत्। ताम्। सप्तऽऋषयः। उप। अह्वयन्त।
ब्रह्मण्ऽवति। आ। इहि। इति॥ १३॥

तस्याः। सोमः। राजा। वत्सः। आसीत्। छन्दः। पात्रम्॥ १४॥

ताम्। बृहस्पतिः। आङ्गिरसः। अधोक्। ताम्। ब्रह्म। च। तपः। च। अधोक्॥१५॥

तत्। ब्रह्म। च। तपः। च। सप्तऽऋषयः। उप। जीवन्ति। ब्रह्मऽवर्चसी। उपऽजीवनीयः।
भवति। यः। एवम्। वेद॥ १६॥

**VIII.10(4).10** Manu (the thinker), son of Vivasvān (expert in settling), was her calf, the earth as the milking-pot. (Vaivasvato-vatsa)

**VIII.10(4).11** Pṛthi (Expanding one), son of Vena (vainyaḥ) (desirous), milked her, milked cultivation (kṛṣi) and grains (sasya) from her.

**VIII.10(4).12** Men live upon cultivation and grains. He, who knows it thus, becomes able to earn living and become rich by cultivation.

**VIII.10(4).13** She moved up. She came to the seven seers (saptaṛṣīn). The seven seers called to her : "O you, one full of spiritual knowledge (brahamaṇwati), come here,"

**VIII.10(4).14** Radiant Soma (bliss) was her calf; the metered verse was the milking-pot. (Somarājā vatsa)

**VIII.10(4).15** Bṛhaspati (the master of knowledge), son of Aṅgiras (shining as burning coal), milked her, milked spiritual knowledge (brahma) and austerity (tapas) from her.

**VIII.10(4).16** On that spiritual knowledge and the austerity, the seven seers (sapta ṛṣayaḥ) subsist. He, who knows it thus, becomes worthy of subsisting upon the spiritual life. (brahma-varcasi-upajīvanīyaḥ bhavati)

[ ५ ] पञ्चमः पर्यायः

(१-१६) षोडशर्चस्यास्य पर्यायस्य (१, १३) प्रथमात्रयोदश्योर्ऋचोश्चतुष्पदा साम्नी जगती, (२-३) द्वितीया-तृतीययोः साम्न्युष्णिक्, (४, १६) चतुर्थीषोडश्योरार्च्यनुष्टुप्, (५) पञ्चम्याश्चतुष्पदा प्राजापत्या जगती, (६) षष्ठ्याः साम्नी त्रिष्टुप्, (७, ११) सप्तम्येकादश्योर्विराड्गायत्री, (८) अष्टम्या आर्ची त्रिष्टुप्, (९) नवम्याश्चतुष्पदोष्णिक्, (१०, १४) दशमीचतुर्दश्योः साम्नी बृहती, (१२) द्वादश्यास्त्रिपदा ब्राह्मी भुरिग्गायत्री, ( १५ ) पञ्चदश्याश्च साम्न्यनुष्टुप् छन्दांसि ॥

सोदक्रामत्सा देवानागच्छत्तां देवा उपाह्वयन्तोर्ज एहीति ॥१॥
तस्या इन्द्रो वत्स आसीच्चमसः पात्रम् ॥२॥
तां देवः सविताधोक्तामूर्जामेवाधोक् ॥३॥
तामूर्जां देवा उप जीवन्त्युपजीवनीयो भवति य एवं वेद ॥४॥
सोदक्रामत्सा गन्धर्वाप्सरस आगच्छत्तां गन्धर्वाप्सरस उपाह्वयन्त पुण्यगन्ध एहीति ॥५॥
तस्याश्चित्ररथः सौर्यवर्चसो वत्स आसीत्पुष्करपर्णं पात्रम् ॥६॥

सा । उत् । अक्रामत् । सा । देवान् । आ । अगच्छत् । ताम् । देवाः । उप । अह्वयन्त । ऊर्जे । आ । इहि । इति ॥ १ ॥

तस्याः । इन्द्रः । वत्सः । आसीत् । चमसः । पात्रम् ॥ २ ॥

ताम् । देवः । सविता । अधोक् । ताम् । ऊर्जाम् । एव । अधोक् ॥ ३ ॥

ताम् । ऊर्जाम् । देवाः । उप । जीवन्ति । उपऽजीवनीयः । भवति । यः । एवम् । वेद ॥४॥

सा । उत् । अक्रामत् । सा । गन्धर्वऽअप्सरसः । आ । अगच्छत् । ताम् । गन्धर्वऽअप्सरसः । उप । अह्वयन्त । पुण्यऽगन्धे । आ । इहि । इति ॥ ५ ॥

तस्याः । चित्रऽरथः । सौर्यऽवर्चसः । वत्सः । आसीत् । पुष्करऽपर्णम् । पात्रम् ॥ ६ ॥

PARYĀYA - V

## Virāṭ

**VIII.10(5).1** She moved up. She came to the enlightened ones. The enlightened ones called to her : " O vigour (ūrjā), come here."

**VIII.10(5).2** The resplendent self was her calf; the bowl was the milking-pot.

**VIII.10(5).3** The impeller Lord milked her; milked only vigour from her.

**VIII.10(5).4** On that vigour the enlightened ones subsist. He, who knows it thus, becomes worthy of subsistence (on vigour).

**VIII.10(5).5** She moved up. She came to the Gandharvas (sustainers of earth) and the Apsaras (those who move in the clouds). The Gandharvas and Apsaras called to her : "O you, of pleasing fragrance (puṇya-gandha), come here."

**VIII.10(5).6** Citrarathe (one having a wonderful chariot), son of Sūryavarcas (brilliant as the Sun), was her calf; a lotus-leaf (puṣkara-parṇa) was the milking-pot. (Saurya-varcaso vatsa)

तां वसुरुचिः सौर्यवर्चसोऽधोक्तां पुण्यमेव गन्धमधोक् ॥७॥
तं पुण्यं गन्धं गन्धर्वाप्सरस उप जीवन्ति पुण्यगन्धिरुपजीवनीयो भवति य एवं वेद ॥८
सोदक्रामत्सेतरजनानागच्छत्तामितरजना उपाह्वयन्त तिरोध एहीति ॥९॥
तस्याः कुबेरो वैश्रवणो वत्स आसीदामपात्रं पात्रम् ॥१०॥
तां रजतनाभिः काबेरकोऽधोक्तां तिरोधामेवाधोक् ॥११॥
तां तिरोधामितरजना उप जीवन्ति तिरो धत्ते सर्वं पाप्मानमुपजीवनीयो
भवति य एवं वेद ॥१२॥

ताम् । वसुऽरुचिः । सौर्यऽवर्चसः । अधोक् । ताम् । पुण्यम् । एव । गन्धम् । अधोक् ॥७॥
तम् । पुण्यम् । गन्धम् । गन्धर्वऽअप्सरसः । उप । जीवन्ति । पुण्यऽगन्धिः । उपऽजीवनीयः ।
भवति । यः । एवम् । वेद ॥ ८ ॥
सा । उत् । अक्रामत् । सा । इतरऽजनान् । आ । अगच्छत् । ताम् । इतरऽजनाः । उप ।
अह्वयन्त । तिरःऽधे । आ । इहि । इति ॥ ९ ॥
तस्याः । कुबेरः । वैश्रवणः । वत्सः । आसीत् । आमऽपात्रम् । पात्रम् ॥ १० ॥
ताम् । रजतऽनाभिः । काबेरक । अधोक् । ताम् । तिरःऽधाम् । एव । अधोक् ॥ ११ ॥
ताम् । तिरःऽधाम् । इतरऽजनाः । उप । जीवन्ति । तिरः । धत्ते । सर्वम् । पाप्मानम् ।
उपऽजीवनीयः । भवति । यः । एवम् । वेद ॥ १२ ॥

**VIII.10(5).7** Vasuruci (shining with wealth), son of Suryavarcas (brilliant as the Sun), milked her; milked only the pleasing fragrance (puṇyam gandham) from her.

**VIII.10(5).8** On that pleasing fragrance the Gandharvas and Apsaras subsist. He, who knows it thus, becomes worthy of subsistence on the pleasing fragrance.

**VIII.10(5).9** She moved up. She came to other folks. The other folks called to her : "O you, concealing one (tirodha), come here."

**VIII.10(5).10** Kubera (uncouth-bodied), son of Viśravaṇa (kuberaḥ vaiśravaṇaḥ) (keen of hearing) was her calf; the unburnt clay-vessel (āma-pātram) was the milking-pot.

**VIII.10(5).11** Rajatanabhi (silver-navelled), son of Kubera, milked only the concealment (tirodhām) from her.

**VIII.10(5).12** On that concealment the other folks subsist. He, who knows it thus, conceals every evil and becomes able to subsist on it.

सोदक्रामत्सा सर्पानागच्छत्तां सर्पा उपाह्वयन्त विषवत्येहीति ॥१३॥
तस्यास्तक्षको वैशालेयो वत्स आसीदलाबुपात्रं पात्रम् ॥१४॥
तां धृतराष्ट्र ऐरावतोऽधोक्तां विषमेवाधोक् ॥१५॥
तद्विषं सर्पा उप जीवन्त्युपजीवनीयो भवति य एवं वेद ॥१६॥

सा । उत् । अक्रामत् । सा । सर्पान् । आ । अगच्छत् । ताम् । सर्पाः । उप । अह्वयन्त । विषऽवति । आ । इहि । इति ॥ १३ ॥

तस्याः । तक्षकः । वैशालेयः । वत्सः । आसीत् । अलाबुऽपात्रम् । पात्रम् ॥ १४ ॥

ताम् । धृतऽराष्ट्रः । ऐराऽवतः । अधोक् । ताम् । विषम् । एव । अधोक् ॥ १५ ॥

तत् । विषम् । सर्पाः । उप । जीवन्ति । उपऽजीवनीयः । भवति । यः । एवम् । वेद ॥ १६ ॥

[ ६ ] षष्ठः पर्यायः

(१–४) चतुर्ऋचस्यास्य पर्यायस्य (१) प्रथमर्चो विराड्गायत्री, (२) द्वितीयायाः साम्नी त्रिष्टुप्, (३) तृतीयायाः प्राजापत्यानुष्टुप्, (४) चतुर्थ्याश्चार्च्युष्णिक् छन्दांसि । अनुक्तपादा द्विपदा एताः ॥

तद्यस्मा एवं विदुषेलाबुनाभिषिञ्चेत्प्रत्याहन्यात् ॥१॥
न च प्रत्याहन्यान्मनसा त्वा प्रत्याहन्मीति प्रत्याहन्यात् ॥२॥

तत् । यस्मै । एवम् । विदुषे । अलाबुना । अभिऽसिञ्चेत् । प्रतिऽआहन्यात् ॥ १ ॥

न । च । प्रतिऽआहन्यात् । मनसा । त्वा । प्रतिऽआहन्मि । इति । प्रतिऽआहन्यात् ॥ २ ॥

**VIII.10(5).13** She moved up. She came to serpents (sarpāḥ). The serpents called to her : "O poisonous one, come here."

**VIII.10(5).14** Takṣaka (cutter), son of viśala (huge), was her calf; the ground-bottle (alābu-pātra) was the milking-pot.

**VIII.10(5).15** Dhṛtarāṣṭra (one who has usurped the kingdom), son of Irāvān (one having food), milked her; milked only the poison from her.(Dhṛtarāṣtraḥ Airāvataḥ)

**VIII.10(5).16** On that poison the surpents subsist.He who knows it thus, become worthy of earning subsistence.

PARYĀYA - VI

## Virāṭ

**VIII.10(6).1** Therefore, on such a man, who knows it thus, should some one sprinkle with a ground-vessel, he must promptly counter it.

**VIII.10(6).2** If he could not counter it (in time), he should counter it by thinking : "I counter you back."

यत्प्रत्याहन्ति विषमेव तत्प्रत्याहन्ति ॥३॥
विषमेवास्याप्रियं भ्रातृव्यमनुविषिच्यते य एवं वेद ॥४॥

यत् । प्रतिऽआहन्ति । विषम् । एव । तत् । प्रतिऽआहन्ति ॥ ३ ॥

विषम् । एव । अस्य । अप्रियम् । भ्रातृव्यम् । अनुऽविसिच्यते । यः । एवम् । वेद ॥ ४ ॥

॥ इत्यष्टमं काण्डम् ॥

[ अष्टमकाण्डे सूक्तानि १०, ऋचः २९३ ]

**VIII.10(6).3** When countering thus, he counters that very poison.

**VIII.10(6).4** That very poison is poured thoroughly into the hated foe of him, who knows it thus. (Bhrātṛvyam - anuviṣi - cyate.)

----------------------

**Here ends Kāṇḍa VIII**
**Hymns 10, Verses 293**

----------------------

# अथ नवमं काण्डम् ॥

( १ ) प्रथमं सूक्तम्

(१-२४) चतुर्विंशत्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । मध्वश्विनौ च देवताः । (१, ४-५) प्रथमाचतुर्थीपञ्चमीनामृचां त्रिष्टुप्, (२) द्वितीयायास्त्रिष्टुग्गर्भा पङ्क्तिः, (३) तृतीयायाः परानुष्टुप्त्रिष्टुप्, (६) षष्ठ्या अतिशाक्वरगर्भा यवमध्या महाबृहती, (७) सप्तम्या अतिजागतगर्भा यवमध्या महाबृहती, (८) अष्टम्या बृहतीगर्भा संस्तारपङ्क्तिः, (९) नवम्याः पराबृहती प्रस्तारपङ्क्तिः, (१०) दशम्याः परोष्णिक्पङ्क्तिः, (११-१३, १५-१६, १८-१९) एकादश्यादितृचस्य पञ्चदशीषोडश्यष्टादश्येकोनविंशीनाञ्चानुष्टुप्, (१४) चतुर्दश्याः पुर उष्णिक्, (१७) सप्तदश्या उपरिष्टाद्विराड्बृहती, (२०) विंश्या भुरिग्विष्टारपङ्क्तिः, (२१) एकविंश्या एकावसाना द्विपदार्च्यनुष्टुप्, (२२) द्वाविंश्यास्त्रिपदा ब्राह्मी पुर उष्णिक्, (२३) त्रयोविंश्या द्विपदार्चीं पङ्क्तिः, (२४) चतुर्विंश्याश्च त्र्यवसाना षट्पदाष्टिश्छन्दांसि ॥

दि॒वस्पृ॑थि॒व्या अ॒न्तरि॑क्षात्समु॒द्राद॒ग्नेर्वाता॑न्मधुक॒शा हि ज॒ज्ञे ।
तां चा॑यि॒त्वामृतं॒ वसा॑नां हृ॒द्भिः प्र॒जाः प्रति॑ नन्दन्ति॒ सर्वाः॑ ॥१॥
म॒हत्पयो॑ वि॒श्वरू॑पमस्याः समु॒द्रस्य॑ त्वो॒त रेत॑ आहुः ।
यत॒ ऐति॑ मधुक॒शा ररा॑णा॒ तत्प्रा॒णस्तद॒मृतं॒ निवि॑ष्टम् ॥२॥
पश्य॑न्त्यस्याश्चरि॒तं पृ॑थि॒व्यां पृ॒थङ्नरो॑ बहु॒धा मीमां॑समानाः ।
अ॒ग्नेर्वाता॑न्मधुक॒शा हि ज॒ज्ञे म॒रुता॑मु॒ग्रा न॒प्तिः ॥३॥
मा॒तादि॒त्याना॑ दुहि॒ता वसू॑नां प्रा॒णः प्र॒जाना॑म॒मृत॑स्य॒ नाभिः॑ ।
हिर॑ण्यवर्णा मधुक॒शा घृ॒ताची॑ म॒हान्भर्ग॑श्चरति॒ मर्त्ये॑षु ॥४॥

दि॒वः । पृ॒थि॒व्याः । अ॒न्तरि॑क्षात् । स॒मु॒द्रात् । अ॒ग्नेः । वाता॑त् । म॒धु॒ऽक॒शा । हि । ज॒ज्ञे ।
ताम् । चा॒यि॒त्वा । अ॒मृत॑म् । वसा॑नाम् । हृ॒त्ऽभिः । प्र॒ऽजाः । प्रति॑ । न॒न्द॒न्ति॒ । सर्वाः॑ ॥१॥
म॒हत् । पयः॑ । वि॒श्वऽरू॑पम् । अ॒स्याः॒ । स॒मु॒द्रस्य॑ । त्वा॒ । उ॒त । रेतः॑ । आ॒हुः॒ ।
यतः॑ । आ॒ऽएति॑ । म॒धु॒ऽक॒शा । ररा॑णा । तत् । प्रा॒णः । तत् । अ॒मृत॑म् । निऽवि॑ष्टम् ॥२॥
पश्य॑न्ति । अ॒स्याः॒ । च॒रि॒तम् । पृ॒थि॒व्याम् । । पृथ॑क् । नरः॑ । ब॒हु॒ऽधा । मीमां॑समानाः ।
अ॒ग्नेः । वाता॑त् । म॒धु॒ऽक॒शा । हि । ज॒ज्ञे । म॒रुता॑म् । उ॒ग्रा । न॒प्तिः ॥ ३ ॥
मा॒ता । आ॒दि॒त्याना॑म् । दु॒हि॒ता । वसू॑नाम् । प्रा॒णः । प्र॒ऽजाना॑म् । अ॒मृत॑स्य । नाभिः॑ ।
हिर॑ण्यऽवर्णा । म॒धु॒ऽक॒शा । घृ॒ताची॑ । म॒हान् । भर्गः॑ । च॒र॒ति॒ । मर्त्ये॑षु ॥ ४ ॥

## Madhu, Madhu Kaśā, Aśvinau

**IX.1.1** Surely from heaven, from earth, from midspace, from ocean, from fire and from wind the honey-string (Madhukaśā) is born. Knowing her to be the bestower of immortality, all the creatures are delighted in their hearts to meet her.

**IX.1.2** Her milk is great (in quantity and degree), and found in all the forms. They call you even the genial seed (reta) of ocean. Whence the bountiful honey-string comes, that (there) is the life, that is (there) the immorality (is) stored.

**IX.1.3** Men look at her activities at different places on this earth, speculating in various ways. Surely the honey-string, the formidable daughter of the cloud-bearing winds, is born from fire and wind.

**IX.1.4** Mother of the Ādityas (suns), daughter of the Vasus, vital breath of the people, navel of immortality, the golden-hued honey-string, dripping purified butter, moves among (within) mortals as great brilliance.

मधोः कशामजनयन्त देवास्तस्या गर्भो अभवद्विश्वरूपः ।
तं जातं तरुणं पिपर्ति माता स जातो विश्वा भुवना वि चष्टे ॥५॥
कस्तं प्र वेद क उ तं चिकेत यो अस्या हृदः कलशः सोमधानो अक्षितः ।
ब्रह्मा सुमेधाः सो अस्मिन्मदेत ॥६॥
स तौ प्र वेद स उ तौ चिकेत यावस्याः स्तनौ सहस्रधारावक्षितौ ।
ऊर्जं दुहाते अनपस्फुरन्तौ ॥७॥
हिङ्करिक्रती बृहती वयोधा उच्चैर्घोषाभ्येति या व्रतम् ।
त्रीन्घर्मानभि वावशाना मिमाति मायुं पयते पयोभिः ॥८॥
यामापीनामुपसीदन्त्यापः शाक्वरा वृषभा ये स्वराजः ।
ते वर्षन्ति ते वर्षयन्ति तद्विदे काममूर्जमापः ॥९॥
स्तनयित्नुस्ते वाक्प्रजापते वृषा शुष्मं क्षिपसि भूम्यामधि ।
अग्नेर्वातान्मधुकशा हि जज्ञे मरुतामुग्रा नप्तिः ॥१०॥

मधोः । कशाम् । अजनयन्त । देवाः । तस्याः । गर्भः । अभवत् । विश्वऽरूपः ।
तम् । जातम् । तरुणम् । पिपर्ति । माता । सः । जातः । विश्वा । भुवना । वि । चष्टे ॥५॥
कः । तम् । प्र । वेद । कः । ऊं इति । तम् । चिकेत । यः । अस्याः । हृदः । कलशः ।
सोमऽधानः । अक्षितः । ब्रह्मा । सुऽमेधाः । सः । अस्मिन् । मदेत ॥ ६ ॥
सः । तौ । प्र । वेद । सः । ऊं इति । तौ । चिकेत । यौ । अस्याः । स्तनौ । सहस्रऽधारौ ।
अक्षितौ । ऊर्जम् । दुहाते इति । अनपऽस्फुरन्तौ ॥ ७ ॥
हिङ्ऽकरिक्रती । बृहती । वयःऽधाः । उच्चैःऽघोषा । अभिऽएति । या । व्रतम् ।
त्रीन् । घर्मान् । अभि । वावशाना । मिमाति । मायुम् । पयते । पयःऽभिः ॥ ८ ॥
याम् । आऽपीनाम् । उपऽसीदन्ति । आपः । शाक्वराः । वृषभाः । ये । स्वऽराजः ।
ते । वर्षन्ति । ते । वर्षयन्ति । तत्ऽविदे । कामम् । ऊर्जम् । आपः ॥ ९ ॥
स्तनयित्नुः । ते । वाक् । प्रजाऽपते । वृषा । शुष्मम् । क्षिपसि । भूम्याम् । अधि ।
अग्नेः । वातात् । मधुऽकशा । हि । जज्ञे । मरुताम् । उग्रा । नप्तिः ॥ १० ॥

**IX.1.5** The bounties of Nature beget the string of honey; her embryo assumes all the forms. Him, when new-born and young, the mother nourishes. He, as soon he is born, looks upon all the beings.

**IX.1.6** Who knows that for sure? Who even speculates about that, which is her vessel close to her heart, containing bliss ever-unexhausting. He is the knower of excellent intellect, who takes delight in it.

**IX.1.7** He knows those two for sure. He speculates about those two, which are her two breaths, thousands-streamed and ever-inexhausted. Those two yield vigour without any resistence.

**IX.1.8** Bellowing with hin sound (hiṅkarikratī) great , bestower of long-life, loud-roaring (uccaghoṣa), she that comes to the place of sacrifice, commanding the three libations, she roars a roarer (lows a lowing) and pours out waters (plenty of milk).

**IX.1.9** To whom, the strong and stout one, come the waters, that are mighty showerers and self-refulgent; they rain, they causes to rain vigour and waters to the desire of him, who knows this.

**IX.1.10** O Lord of creature, thunder is your voice. You, O showerer, shower energy on earth and sky. Surely the honey-string, the formidable daughter of the cloud-bearing winds (marutām naptiḥ) is born from fire and wind.

यथा सोमः प्रातःसवने अश्विनोर्भवति प्रियः ।
एवा मे अश्विना वर्च आत्मनि ध्रियताम् ॥११॥
यथा सोमो द्वितीये सवन इन्द्राग्न्योर्भवति प्रियः ।
एवा म इन्द्राग्नी वर्च आत्मनि ध्रियताम् ॥१२॥
यथा सोमस्तृतीये सवन ऋभूणां भवति प्रियः ।
एवा म ऋभवो वर्च आत्मनि ध्रियताम् ॥१३॥
मधु जनिषीय मधु वंशिषीय ।
पयस्वानग्न आगमं तं मा सं सृज वर्चसा ॥१४॥
सं माग्ने वर्चसा सृज सं प्रजया समायुषा ।
विद्युर्मे अस्य देवा इन्द्रो विद्यात्सह ऋषिभिः ॥१५॥
यथा मधु मधुकृतः संभरन्ति मधावधि ।
एवा मे अश्विना वर्च आत्मनि ध्रियताम् ॥१६॥

यथा । सोमः । प्रातःऽसवने । अश्विनोः । भवति । प्रियः ।
एव । मे । अश्विना । वर्चः । आत्मनि । ध्रियताम् ॥ ११ ॥
यथा । सोमः । द्वितीये । सवने । इन्द्राग्न्योः । भवति । प्रियः ।
एव । मे । इन्द्राग्नी इति । वर्चः । आत्मनि । ध्रियताम् ॥ १२ ॥
यथा । सोमः । तृतीये । सवने । ऋभूणाम् । भवति । प्रियः ।
एव । मे । ऋभवः । वर्चः । आत्मनि । ध्रियताम् ॥ १३ ॥
मधु । जनिषीय । मधु । वंसिषीय ।
पयस्वान् । अग्ने । आ । अगमम् । तम् । मा । सम् । सृज । वर्चसा ॥ १४ ॥
सम् । मा । अग्ने । वर्चसा । सृज । सम् । प्रऽजया । सम् । आयुषा ।
विद्युः । मे । अस्य । देवाः । इन्द्रः । विद्यात् । सह । ऋषिऽभिः ॥ १५ ॥
यथा । मधु । मधुऽकृतः । सम्ऽभरन्ति । मधौ । अधि ।
एव । मे । अश्विना । वर्चः । आत्मनि । ध्रियताम् ॥ १६ ॥

**IX.1.11** As at the morning sacrifice (prātaḥ savana), the cure-juice is pleasing to the twins-divine (Aśvinau), so may the twins-divine maintain lustre in my self.

**IX.1.12** As at the second (mid-day) sacrifice (dvitīya savana) the cure-juice is pleasing to the Lord resplendent and adorable (Agni), so may the Lord resplendent and adorable maintain lustre in my self.

**IX.1.13** As at the third (evening) sacrifice (tṛtiya savana), the cure-juice is pleasing to Ṛbhus (artists and artisans), so may the Ṛbhus maintain lustre in my self.

**IX.1.14** May I create sweetness. May I receive sweetness. O adorable Lord, exuberant, I have come to you. As such may you endow me with lustre.

**IX.1.15** O adorable Lord, may you endow me with lustre, progeny and long span of life. May the enlightened ones know of me as such, may the resplendent self along with the seers know (of me). (Also Ṛg. I.23.24)

**IX.1.16** As the honey-makers (bees) accumulate honey in the honey-comb, even so, O twins-divine, may the lustre be maintained in my self (ātmani).

यथा मक्षा इदं मधु न्यञ्जन्ति मधावधि ।
एवा मे अश्विना वर्चस्तेजो बलमोजश्च ध्रियताम् ॥१७॥
यद्गिरिषु पर्वतेषु गोष्वश्वेषु यन्मधु ।
सुरायां सिच्यमानायां यत्तत्र मधु तन्मयि ॥१८॥
अश्विना सारघेण मा मधुनाङ्क्तं शुभस्पती ।
यथा वर्चस्वतीं वाचमावदानि जनाँ अनु ॥१९॥
स्तनयित्नुस्ते वाक्प्रजापते वृषा शुष्मं क्षिपसि भूम्यां दिवि ।
तां पशव उप जीवन्ति सर्वे तेनो सेषमूर्जं पिपर्ति ॥२०॥
पृथिवी दण्डोऽन्तरिक्षं गर्भो द्यौः कशा विद्युत्प्रकशो हिरण्ययो बिन्दुः ॥२१॥
यो वै कशायाः सप्त मधूनि वेद मधुमान्भवति ।
ब्राह्मणश्च राजा च धेनुश्चानड्वांश्च व्रीहिश्च यवश्च मधु सप्तमम् ॥२२॥

यथा । मक्षाः । इदम् । मधु । निऽअञ्जन्ति । मधौ । आधि ।
एव । मे । अश्विना । वर्चः । तेजः । बलम् । ओजः । च । ध्रियताम् ॥ १७ ॥
यत् । गिरिषु । पर्वतेषु । गोषु । अश्वेषु । यत् । मधु ।
सुरायाम् । सिच्यमानायाम् । यत् । तत्र । मधु । तत् । मयि ॥ १८ ॥
अश्विना । सारघेण । मा । मधुना । अङ्क्तम् । शुभः । पती इति ।
यथा । वर्चस्वतीम् । वाचम् । आऽवदानि । जनान् । अनु ॥ १९ ॥
स्तनयित्नुः । ते । वाक् । प्रजाऽपते । वृषा । शुष्मम् । क्षिपसि । भूम्याम् । दिवि ।
ताम् । पशवः । उप । जीवन्ति । सर्वे । तेनो इति । सा । इषम् । ऊर्जम् । पिपर्ति ॥ २० ॥
पृथिवी । दण्डः । अन्तरिक्षम् । गर्भः । द्यौः । कशा । विऽद्युत् । प्रऽकशः । हिरण्ययः । बिन्दुः ॥
यः । वै । कशायाः । सप्त । मधूनि । वेद । मधुऽमान् । भवति । ब्राह्मणः । च । राजा । च ।
धेनुः । च । अनड्वान् । च । व्रीहिः । च । यवः । च । मधु । सप्तमम् ॥ २२ ॥

**IX.1.17** As the male bees besmear this honey in the honey-comb, even so, O twins-divine, may my lustre, brilliance, strength and vigour be maintained.

**IX.1.18** What sweetness is there in hills, in mountains, in cows, in horses, and what in the intoxicating drink being poured out, may that sweetness be in me.

**IX.1.19** O twin-divines, lords of beauty, anoint me with the honey of bees, (Sāragha) that I may speak brilliant words among the people. (See also Av. VI.69.3)

**IX.1.20** O Lord of creatures, thunder is your voice. You, a showerer, shower energy on earth and sky. On that all the animals live; with that only she gives food and vigour in abundance.

**IX.1.21** Earth is the handle; midspace (is) the joining point (garbhaḥ); heaven the string (kaśā); lightning the snapper (prakaśaḥ); and golden is the tip (binduḥ)

**IX.1.22** O surely he, who knows the seven honeys of the honey-string, becomes endowed with sweetness; the intellectual person (i), and the ruler (ii), and the milch-cow (iii), and the draught-ox (iv), and rice (v), and barley (vi), and honey (vii) is the seventh.

मधुमान्भवति मधुमदस्याहार्यं भवति ।
मधुमतो लोकाञ्जयति य एवं वेद ॥२३॥
यद्वीध्रे स्तनयति प्रजापतिरेव तत्प्रजाभ्यः प्रादुर्भवति ।
तस्मात्प्राचीनोपवीतस्तिष्ठे प्रजापतेनु मा बुध्यस्वेति ।
अन्वेनं प्रजा अनु प्रजापतिर्बुध्यते य एवं वेद ॥२४॥

मधुऽमान् । भवति । मधुऽमत् । अस्य । आऽहार्यम् । भवति ।
मधुऽमतः । लोकान् । जयति । यः । एवम् । वेद ॥ २३ ॥
यत् । वीध्रे । स्तनयति । प्रजाऽपतिः । एव । तत् । प्रऽजाभ्यः । प्रादुः । भवति ।
तस्मात् । प्राचीनऽउपवीतः । तिष्ठे । प्रजाऽपते । अनु । मा । बुध्यस्व । इति ।
अनु । एनम् । प्रऽजाः । अनु । प्रजाऽपतिः । बुध्यते । यः । एवम् । वेद ॥ २४ ॥

( २ ) द्वितीयं सूक्तम्

(१-२५) पञ्चविंशत्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । कामो देवता । (१-४, ६, ९-१०, १९, २४-२५) प्रथमादिचतुर्ऋचां षष्ठीनवमीदशम्येकोनविंशीचतुर्विंशीपञ्चविंशीनाञ्च त्रिष्टुप्, (५) पञ्चम्या अतिजगती, (७, १४-१५, १७-१८, २१-२२) सप्तमीचतुर्दशीपञ्चदशीसप्तदश्यष्टादश्येकविंशीद्वाविंशीनां जगती, (८) अष्टम्यास्त्रिपदार्ची पङ्क्तिः, (११, २०, २३) एकादशीविंशीत्रयोविंशीनां भुरिक्त्रिष्टुप्, (१२) द्वादश्या अनुष्टुप्, (१३) त्रयोदश्या द्विपदार्च्यनुष्टुप्, (१६) षोडश्याश्च चतुष्पदा शक्वरीगर्भा पराजगती छन्दांसि ॥

सपत्नहनमृषभं घृतेन कामं शिक्षामि हविषाज्येन ।
नीचैः सपत्नान्मम पादय त्वमभिष्टुतो महता वीर्येण ॥१॥
यन्मे मनसो न प्रियं न चक्षुषो यन्मे बभस्ति नाभिनन्दति ।
तद्दुष्वप्न्यं प्रति मुञ्चामि सपत्ने कामं स्तुत्वोदहं भिदेयम् ॥२॥
दुष्वप्न्यं काम दुरितं च कामाप्रजस्तामस्वगतामवर्तिम् ।
उग्र ईशानः प्रति मुञ्च तस्मिन्यो अस्मभ्यमंहूरणा चिकित्सात् ॥३॥

सपत्नऽहनम् । ऋषभम् । घृतेन । कामम् । शिक्षामि । हविषा । आज्येन ।
नीचैः । सऽपत्नान् । मम । पादय । त्वम् । अभिऽस्तुतः । महता । वीर्येण ॥ १ ॥
यत् । मे । मनसः । न । प्रियम् । न । चक्षुषः । यत् । मे । बभस्ति । न । अभिऽनन्दति ।
तत् । दुःऽस्वप्न्यम् । प्रति । मुञ्चामि । सऽपत्ने । कामम् । स्तुत्वा । उत् । अहम् । भिदेयम् ॥२॥
दुःऽस्वप्न्यम् । काम । दुःऽइतम् । च । काम । अप्रजस्ताम् । अस्वगताम् । अवर्तिम् ।
उग्रः । ईशानः । प्रति । मुञ्च । तस्मिन् । यः । अस्मभ्यम् । अंहूरणा । चिकित्सात् ॥ ३ ॥

**IX.1.23** He becomes rich in sweetness; his possessions becomes full of sweetness; he wins the worlds of sweetness, he who knows this.

**IX.1.24** When it thunders in the sky, that is the Lord of creatures making Himself manifest to the creatures. Therefore, I stand with the sacred thread over my right shoulder (prācīno-pavīta), so that, O Lord of creatures, may you take me into your notice. The creatures and the Lord of creatures become favourably inclined to him, who knows this.

## Kāmaḥ - Passion

**IX.2.1** With purified butter, sacrificial supplies and sacrificial ghee, I wish to befriend the vigours Kāma (desire or passion), the slayer of rivals. Thus praised, may you drop and fell my rivals down with your tremendous vigour.

**IX.2.2** What is not pleasing to my heart, nor to my eyes, what torments me and does not welcome me with joy, that evil dream I lay at my rival. Praising Kāma, may I pierce (my rival) through.

**IX.2.3** Bad dreams, O Kāma, and evil, O Kāma, childlessness, homelessness and disaster, these, O mighty ruler, may you hurl on him who, the sinful, plans to ruin us.

नुदस्व काम प्र णुदस्व कामावर्तिं यन्तु मम ये सपत्नाः ।
तेषां नुत्तानामधमा तमांस्यग्ने वास्तूनि निर्दह त्वम् ॥४॥
सा ते काम दुहिता धेनुरुच्यते यामाहुर्वाचं कवयो विराजम् ।
तया सपत्नान्परि वृङ्धि ये मम पर्येनान्प्राणः पशवो जीवनं वृणक्तु ॥५॥
कामस्येन्द्रस्य वरुणस्य राज्ञो विष्णोर्बलेन सवितुः सवेन ।
अग्नेर्होत्रेण प्र णुदे सपत्नाञ्छम्बीव नावमुदकेषु धीरः ॥६॥
अध्यक्षो वाजी मम काम उग्रः कृणोतु मह्यमसपत्नमेव ।
विश्वे देवा मम नाथं भवन्तु सर्वे देवा हवमा यन्तु म इमम् ॥७॥
इदमाज्यं घृतवज्जुषाणाः कामज्येष्ठा इह मादयध्वम् ।
कृण्वन्तो मह्यमसपत्नमेव ॥८॥
इन्द्राग्नी काम सरथं हि भूत्वा नीचैः सपत्नान्मम पादयाथः ।
तेषां पन्नानामधमा तमांस्यग्ने वास्तून्यनुनिर्दह त्वम् ॥९॥

नुदस्व । काम । प्र । नुदस्व । काम । अवर्तिम् । यन्तु । मम । ये । सऽपत्नाः ।
तेषाम् । नुत्तानाम् । अधमा । तमांसि । अग्ने । वास्तूनि । निः । दह । त्वम् ॥ ४ ॥

सा । ते । काम । दुहिता । धेनुः । उच्यते । याम् । आहुः । वाचम् । कवयः । विऽराजम् ।
तया । सऽपत्नान् । परि । वृङ्धि । ये । मम । परि । एनान् । प्राणः । पशवः । जीवनम् । वृणक्तु ॥

कामस्य । इन्द्रस्य । वरुणस्य । राज्ञः । विष्णोः । बलेन । सवितुः । सवेन ।
अग्नेः । होत्रेण । प्र । नुदे । सऽपत्नान् । शम्बीऽइव । नावम् । उदकेषु । धीरः ॥ ६ ॥

अधिऽअक्षः । वाजी । मम । कामः । उग्रः । कृणोतु । मह्यम् । असपत्नम् । एव ।
विश्वे । देवाः । मम । नाथम् । भवन्तु । सर्वे । देवाः । हवम् । आ । यन्तु । मे । इमम् ॥ ७ ॥

इदम् । आज्यम् । घृतऽवत् । जुषाणाः । कामऽज्येष्ठाः । इह । मादयध्वम् ।
कृण्वन्तः । मह्यम् । असपत्नम् । एव ॥ ८ ॥

इन्द्राग्नी इति । काम । सऽरथम् । हि । भूत्वा । नीचैः । सऽपत्नान् । मम । पादयाथः ।
तेषाम् । पन्नानाम् । अधमा । तमांसि । अग्ने । वास्तूनि । अनुऽनिर्दह । त्वम् ॥ ९ ॥

**IX.2.4** Push, O Kāma; push hard, O Kāma; may those, who are my rivals, come to disaster. Of them, thrown into the vilest darknesses, O fire, may you burn down the dwellings.

**IX.2.5** O Kāma, that milch-cow is said to be your daughter whom the sages have called the illuminating speech. With her, may you expel those, who are my rivals. May the vital breath, cattle and life forsake them.

**IX.2.6** With the strength of Kāma (desire or passion), of the resplendent Lord (Indra), and of the venerable lord (Varuṇa), the sovereign (rajñaḥ), of the omnipresent (Viṣṇu) Lord, and at the impulsion of the impeller Lord (Savitṛ), with the sacrifice to fire-divine (Agnihotra), I drive my rivals afar, like a courageous rower his boat in waters.

**IX.2.7** Formidable and vigorous, Kāma is my warder; may he make me completely free from my rivals. May all the bounties of Nature (viśvedevāḥ) be my protector; may all the enlightened ones come in response to my this call (invocation).

**IX.2.8** Enjoying this sacrificial offering rich in purified butter, may you revel here, O enlightened ones whose Chief is Kāma, making me completely free from rivals.

**IX.2.9** O resplendent one (Indra), and O adorable one (Agni), and O Kāma, mounting one and the same chariot, may you throw my rivals down. Of them, fallen into vilest darknesses, O fire, may you burn down the dwellings.

जहि त्वं काम मम ये सपत्ना अन्धा तमांस्यव पादयैनान् ।
निरिन्द्रिया अरसाः सन्तु सर्वे मा ते जीविषुः कतमच्चनाहः ॥१०॥
अवधीत्कामो मम ये सपत्ना उरुं लोकमकरन्मह्यमेधतुम् ।
मह्यं नमन्तां प्रदिशश्चतस्रो मह्यं षडुर्वीर्घृतमा वहन्तु ॥११॥
तेऽधराञ्चः प्र प्लवन्तां छिन्ना नौरिव बन्धनात् ।
न सायकप्रणुत्तानां पुनरस्ति निवर्तनम् ॥१२॥
अग्निर्यव इन्द्रो यवः सोमो यवः ।
यवयावानो देवा यावयन्त्वेनम् ॥१३॥
असर्ववीरश्चरतु प्रणुत्तो द्वेष्यो मित्राणां परिवर्ग्य१ः स्वानाम् ।
उत पृथिव्यामव स्यन्ति विद्युत उग्रो वो देवः प्र मृणत्सपत्नान् ॥१४॥
च्युता चेयं बृहत्यच्युता च विद्युद्बिभर्ति स्तनयित्नूंश्च सर्वान् ।
उद्यन्नादित्यो द्रविणेन तेजसा नीचैः सपत्नान्नुदतां मे सहस्वान् ॥१५॥

जहि । त्वम् । काम । मम । ये । सऽपत्नाः । अन्धा । तमांसि । अव । पादय । एनान् ।
निःऽइन्द्रियाः । अरसाः । सन्तु । सर्वे । मा । ते । जीविषुः । कतमत् । चन । अहः ॥१०॥
अवधीत् । कामः । मम । ये । सऽपत्नाः । उरुम् । लोकम् । अकरत् । मह्यम् । एधतुम् ।
मह्यम् । नमन्ताम् । प्रऽदिशः । चतस्रः । मह्यम् । षट् । उर्वीः । घृतम् । आ । वहन्तु ॥११॥
ते । अधराञ्चः । प्र । प्लवन्ताम् । छिन्ना । नौःऽइव । बन्धनात् ।
न । सायकऽप्रनुत्तानाम् । पुनः । अस्ति । निऽवर्तनम् ॥ १२ ॥
अग्निः । यवः । इन्द्रः । यवः । सोमः । यवः । यवऽयावानः । देवाः । यवयन्तु । एनम् ॥
असर्वऽवीरः । चरतु । प्रऽनुत्तः । द्वेष्यः । मित्राणाम् । परिऽवर्ग्यः । स्वानाम् ।
उत । पृथिव्याम् । अव । स्यन्ति । विऽद्युतः । उग्रः । वः । देवः । प्र । मृणत् । सऽपत्नान् ॥
च्युता । च । इयम् । बृहती । अच्युता । च । विऽद्युत् । बिभर्ति । स्तनयित्नून् । च । सर्वान् ।
उत्ऽयन् । आदित्यः । द्रविणेन । तेजसा । नीचैः । सऽपत्नान् । नुदताम् । मे । सहस्वान् ॥१५॥

**IX.2.10** O Kāma, may you slay them, who are my rivals. May you throw them into blinding darknesses (andha-tamas). May all of them be devoid of manly strength and sap. May they not live even a single day.

**IX.2.11** Kāma has slain them, who are my rivals. He has made wide space for me to prosper. Let four mid-quarters (catasraḥ-pradiśaḥ) bow in reverence to me. Let the six wide earths (Saḍurvī) bring purified butter for me.

**IX.2.12** (Av. III.6.7 Variation)

**IX.2.13** The adorable Lord is the warder off (yava); the resplendent Lord is the warder off; the blissfull Lord is the warder off. May the enlightened ones, warders of the warders, ward off this (enemy).

**IX.2.14** May (my enemy), when driven away, move about without all his heroes, hated by friends and avoided by his own kinsmen. May the lightnings also come down on the earth; may your that formidable Lord crush my rivals.

**IX.2.15** This falling (yutā), as well as not falling (acyutā) mighty lightning sustains all the thunder-clouds. May the rising Sun, the overpowerer, with his wealth and brilliance push my rivals downward.

यत्ते काम शर्म त्रिवरूथमुद्भु ब्रह्म वर्म विततमनतिव्याध्यं कृतम् ।
तेन सपत्नान्परि वृङ्धि ये मम पर्यैनान्प्राणः पशवो जीवनं वृणक्तु ॥१६॥
येन देवा असुरान्प्राणुदन्त येनेन्द्रो दस्यूनधमं तमो निनाय ।
तेन त्वं काम मम ये सपत्नास्तानस्माल्लोकात्प्र णुदस्व दूरम् ॥१७॥
यथा देवा असुरान्प्राणुदन्त यथेन्द्रो दस्यूनधमं तमो बबाधे ।
तथा त्वं काम मम ये सपत्नास्तानस्माल्लोकात्प्र णुदस्व दूरम् ॥१८॥
कामो जज्ञे प्रथमो नैनं देवा आपुः पितरो न मर्त्याः ।
ततस्त्वमसि ज्यायान्विश्वहा महांस्तस्मै ते काम नम इत्कृणोमि ॥१९॥
यावती द्यावापृथिवी वरिम्णा यावदापः सिष्यदुर्यावदग्निः ।
ततस्त्वमसि ज्यायान्विश्वहा महांस्तस्मै ते काम नम इत्कृणोमि ॥२०॥
यावतीर्दिशः प्रदिशो विषूचीर्यावतीराशा अभिचक्षणा दिवः ।
ततस्त्वमसि ज्यायान्विश्वहा महांस्तस्मै ते काम नम इत्कृणोमि ॥२१॥

यत् । ते । काम । शर्म । त्रिऽवरूथम् । उत्ऽभु । ब्रह्म । वर्म । विऽततम् । अनतिऽव्याध्यम् । कृतम् । तेन । सऽपत्नान् । परि । वृङ्धि । ये । मम । परि । एनान् । प्राणः । पशवः । जीवनम् । वृणक्तु ॥ १६ ॥
येन । देवाः । असुरान् । प्रऽअनुदन्त । येन । इन्द्रः । दस्यून् । अधमम् । तमः । निनाय ।
तेन । त्वम् । काम । मम । ये । सऽपत्नाः । तान् । अस्मात् । लोकात् । प्र । नुदस्व । दूरम् ॥
यथा । देवाः । असुरान् । प्रऽअनुदन्त । यथा । इन्द्रः । दस्यून् । अधमम् । तमः । बबाधे ।
तथा । त्वम् । काम । मम । ये । सऽपत्नाः । तान् । अस्मात् । लोकात् । प्र । नुदस्व । दूरम् ॥
कामः । जज्ञे । प्रथमः । न । एनम् । देवाः । आपुः । पितरः । न । मर्त्याः ।
ततः । त्वम् । असि । ज्यायान् । विश्वहा । महान् । तस्मै । ते । काम । नमः । इत् । कृणोमि ॥
यावती इति । द्यावापृथिवी इति । वरिम्णा । यावत् । आपः । सिस्यदुः । यावत् । अग्निः ।
ततः । त्वम् । असि । ज्यायान् । विश्वहा । महान् । तस्मै । ते । काम । नमः । इत् । कृणोमि ॥२०॥
यावतीः । दिशः । प्रऽदिशः । विषूचीः । यावतीः । आशाः । अभिऽचक्षणाः । दिवः ।
ततः । त्वम् । असि । ज्यायान् । विश्वहा । महान् । तस्मै । ते । काम । नमः । इत् । कृणोमि ॥२१॥

**IX.2.16** O Kāma, your triply-guarded and strong shelter, the well-extended armour of prayer, which has been made unpierceable, with that may the vital breath, cattle and life forsake them.

**IX.2.17** With which the enlightened ones repel the life-enjoyers (asuras), with which the resplendent self sends the robbers to the worst darkness (adhamam tamaḥ), with that strength, O Kāma, may you drive far away from this world those, who are my rivals.

**IX.2.18** Just as the enlightened ones repel the life-enjoyers, just as the resplendent self forces the robbers into the vilest darkness, so, O Kāma, may you drive far away from this world those, who are my rivals.

**IX.2.19** Kāma (passion or desire) was born first of all. Neither the enlightened ones, nor the elders, nor the mortals could equal him. You are superior to them, great in all respects; as such to you, O Kāma, I bow in reverence.

**IX.2.20** As far as the heaven and earth extend in their vastness; as far as the waters extend, and as far as the fire; you are superior to them, great in all the respects; as such to you, O Kāma, I bow in reverence.

**IX.2.21** As far as the quarters and the mid-quarters extend in all the directions, as far as the directions illuminating the sky (extend); you are superior to them, great in all respects; as such to you, O Kāma, I bow in reverence.

यावतीर्भृङ्गा जत्वः कुरूरवो यावतीर्वघा वृक्षसर्प्यो बभूवुः ।
ततस्त्वमसि ज्यायान्विश्वहा महांस्तस्मै ते काम नम इत्कृणोमि ॥२२॥
ज्यायान्निमिषतोऽसि तिष्ठतो ज्यायान्त्समुद्रादसि काम मन्यो ।
ततस्त्वमसि ज्यायान्विश्वहा महांस्तस्मै ते काम नम इत्कृणोमि ॥२३॥
न वै वातश्चन काममाप्नोति नाग्निः सूर्यो नोत चन्द्रमाः ।
ततस्त्वमसि ज्यायान्विश्वहा महांस्तस्मै ते काम नम इत्कृणोमि ॥२४॥
यास्ते शिवास्तन्वः काम भद्रा याभिः सत्यं भवति यद्वृणीषे ।
ताभिष्ट्वमस्माँ अभिसंविशस्वान्यत्र पापीरप वेशया धियः ॥२५॥

यावतीः । भृङ्गाः । जत्वः । कुरूरवः । यावतीः । वघाः । वृक्षऽसर्प्यः । बभूवुः ।
ततः । त्वम् । असि । ज्यायान् । विश्वहा । महान् । तस्मै । ते । काम । नमः । इत् । कृणोमि ॥
ज्यायान् । निऽमिषतः । असि । तिष्ठतः । ज्यायान् । समुद्रात् । असि । काम । मन्यो इति ।
ततः । त्वम् । असि । ज्यायान् । विश्वहा । महान् । तस्मै । ते । काम । नमः । इत् । कृणोमि ॥
न । वै । वातः । चन । कामम् । आप्नोति । न । अग्निः । सूर्यः । न । उत । चन्द्रमाः ।
ततः । त्वम् । असि । ज्यायान् । विश्वहा । महान् । तस्मै । ते । काम । नमः । इत् । कृणोमि ॥
याः । ते । शिवाः । तन्वः । काम । भद्राः । याभिः । सत्यम् । भवति । यत् । वृणीषे ।
ताभिः । त्वम् । अस्मान् । अभिऽसंविशस्व । अन्यत्र । पापीः । अप । वेशय । धियः ॥ २५ ॥

( ३ ) तृतीयं सूक्तम्

(१-३१) एकत्रिंशदृचस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः । शाला देवता । (१-५, ८-१४, १६, १८-२०, २२-२४) प्रथमादिपञ्चर्चामष्टम्यादिसप्तानां षोडश्या अष्टादश्यादितृचस्य द्वाविंश्यादितृचस्य चानुष्टुप्, (६) षष्ठ्याः पथ्यापङ्क्तिः, (७) सप्तम्याः परोष्णिक्, (१५) पञ्चदश्यास्त्र्यवसाना पञ्चपदातिशक्वरी, (१७) सप्तदश्याः प्रस्तारपङ्क्तिः, (२१) एकविंश्या आस्तारपङ्क्तिः, (२५, ३१) पञ्चविंश्येकत्रिंश्यो-स्त्रिपदा प्राजापत्या बृहती, (२६) षड्विंश्याः साम्नी त्रिष्टुप्, (२७-३०) सप्तविंश्यादिचतसृणाञ्च त्रिपदा प्रतिष्ठा गायत्री छन्दांसि । (२५-३१) पञ्चविंश्यादिसप्तैकावसानाः ॥

उपमितां प्रतिमितामथो परिमितामुत ।
शालाया विश्ववाराया नद्धानि वि चृतामसि ॥१॥

उपऽमिताम् । प्रतिऽमिताम् । अथो इति । परिऽमिताम् । उत ।
शालायाः । विश्वऽवारायाः । नद्धानि । वि । चृतामसि ॥ १ ॥

**IX.2.22** As many as there are the humble-bees (bhṛṅgāḥ), the bats (jatavaḥ), the kururus (kurūravaḥ - a type of worms), as many as there are the beetles crawling on the trees (vṛkṣa-sarpyaḥ), you are superior to them, great in all respects; as such to you, O Kāma, I bow in reverence.

**IX.2.23** O Kāma (desire), O ardour, you are superior to the blinking, and to the stationary; you are superior to the ocean; you are superior to them, great in all respects; as such to you, O Kāma, I bow in reverence.

**IX.2.24** Neither wind can equal Kāma, nor fire, nor sun, nor even moon; you are superior to them, great in all respects; as such to you, O Kāma, I bow in reverence.

**IX.2.25** O Kāma, what auspicious and benign forms you have, whereby what you choose that becomes real, with those may you enter us thoroughly; may you make evil thoughts dwell elsewhere.

## Ātmā (self)

**IX.3.1** Of this mansion, that contains all the choicest things, we hereby unite the ceremonial barring ropes, tied to its pillars (upamitām), to its stays (pratimitām) as well as to its beams (parimitam).

यत्ते नद्धं विश्ववारे पाशो ग्रन्थिश्च यः कृतः ।
बृहस्पतिरिवाहं बलं वाचा वि स्रंसयामि तत् ॥२॥
आ ययाम सं बबर्ह ग्रन्थींश्चकार ते दृढान् ।
परूंषि विद्वाञ्छस्तेवेन्द्रेण वि चृतामसि ॥३॥
वंशानां ते नहनानां प्राणाहस्य तृणस्य च ।
पक्षाणां विश्ववारे ते नद्धानि वि चृतामसि ॥४॥
संदंशानां पलदानां परिष्वञ्जल्यस्य च ।
इदं मानस्य पत्न्या नद्धानि वि चृतामसि ॥५॥
यानि तेन्तः शिक्यान्याबेधू रण्याय कम् ।
प्र ते तानि चृतामसि शिवा मानस्य पत्नी न उद्धिता तन्वे भव ॥६॥
हविर्धानमग्निशालं पत्नीनां सदनं सदः ।
सदो देवानामसि देवि शाले ॥७॥

यत् । ते । नद्धम् । विश्वऽवारे । पाशः । ग्रन्थिः । च । यः । कृतः ।
बृहस्पतिःऽइव । अहम् । बलम् । वाचा । वि । स्रंसयामि । तत् ॥ २ ॥
आ । ययाम । सम् । बबर्ह । ग्रन्थीन् । चकार । ते । दृढान् ।
परूंषि । विद्वान् । शस्ताऽइव । इन्द्रेण । वि । चृतामसि ॥ ३ ॥
वंशानाम् । ते । नहनानाम् । प्राणाहस्य । तृणस्य । च ।
पक्षाणाम् । विश्वऽवारे । ते । नद्धानि । वि । चृतामसि ॥ ४ ॥
सम्ऽदंशानाम् । पलदानाम् । परिऽस्वञ्जल्यस्य । च ।
इदम् । मानस्य । पत्न्याः । नद्धानि । वि । चृतामसि ॥ ५ ॥
यानि । ते । अन्तः । शिक्यानि । आऽबेधुः । रण्याय । कम् ।
प्र । ते । तानि । चृतामसि । शिवा । मानस्य । पत्नि । नः । उद्धिता । तन्वे । भव ॥६॥
हविःऽधानम् । अग्निऽशालम् । पत्नीनाम् । सदनम् । सदः ।
सदः । देवानाम् । असि । देवि । शाले ॥ ७ ॥

**IX.3.2** O (mansion), full of choicest things, what ceremonial barring net (pāśaḥ) and knot (granthiḥ) has been tied to you, that I detach, just as the Lord supreme disperses the opposing forces with the sacred speech (vācā).

**IX.3.3** He pulled them close; joined them; tied tight knots on you. (Now) with the help of the resplendent Lord we unfasten them just as a skilful cutter cuts right at the joints.

**IX.3.4** The ceremonial ropes tied to your poles (vamśa), to your bolts (nahana), to your bindings (prāṇaha), and to your thatch-grass (tṛṇa), to your side-pillars (pakśa), O mansion full of choicest things, we hereby detach.

**IX.3.5** Of the Clamps (sandanśa), of the mats (palada), and of the queen of buildings (mānasya patnyā), we hereby detach the ceremonial ties and bands.

**IX.3.6** What hanging baskets (antaḥ śikya) they have tied within you for beauty and enjoyment, on them we put lights. O queen of buildings (mānasya patnyā), erected high, may you be propitious for our bodies.

**IX.3.7** O divine mansion, you are store of sacrificial provisions (havirdhāna), place of fire, chamber for ladies, drawing room and meeting place of the enlightened ones.

अक्षुमोपशं वितंतं सहस्राक्षं विषूवति ।
अवनद्धमभिहितं ब्रह्मणा वि चृतामसि ॥८॥
यस्त्वा शाले प्रतिगृह्णाति येन चासि मिता त्वम् ।
उभौ मानस्य पत्नि तौ जीवतां जरदष्टी ॥९॥
अमुत्रैनमा गच्छताद्दृढा नद्धा परिष्कृता ।
यस्यास्ते विचृतामस्यङ्गमङ्गं परुष्परुः ॥१०॥
यस्त्वा शाले निमिमाय संजभार वनस्पतीन् ।
प्रजायै चक्रे त्वा शाले परमेष्ठी प्रजापतिः ॥११॥
नमस्तस्मै नमो दात्रे शालापतये च कृण्मः ।
नमोग्नये प्रचरते पुरुषाय च ते नमः ॥१२॥
गोभ्यो अश्वेभ्यो नमो यच्छालायां विजायते ।
विजावति प्रजावति वि ते पाशांश्चृतामसि ॥१३॥

अक्षुम् । ओपशम् । विऽततम् । सहस्रऽअक्षम् । विषुऽवति ।
अवऽनद्धम् । अभिऽहितम् । ब्रह्मणा । वि । चृतामसि ॥ ८ ॥
यः । त्वा । शाले । प्रतिऽगृह्णाति । येन । च । असि । मिता । त्वम् ।
उभौ । मानस्य । पत्नि । तौ । जीवताम् । जरदष्टी इति जरत्ऽअष्टी ॥ ९ ॥
अमुत्र । एनम् । आ । गच्छतात् । दृढा । नद्धा । परिष्कृता ।
यस्याः । ते । विऽचृतामसि । अङ्गम्ऽअङ्गम् । परुःऽपरुः ॥ १० ॥
यः । त्वा । शाले । निऽमिमाय । सम्ऽजभार । वनस्पतीन् ।
प्रऽजायै । चक्रे । त्वा । शाले । परमेऽस्थी । प्रजाऽपतिः ॥ ११ ॥
नमः । तस्मै । नमः । दात्रे । शालाऽपतये । च । कृण्मः ।
नमः । अग्नये । प्रऽचरते । पुरुषाय । च । ते । नमः ॥ १२ ॥
गोभ्यः । अश्वेभ्यः । नमः । यत् । शालायाम् । विऽजायते ।
विजाऽवति । प्रजाऽवति । वि । ते । पाशान् । चृतामसि ॥ १३ ॥

**IX.3.8** The thousand-eyed ceremonial net, which has been stretched as a diadem, tied and firmly laid upon the central beam, that we unfasten with prayer.

**IX.3.9** O mansion, he, who takes you over, and he, who has built you, O queen of buildings, may both of them live up to ripe old age.

**IX.3.10** May you come to this person there firmly tied and polished, on whose each and every part, on each and every joint we put light.

**IX.3.11** O mansion, he, who built you, collected and put together the timber. O mansion, for children; the most exalted lord of children, has got you built.

**IX.3.12** Our homage be to him; homage be to the liberal donor; we pay homage to the lord of the mansion; our homage be to the fire and homage be to the man, who looks you after.

**IX.3.13** Our homage be to cows and to horses, whatever is born in this mansion. O mansion rich in births (vijāvati) and full of children (prjāvati), we untie your ceremonial barring nets.

अग्निमन्तश्छादयसि पुरुषान्पशुभिः सह ।
विजावति प्रजावति वि ते पाशांश्चृतामसि ॥१४॥

अन्तरा द्यां च पृथिवीं च यद्व्यचस्तेन शालां प्रति गृह्णामि त इमाम् ।
यदन्तरिक्षं रजसो विमानं तत्कृण्वेहमुदरं शेवधिभ्यः ।
तेन शालां प्रति गृह्णामि तस्मै ॥१५॥

ऊर्जस्वती पयस्वती पृथिव्यां निमिता मिता ।
विश्वान्नं बिभ्रती शाले मा हिंसीः प्रतिगृह्णतः ॥१६॥

तृणैरावृता पलदान्वसाना रात्रीव शाला जगतो निवेशनी ।
मिता पृथिव्यां तिष्ठसि हस्तिनीव पद्वती ॥१७॥

इटस्य ते वि चृताम्यपिनद्धमपोर्णुवन् ।
वरुणेन समुब्जितां मित्रः प्रातर्व्युब्जतु ॥१८॥

ब्रह्मणा शालां निमितां कविभिर्निमितां मिताम् ।
इन्द्राग्नी रक्षतां शालाममृतौ सोम्यं सदः ॥१९॥

अग्निम् । अन्तः । छादयसि । पुरुषान् । पशुऽभिः । सह ।
विजाऽवति । प्रजाऽवति । वि । ते । पाशान् । चृतामसि ॥ १४ ॥

अन्तरा । द्याम् । च । पृथिवीम् । च । यत् । व्यचः । तेन । शालाम् । प्रति । गृह्णामि । ते । इमाम् ।
यत् । अन्तरिक्षम् । रजसः । विऽमानम् । तत् । कृण्वे । अहम् । उदरम् । शेवधिऽभ्यः ।
तेन । शालाम् । प्रति । गृह्णामि । तस्मै ॥ १५ ॥

ऊर्जस्वती । पयस्वती । पृथिव्याम् । निऽमिता । मिता ।
विश्वऽअन्नम् । बिभ्रती । शाले । मा । हिंसीः । प्रतिऽगृह्णतः ॥ १६ ॥

तृणैः । आऽवृता । पलदान् । वसाना । रात्रीऽइव । शाला । जगतः । निऽवेशनी ।
मिता । पृथिव्याम् । तिष्ठसि । हस्तिनीऽइव । पत्ऽवती ॥ १७ ॥

इटस्य । ते । वि । चृतामि । अपिऽनद्धम् । अपऽऊर्णुवन् ।
वरुणेन । सम्ऽउब्जिताम् । मित्रः । प्रातः । वि । उब्जतु ॥ १८ ॥

ब्रह्मणा । शालाम् । निऽमिताम् । कविऽभिः । निऽमिताम् । मिताम् ।
इन्द्राग्नी इति । रक्षताम् । शालाम् । अमृतौ । सोम्यम् । सदः ॥ १९ ॥

**IX.3.14** Within you, you give shelter to fire, to men along with the cattle. O mansion rich in births and full of children, we unite your ceremonial barring nets.

**IX.3.15** What space, if there between the heaven and the earth, therewith I take over this mansion of yours. That midspace, which is the measure of the cloudy region, I make a hollow for the treasures. Therewith I take over the mansion for him (or that).

**IX.3.16** Rich in fuel and vigour (urjasvati), rich in milk (payasvati), you have been built with proper measurements (nimitā mitā) on the earth. Holding all sorts of food, may you never harm those who take you over.

**IX.3.17** Enclosed with grass, clothed in mats, the mansion, like the night, is the place of rest for living ones. Constructed on the earth, (O mansion), you stand like a cow-elephant (hastinī) supported on large feet.

**IX.3.18** Inaugurating you, I unfasten your covering of mats tied on you. Closed firmly by the venerable Lord, may the friendly Lord open you up in the morning.

**IX.3.19** Let this mansion, the seat of bliss, designed by knowledgeable expert, built and constructed by sages, be protected by the immortal resplendent Lord and the adorable Lord.

कुलायेधि कुलायं कोशे कोशः समुब्जितः ।
तत्र मर्तो वि जायते यस्माद्विश्वं प्रजायते ॥२०॥

या द्विपक्षा चतुष्पक्षा षट्पक्षा या निमीयते ।
अष्टापक्षां दशपक्षां शालां मानस्य पत्नीमग्निर्गर्भ इवा शये ॥२१॥

प्रतीचीं त्वा प्रतीचीनः शाले प्रैम्यहिंसतीम् ।
अग्निर्ह्यन्तरापश्चर्तस्य प्रथमा द्वाः ॥२२॥

इमा आपः प्र भराम्ययक्ष्मा यक्ष्मनाशनीः ।
गृहानुप प्र सीदाम्यमृतेन सहाग्निना ॥२३॥

मा नः पाशं प्रति मुचो गुरुर्भारो लघुर्भव ।
वधूमिव त्वा शाले यत्रकामं भरामसि ॥२४॥

प्राच्या दिशः शालाया नमो महिम्ने स्वाहा देवेभ्यः स्वाह्येभ्यः ॥२५॥

कुलाये । अधि । कुलायम् । कोशे । कोशः । समऽउब्जितः ।
तत्र । मर्तः । वि । जायते । यस्मात् । विश्वम् । प्रऽजायते ॥ २० ॥

या । द्विऽपक्षा । चतुःऽपक्षा । षट्ऽपक्षा । या । निऽमीयते ।
अष्टाऽपक्षाम् । दशऽपक्षाम् । शालाम् । मानस्य । पत्नीम् । अग्निः । गर्भःऽइव । आ । शये ॥

प्रतीचीम् । त्वा । प्रतीचीनः । शाले । प्र । एमि । अहिंसतीम् ।
अग्निः । हि । अन्तः । आपः । च । ऋतस्य । प्रथमा । द्वाः ॥ २२ ॥

इमाः । आपः । प्र । भरामि । अयक्ष्माः । यक्ष्मऽनाशनीः ।
गृहान् । उप । प्र । सीदामि । अमृतेन । सह । अग्निना ॥ २३ ॥

मा । नः । पाशम् । प्रति । मुचः । गुरुः । भारः । लघुः । भव ।
वधूम्ऽइव । त्वा । शाले । यत्रऽकामम् । भरामसि ॥ २४ ॥

प्राच्याः । दिशः । शालायाः । नमः । महिम्ने । स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥२५॥

**IX.3.20** A nest upon a nest (kulāyedhi kulāyam) is place; a treasure upon treasure (kośe kośaḥ) is laid. There the mortal is procreated, from whom all others spring out.

**IX.3.21** In the mansion, constructed with two wings, four wings, six wings, eight wings or ten wings, the queen of buildings. I take shelter, like fire in a secluded place.

**IX.3.22** O mansion, turned towards me, I, turned towards you, approach you, unharming. Within you is the fire and the waters, the main door of the sacrifice.

**IX.3.23** I bring in these waters free form wasting disease and destroyers of wasting disease. Joyfully, I enter the dwellings along with the immortal fire. (Also Av. III.12.9)

**IX.3.24** May you not fasten any noose on us. A heavy burden, may you become light. O mansion, we full you to your desire, just like (we decorate) a bride.

**IX.3.25** From the eastern sides, let our homage be to the grandeur of the mansion. Svāhā to the enlightened ones, to whom Svāhā is due.

दक्षिणाया दिशः शालाया नमो महिम्ने स्वाहा देवेभ्यः स्वाह्येभ्यः ॥२६॥
प्रतीच्या दिशः शालाया नमो महिम्ने स्वाहा देवेभ्यः स्वाह्येभ्यः ॥२७॥
उदीच्या दिशः शालाया नमो महिम्ने स्वाहा देवेभ्यः स्वाह्येभ्यः ॥२८॥
ध्रुवाया दिशः शालाया नमो महिम्ने स्वाहा देवेभ्यः स्वाह्येभ्यः ॥२९॥
ऊर्ध्वाया दिशः शालाया नमो महिम्ने स्वाहा देवेभ्यः स्वाह्येभ्यः ॥३०॥
दिशोदिशः शालाया नमो महिम्ने स्वाहा देवेभ्यः स्वाह्येभ्यः ॥३१॥

दक्षिणायाः । दिशः । शालायाः । नमः । महिम्ने । स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ २६ ॥

प्रतीच्याः । दिशः । शालायाः । नमः । महिम्ने । स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ २७ ॥

उदीच्याः । दिशः । शालायाः । नमः । महिम्ने । स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ २८ ॥

ध्रुवायाः । दिशः । शालायाः । नमः । महिम्ने । स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ २९ ॥

ऊर्ध्वायाः । दिशः । शालायाः । नमः । महिम्ने । स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ ३० ॥

दिशःऽदिशः । शालायाः । नमः । महिम्ने । स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ ३१ ॥

( ४ ) चतुर्थं सूक्तम्

(१-२४) चतुर्विंशत्यृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । ऋषभो देवता । (१-५, ७, ९, २२ ) प्रथमादिपञ्चर्चां सप्तमीनवमीद्वाविंशीनाञ्च त्रिष्टुप्, (६, १०, २४) षष्ठीदशमीचतुर्विंशीनां जगती, (८) अष्टम्या भुरिक्त्रिष्टुप्, (११-१७, १९-२०, २३) एकादश्यादिसप्तानामेकोनविंशीविंशीत्रयोविंशीनाञ्चानुष्टुप्, (१८) अष्टादश्या उपरिष्टाद्बृहती, (२१) एकविंश्या आस्तारपङ्क्तिश्छन्दांसि ॥

साहस्रस्त्वेष ऋषभः पयस्वान्विश्वा रूपाणि वक्षणासु बिभ्रत् ।
भद्रं दात्रे यजमानाय शिक्षन्बार्हस्पत्य उस्रियस्तन्तुमातान् ॥१॥

साहस्रः । त्वेषः । ऋषभः । पयस्वान् । विश्वा । रूपाणि । वक्षणासु । बिभ्रत् ।
भद्रम् । दात्रे । यजमानाय । शिक्षन् । बार्हस्पत्यः । उस्रियः । तन्तुम् । आ । अतान् ॥१॥

**IX.3.26** From the southern sides, let our homage be to the grandeur of the mansion. Svāhā to the enlightened ones, to whom Svāhā is due.

**IX.3.27** From the western side, let our homage be to the grandeur of the mansion. Svāhā to the enlightened ones, to whom Svāhā is due.

**IX.3.28** From the northern side, let our homage be to the grandeur of the mansion. Svāhā to the enlightened ones to whom Svāhā is due.

**IX.3.29** From downward side, let our homage be to the grandeur of the mansion. Svāhā to the enlightened ones to whom Svāhā is due.

**IX.3.30** From upward side, let our homage be to the grandeur of the mansion. Svāhā to the enlightened ones to whom Svāhā is due.

**IX.3.31** From each and every side, let our homage be to the grandeur of the mansion. Svāhā to the enlightened ones to whom Svāhā is due.

## Ṛṣabhaḥ - Bull

**IX.4.1** May the bull, one among a thousand, full of brilliance, rich in semen, wearing all forms in the river-beds, trying to accomplish good for liberal donor - the sacrificer, reddish, dedicated to the Lord supreme, propagate the line of his descendants.

अपां यो अग्रे प्रतिमा बभूव प्रभूः सर्वस्मै पृथिवीव देवी ।
पिता वत्सानां पतिरघ्न्यानां साहस्रे पोषे अपि नः कृणोतु ॥२॥
पुमानन्तर्वान्त्स्थविरः पयस्वान्वसोः कबन्धमृषभो बिभर्ति ।
तमिन्द्राय पथिभिर्देवयानैर्हुतमग्निर्वहतु जातवेदाः ॥३॥
पिता वत्सानां पतिरघ्न्यानामथो पिता महतां गर्गराणाम् ।
वत्सो जरायु प्रतिधुक्पीयूष आमिक्षा घृतं तद्वस्य रेतः ॥४॥
देवानां भाग उपनाह एषो३ऽपां रस ओषधीनां घृतस्य ।
सोमस्य भक्षमवृणीत शक्रो बृहन्नद्रिरभवद्यच्छरीरम् ॥५॥
सोमेन पूर्णं कलशं बिभर्षि त्वष्टा रूपाणां जनिता पशूनाम् ।
शिवास्ते सन्तु प्रजन्व इह या इमा न्य१स्मभ्यं स्वधिते यच्छ या अमूः ॥६॥
आज्यं बिभर्ति घृतमस्य रेतः साहस्रः पोषस्तमु यज्ञमाहुः ।
इन्द्रस्य रूपमृषभो वसानः सो अस्मान्देवाः शिव ऐतु दत्तः ॥७॥

अपाम् । यः । अग्रे । प्रतिऽमा । बभूव । प्रऽभूः । सर्वस्मै । पृथिवीऽइव । देवी ।
पिता । वत्सानाम् । पतिः । अघ्न्यानाम् । साहस्रे । पोषे । अपि । नः । कृणोतु ॥ २ ॥
पुमान् । अन्तःऽवान् । स्थविरः । पयस्वान् । वसोः । कबन्धम् । ऋषभः । बिभर्ति ।
तम् । इन्द्राय । पथिऽभिः । देवऽयानैः । हुतम् । अग्निः । वहतु । जातऽवेदाः ॥ ३ ॥
पिता । वत्सानाम् । पतिः । अघ्न्यानाम् । अथो इति । पिता । महताम् । गर्गराणाम् ।
वत्सः । जरायु । प्रतिऽधुक् । पीयूषः । आमिक्षा । घृतम् । तत् । ऊं इति । अस्य । रेतः ।४।
देवानाम् । भागः । उपऽनाहः । एषः । अपाम् । रसः । ओषधीनाम् । घृतस्य ।
सोमस्य । भक्षम् । अवृणीत । शक्रः । बृहन् । अद्रिः । अभवत् । यत् । शरीरम् ॥ ५ ॥
सोमेन । पूर्णम् । कलशम् । बिभर्षि । त्वष्टा । रूपाणाम् । जनिता । पशूनाम् । शिवाः । ते । सन्तु ।
प्रऽजन्वः । इह । याः । इमाः । नि । अस्मभ्यम् । स्वऽधिते । यच्छ । याः । अमूः ॥ ६ ॥
आज्यम् । बिभर्ति । घृतम् । अस्य । रेतः । साहस्रः । पोषः । तम् । ऊं इति । यज्ञम् । आहुः ।
इन्द्रस्य । रूपम् । ऋषभः । वसानः । सः । अस्मान् । देवाः शिवः । आ । एतु । दत्तः ॥७॥

**IX.4.2** May he, who in the beginning, used to be a resemblance of waters, multiplier for all like the earth divine, father of calves, husband of the inviolable cows, place us also in a thousand-fold prosperity.

**IX.4.3** The bull male, impregnator, huge and rich in semen, wears the form of riches and wealth. May the adorable Lord, cognizant of all, lead him, dedicated to the resplendent Lord, along the paths frequented by the enlightened ones.

**IX.4.4** The bull is the father of calves, lord (husband) of the inviolable cows, and also father of great churnings (of curds); young calf, the after-birth, fresh milk (pratidhuk), beestings, curdled milk and ghee are, indeed his seed. (gargarāṇām = gulfs (Whitney), pīyūṣa = beestings; āmikṣā = curd)

**IX.4.5** He is the proximate part of the bounties of Nature; (he is) the essence of the herbs and of ghee. (He is) the draught of semen, which the mighty one chooses and his body becomes just a huge mountain.

**IX.4.6** You bear the vessel full of semen; (you are) moulder of forms and procreator of cattle. May these offsprings of yours be propitious to us here. O weapon, may you procure for us those cattle that are yonder.

**IX.4.7** He provides sacrificial butter. Ghee is his seed. He is a thousand-fold nourishment. They call him the sacrifice. May he, the showerer, wearing the form of the resplendent Lord, being given, come to us, O bounties of Nature, as a blessing.

इन्द्रस्यौजो वरुणस्य बाहू अश्विनोरंसौ मरुतामियं ककुत् ।
बृहस्पतिं संभृतमेतमाहुर्ये धीरासः कवयो ये मनीषिणः ॥८॥
दैवीर्विशः पयस्वाना तनोषि त्वामिन्द्रं त्वां सरस्वन्तमाहुः ।
सहस्रं स एकमुखा ददाति यो ब्राह्मण ऋषभमाजुहोति ॥९॥
बृहस्पतिः सविता ते वयो दधौ त्वष्टुर्वायोः पर्यात्मा त आभृतः ।
अन्तरिक्षे मनसा त्वा जुहोमि बर्हिष्टे द्यावापृथिवी उभे स्ताम् ॥१०॥
य इन्द्र इव देवेषु गोष्वेति विवावदत् ।
तस्य ऋषभस्याङ्गानि ब्रह्मा सं स्तौतु भद्रया ॥११॥
पार्श्वे आस्तामनुमत्या भगस्यास्तामनूवृजौ ।
अष्ठीवन्तावब्रवीन्मित्रो ममैतौ केवलाविति ॥१२॥
भसदासीदादित्यानां श्रोणी आस्तां बृहस्पतेः ।
पुच्छं वातस्य देवस्य तेन धूनोत्योषधीः ॥१३॥

इन्द्रस्य । ओजः । वरुणस्य । बाहू इति । अश्विनोः । अंसौ । मरुताम् । इयम् । ककुत् ।
बृहस्पतिम् । सम्ऽभृतम् । एतम् । आहुः । ये । धीरासः । कवयः । ये । मनीषिणः ॥८॥

दैवीः । विशः । पयस्वान् । आ । तनोषि । त्वाम् । इन्द्रम् । त्वाम् । सरस्वन्तम् । आहुः ।
सहस्रम् । सः । एकऽमुखाः । ददाति । यः । ब्राह्मणे । ऋषभम् । आऽजुहोति ॥ ९ ॥

बृहस्पतिः । सविता । ते । वयः । दधौ । त्वष्टुः । वायोः । परि । आत्मा । ते । आऽभृतः ।
अन्तरिक्षे । मनसा । त्वा । जुहोमि । बर्हिः । ते । द्यावापृथिवी इति । उभे इति । स्ताम् ॥

यः । इन्द्रःऽइव । देवेषु ! गोषु । एति । विऽवावदत् ।
तस्य । ऋषभस्य । अङ्गानि । ब्रह्मा । सम् । स्तौतु । भद्रया ॥ ११ ॥

पार्श्वे इति । आस्ताम् । अनुऽमत्याः । भगस्य । आस्ताम् । अनुऽवृजौ ।
अष्ठीवन्तौ । अब्रवीत् । मित्रः । मम । एतौ । केवलौ । इति ॥ १२ ॥

भसत् । आसीत् । आदित्यानाम् । श्रोणी इति । आस्ताम् । बृहस्पतेः ।
पुच्छम् । वातस्य । देवस्य । तेन । धूनोति । ओषधीः ॥ १३ ॥

**IX.4.8** Vigour of the resplendent Lord, two arms of the venerable Lord, two shoulders of the twins-divine (aśvinau), and the hump of the cloud-bearing winds is he. They, the resolute sages and wise thinkers. call this presented one the Lord supreme.

**IX.4.9** Rich in semen, you procreate the godly progeny. They call you the resplendent one, you the flowing (sarasvati). He, who presents a bull to an intellectual person, as if, bestows a thousand (cow) of one appearance.

**IX.4.10** The Lord supreme, the impeller, bestows long life on you. From the cosmic moulder and the wind (vāyu) your spirit has been procured. In the midspace, with my mind I present you as an offering; may both, the heaven and the earth, be your sacred grass (barhiṣ).

**IX.4.11** He, who moves about roaring among the cows like the resplendent Lord among the bounties of Nature - the various limbs of that bull, let the learned priest (brahmā) praise eloquently.

**IX.4.12** The two sides are assigned to Anumati; the two flanks to the Lord of fortune (Bhaga); the two knees, the friendly Lord (Mitra) says, are mine and mine alone (mama etau, kevalaviti).

**IX.4.13** The rump is assigned to the suns (ādityas); the two hips to the Lord supreme; the tail belongs to the wind divine, with that he shakes the plants.

गुदा आसन्त्सिनीवाल्याः सूर्यायास्त्वचमब्रुवन् ।
उत्थातुरब्रुवन्पद ऋषभं यदकल्पयन् ॥१४॥
क्रोड आसीज्जामिशंसस्य सोमस्य कलशो धृतः ।
देवाः संगत्य यत्सर्व ऋषभं व्यकल्पयन् ॥१५॥
ते कुष्ठिकाः सरमायै कूर्मेभ्यो अदधुः शफान् ।
ऊबध्यमस्य कीटेभ्यः श्ववर्तेभ्यो अधारयन् ॥१६॥
शृङ्गाभ्यां रक्ष ऋषत्यवर्तिं हन्ति चक्षुषा ।
शृणोति भद्रं कर्णाभ्यां गवां यः पतिरघ्न्यः ॥१७॥
शतयाजं स यजते नैनं दुन्वन्त्यग्नयः ।
जिन्वन्ति विश्वे तं देवा यो ब्राह्मण ऋषभमाजुहोति ॥१८॥
ब्राह्मणेभ्य ऋषभं दत्त्वा वरीयः कृणुते मनः ।
पुष्टिं सो अघ्न्यानां स्वे गोष्ठेव पश्यते ॥१९॥

गुदाः । आसन् । सिनीवाल्याः । सूर्यायाः । त्वचम् । अब्रुवन् ।
उत्थातुः । अब्रुवन् । पदः । ऋषभम् । यत् । अकल्पयन् ॥ १४ ॥
क्रोडः । आसीत् । जामिऽशंसस्य । सोमस्य । कलशः । धृतः ।
देवाः । सम्ऽगत्य । यत् । सर्वे । ऋषभम् । विऽअकल्पयन् ॥ १५ ॥
ते । कुष्ठिकाः । सरमायै । कूर्मेभ्यः । अदधुः । शफान् ।
ऊबध्यम् । अस्य । कीटेभ्यः । श्वऽवर्तेभ्यः । अधारयन् ॥ १६ ॥
शृङ्गाभ्याम् । रक्षः । ऋषति । अवर्तिम् । हन्ति । चक्षुषा ।
शृणोति । भद्रम् । कर्णाभ्याम् । गवाम् । यः । पतिः । अघ्न्यः ॥ १७ ॥
शतऽयाजम् । सः । यजते । न । एनम् । दुन्वन्ति । अग्नयः ।
जिन्वन्ति । विश्वे । तम् । देवाः । यः । ब्राह्मणे । ऋषभम् । आऽजुहोति ॥ १८ ॥
ब्राह्मणेभ्यः । ऋषभम् । दत्त्वा । वरीयः । कृणुते । मनः ।
पुष्टिम् । सः । अघ्न्यानाम् । स्वे । गोऽस्थे । अव । पश्यते ॥ १९ ॥

**IX.4.14** The bowels (gudā) are assigned to Sīnīvāli; to Sūrya (daughter or brilliance of the Sun) the skin, they say. They say, the feet are for the upraiser (utthātuḥ); so they divide the bull.

**IX.4.15** The breast is assigned to Jāmiśansa, and the vessel was held as of the blissful Lord (Soma), so all the bounties of Nature assemble and divide the bull.

**IX.4.16** The scaps (kuṣṭhikāḥ) of feet are assigned to Saramā (the bitch-divine); hooves to the turtles (kūrma); the undigested food in the stomach (ūbadhyamasya) they allot to the worms living on carcasses (which creep and crawl).

**IX.4.17** With horns he pierces through the harmful germs; with eyes he strikes the famine dead; with ears he listens to auspicious tidings - he, the inviolable lord of the cows.

**IX.4.18** Whoever gives a bull to an intellectual person, he as if, performs a sacrifice, worth a hundred sacrifices; the fires do not afflict him; and all the bounties of Nature favour him.

**IX.4.19** By presenting a bull to the intellectual persons, one makes his mind more excellent. He witnesses the growth and increase of inviolable cows in his cow-stall.

गावः सन्तु प्रजाः सन्त्वथो अस्तु तनूबलम् ।
तत्सर्वमनु मन्यन्तां देवा ऋषभदायिने ॥२०॥
अयं पिपान इन्द्र इद्रयिं दधातु चेतनीम् ।
अयं धेनुं सुदुघां नित्यवत्सां वशं दुहां विपश्चितं परो दिवः ॥२१॥
पिशङ्गरूपो नभसो वयोधा ऐन्द्रः शुष्मो विश्वरूपो न आगन् ।
आयुरस्मभ्यं दधत्प्रजां च रायश्च पोषैरभि नः सचताम् ॥२२॥
उपेहोपपर्चनास्मिन्गोष्ठ उप पृञ्च नः ।
उप ऋषभस्य यद्रेत उपेन्द्र तव वीर्यम् ॥२३॥
एतं वो युवानं प्रति दध्मो अत्र तेन क्रीडन्तीश्चरत वशाँ अनु ।
मा नो हासिष्ट जनुषा सुभागा रायश्च पोषैरभि नः सचध्वम् ॥२४॥

गावः । सन्तु । प्रऽजाः । सन्तु । अथो इति । अस्तु । तनूऽबलम् ।
तत् । सर्वम् । अनु । मन्यन्ताम् । देवाः । ऋषभऽदायिने ॥ २० ॥
अयम् । पिपानः । इन्द्रः । इत् । रयिम् । दधातु । चेतनीम् । अयम् ।
धेनुम् । सुऽदुघाम् । नित्यऽवत्साम् । वशम् । दुहाम् । विपःऽचितम् । परः । दिवः ॥२१॥
पिशङ्गऽरूपः । नभसः । वयःऽधाः । ऐन्द्रः । शुष्मः । विश्वऽरूपः । नः । आ । अगन् ।
आयुः । अस्मभ्यम् । दधत् । प्रऽजाम् । च । रायः । च । पोषैः । अभि । नः । सचताम् ॥
उप । इह । उपऽपर्चन । अस्मिन् । गोऽस्थे । उप । पृञ्च । नः ।
उप । ऋषभस्य । यत् । रेतः । उप । इन्द्र । तव । वीर्यम् ॥ २३ ॥
एतम् । वः । युवानम् । प्रति । दध्मः । अत्र । तेन । क्रीडन्तीः । चरत । वशान् । अनु ।
मा । नः । हासिष्ट । जनुषा । सुऽभागाः । रायः । च । पोषैः । अभि । नः । सचध्वम् ॥

**IX.4.20** May there be cows; may there be children; also may there be physical strength and vigour; may the bounties of nature grant all that to the presenter of a bull.

**IX.4.21** May this resplendent, strong and stout bull fetch conscientious riches to us. May this one bring a cow, rich in milk, regular with a calf, well-behaved at milking and intelligent from beyond the sky.

**IX.4.22** Brown-coloured, bestower of long-life, the valour of the resplendent Lord, wearing all forms, he has come to us from the heaven. Granting us long span of life, progeny and riches, may he favour us with all-round nourishment.

**IX.4.23** May you here, in this our cow-stall, impregnate (the cows); remain with us. What is the seed of the bull, O resplendent Lord, that is, indeed, your might.

**IX.4.24** We set this young (bull) towards you; here playing with him, roam about as you wish. O fortunate ones (cows), may you not abandon us with progeny; may you favour us with riches and nourishments.

### ( ५ ) पञ्चमं सूक्तम्

(१-३८) अष्टात्रिंशदृचस्यास्य सूक्तस्य भृगुर्ऋषिः। अजपञ्चौदनौ देवते। (१-२, ५-९, ११-१३, १५, १०, २६) प्रथमाद्वितीययोर्ऋचोः पञ्चम्यादिपञ्चानामेकादश्यादितृचस्य पञ्चदश्येकोनविंशीषड्विंशीनाञ्च त्रिष्टुप्, (३) तृतीयायाश्चतुष्पदा पुरोतिशक्वरी जगती, (४, १०) चतुर्थीदशम्योर्जगती, (१४, १७, २७-२९) चतुर्दशीसप्तदश्योः सप्तविंश्यादितृचस्य चानुष्टुप्, (१६) षोडश्यास्त्रिपदानुष्टुप्, (१८, ३७) अष्टादशीसप्तत्रिंशयोस्त्रिपदा विराड्गायत्री, (२०-२२, २५) विंश्यादितृचस्य पञ्चविंश्याश्च पञ्चपदानुष्टुबुष्णिग्गर्भोपरिष्टाद्बार्हता भुरिक्त्रिष्टुप्, (२३) त्रयोविंश्याः पुर उष्णिक्, (२४) चतुर्विंश्याः पञ्चपदानुष्टुबुष्णिग्गर्भोपरिष्टाद्बार्हता विराड्जगती, (३०) त्रिंश्याः ककुम्मत्यनुष्टुप्, (३१) एकत्रिंश्याः सप्तपदाष्टिः, (३२-३५) द्वात्रिंश्यादिचतसृणां दशपदा प्रकृतिः, (३६) षड्त्रिंश्या दशपदाकृतिः, (३८) अष्टात्रिंश्याश्चैका-वसाना द्विपदा साम्नी त्रिष्टुप् छन्दांसि ॥

आ नयैतमा रभस्व सुकृतां लोकमपि गच्छतु प्रजानन्।
तीर्त्वा तमांसि बहुधा महान्त्यजो नाकमा क्रमतां तृतीयम् ॥१॥
इन्द्राय भागं परि त्वा नयाम्यस्मिन्यज्ञे यजमानाय सूरिम्।
ये नो द्विषन्त्यनु तान्रभस्वानागसो यजमानस्य वीराः ॥२॥
प्र पदोऽव नेनिग्धि दुश्चरितं यच्चचार शुद्धैः शफैरा क्रमतां प्रजानन्।
तीर्त्वा तमांसि बहुधा विपश्यन्नजो नाकमा क्रमतां तृतीयम् ॥३॥
अनु च्छ्य श्यामेन त्वचमेतां विशस्तर्यथापर्व१सिना माभि मंस्थाः।
माभि द्रुहः परुशः कल्पयैनं तृतीये नाके अधि वि श्रयैनम् ॥४॥

आ। नय। एतम्। आ। रभस्व। सुऽकृताम्। लोकम्। अपि। गच्छतु। प्रऽजानन्।
तीर्त्वा। तमांसि। बहुऽधा। महान्ति। अजः। नाकम्। आ। क्रमताम्। तृतीयम् ॥१॥

इन्द्राय। भागम्। परि। त्वा। नयामि। अस्मिन्। यज्ञे। यजमानाय। सूरिम्।
ये। नः। द्विषन्ति। अनु। तान्। रभस्व। अनागसः। यजमानस्य। वीराः ॥ २ ॥

प्र। पदः। अव। नेनिग्धि। दुःऽचरितम्। यत्। चचार। शुद्धैः। शफैः। आ। क्रम-ताम्। प्रऽजानन्। तीर्त्वा। तमांसि। बहुऽधा। विऽपश्यन्। अजः। नाकम्। आ। क्रमताम्। तृतीयम् ॥३॥

अनु। छ्य। श्यामेन। त्वचम्। एताम्। विऽशस्तः। यथाऽपरु। असिना। मा। अभि। मंस्थाः।
मा। अभि। द्रुहः। परुऽशः। कल्पय। एनम्। तृतीये। नाके। अधि। वि। श्रय। एनम् ॥४॥

### Ajaḥ Pañcaudanaḥ

**IX.5.1** Bring him here. Commence (the sacrifice). Knowing well, may he go to the world of the virtuous. Getting across the great darkness by various ways, may this unborn stride up to the third sorrowless world.

**IX.5.2** At this sacrifice, I conduct you, the wise, as a portion meant for the resplendent Lord, for whom the sacrifice is being performed. May you Seir from behind those who hate us. May the brave sons of the sacrificer be free from all blemish.

**IX.5.3** Whatever misdeeds he might have gone about committing, that may you wash down from his feet. Knowing well, may he stride up with clean hooves. Getting across the darknesses by various ways, seeing all around, may this unborn stride up to the third sorrowless world (tṛtiya nāka).

**IX.5.4** O cutter, cut this skin with the grey knife along the joints. Be not arrogant; be not hateful; prepare him joint by joint; set him up in the third sorrowless world.

ऋचा कुम्भीमध्यग्नौ श्रयाम्या सिञ्चोदकमव धेह्येनम् ।
पर्याधत्ताग्निना शमितारः शृतो गच्छतु सुकृतां यत्र लोकः ॥५॥
उत्क्रामातः परि चेदतप्तस्तप्ताच्चरोरधि नाकं तृतीयम् ।
अग्नेरग्निरधि सं बभूविथ ज्योतिष्मन्तमभि लोकं जयैतम् ॥६॥
अजो अग्निरजमु ज्योतिराहुरजं जीवता ब्रह्मणे देयमाहुः ।
अजस्तमांस्यप हन्ति दूरमस्मिँल्लोके श्रद्दधानेन दत्तः ॥७॥
पञ्चौदनः पञ्चधा वि क्रमतामाक्रंस्यमानस्त्रीणि ज्योतींषि ।
ईजानानां सुकृतां प्रेहि मध्यं तृतीये नाके अधि वि श्रयस्व ॥८॥
अजा रोह सुकृतां यत्र लोकः शरभो न चत्तोति दुर्गाण्येषः ।
पञ्चौदनो ब्रह्मणे दीयमानः स दातारं तृप्त्या तर्पयाति ॥९॥
अजस्त्रिनाके त्रिदिवे त्रिपृष्ठे नाकस्य पृष्ठे ददिवांसं दधाति ।
पञ्चौदनो ब्रह्मणे दीयमानो विश्वरूपा धेनुः कामदुघास्येका ॥१०॥

ऋचा । कुम्भीम् । अधि । अग्नौ । श्रयामि । आ । सिञ्च । उदकम् । अव । धेहि । एनम् ।
परिऽआधत्त । अग्निना । शमितारः । शृतः । गच्छतु । सुऽकृताम् । यत्र । लोकः ॥ ५ ॥
उत् । क्राम । अतः । परि । च । इत् । अतप्तः । तप्तात् । चरोः । अधि । नाकम् । तृतीयम् ।
अग्नेः । अग्निः । अधि । सम् । बभूविथ । ज्योतिष्मन्तम् । अभि । लोकम् । जय । एतम् ॥ ६ ॥
अजः । अग्निः । अजम् । ऊं इति । ज्योतिः । आहुः । अजम् । जीवता । ब्रह्मणे । देयम् । आहुः ।
अजः । तमांसि । अप । हन्ति । दूरम् । अस्मिन् । लोके । श्रत्ऽदधानेन । दत्तः ॥ ७ ॥
पञ्चऽओदनः । पञ्चऽधा । वि । क्रमताम् । आऽक्रंस्यमानः । त्रीणि । ज्योतींषि ।
ईजानानाम् । सुऽकृताम् । प्र । इहि । मध्यम् । तृतीये । नाके । अधि । वि । श्रयस्व ॥ ८ ॥
अज । आ । रोह । सुऽकृताम् । यत्र । लोकः । शरभः । न । चत्तः । अति । दुःऽगानि । एषः ।
पञ्चऽओदनः । ब्रह्मणे । दीयमानः । सः । दातारम् । तृप्त्या । तर्पयाति ॥ ९ ॥
अजः । त्रिऽनाके । त्रिऽदिवे । त्रिऽपृष्ठे । नाकस्य । पृष्ठे । ददिऽवांसम् । दधाति ।
पञ्चऽओदनः । ब्रह्मणे । दीयमानः । विश्वऽरूपा । धेनुः । कामऽदुघा । असि । एका ॥१०॥

**IX.5.5** With a Ṛk verse I place the cooking vessel on fire; pour in the water; plunge this down. Surround this with fire, O quellers; cooked may he reach the region where the virtuous live.

**IX.5.6** Completely unannoyed, may you stride up from here, from the heated cauldron to the third sorrowless world. From fire you have sprung forth as fire; may you win wholly this world of brilliance.

**IX.5.7** The unborn is fire; also light they call the unborn; they say that a living person must present the unborn to the Lord supreme. The unborn, offered in this world by a faithful, dispels the darkness far away.

**IX.5.8** May the pañchaudana aja (the unborn), made of five-fold pulp of meshed grain, stride out five-fold, moving towards the three lights. Reach among the virtuous ones, who have performed sacrifices; rest in the third sorrowless world.

**IX.5.9** O unborn, may you ascend to the world where the virtuous ones dwell. Like a scared śarabha, go across the difficulties. Pañcaudana (the unborn, made of five-fold pulp of meshed grain), presented to an intellectual person, delights the donor with complete satisfaction.

**IX.5.10** The pañcaudana aja (the unborn, made of five-fold pulp of meshed grain) places the donor in the world free from three sorrows, on the third firmament, on the three tiered top of the sorrowless world; being presented to an intellectual person, O unborn, you are a milch-cow, wearing all forms and yielding as milk all that we desire.

एतद्वो ज्योतिः पितरस्तृतीयं पञ्चौदनं ब्रह्मणेजं ददाति ।
अजस्तमांस्यप हन्ति दूरमस्मिंल्लोके श्रद्दधानेन दत्तः ॥११॥
ईजानानां सुकृतां लोकमीप्सन्पञ्चौदनं ब्रह्मणेजं ददाति ।
स व्याप्तिमभि लोकं जयैतं शिवो३ स्मभ्यं प्रतिगृहीतो अस्तु ॥१२॥
अजो ह्य१ग्नेरजनिष्ट शोकाद्विप्रो विप्रस्य सहसो विपश्चित् ।
इष्टं पूर्तमभिपूर्तं वषट्कृतं तद्देवा ऋतुशः कल्पयन्तु ॥१३॥
अमोतं वासो दद्याद्धिरण्यमपि दक्षिणाम् ।
तथा लोकान्त्समाप्नोति ये दिव्या ये च पार्थिवाः ॥१४॥
एतास्त्वाजोप यन्तु धाराः सोम्या देवीर्घृतपृष्ठा मधुश्चुतः ।
स्तभान पृथिवीमुत द्यां नाकस्य पृष्ठेधि सप्तरश्मौ ॥१५॥
अजो३ स्यज स्वर्गो३ सि त्वया लोकमङ्गिरसः प्राजानन् ।
तं लोकं पुण्यं प्र ज्ञेषम् ॥१६॥

एतत् । वः । ज्योतिः । पितरः । तृतीयम् । पञ्चऽओदनम् । ब्रह्मणे । अजम् । ददाति ।
अजः । तमांसि । अप । हन्ति । दूरम् । अस्मिन् । लोके । श्रत्ऽदधानेन । दत्तः ॥ ११ ॥
ईजानानाम् । सुऽकृताम् । लोकम् । ईप्सन् । पञ्चऽओदनम् । ब्रह्मणे । अजम् । ददाति ।
सः । विऽआप्तिम् । अभि । लोकम् । जय । एतम् । शिवः । अस्मभ्यम् । प्रतिऽगृहीतः । अस्तु ॥ १२ ॥
अजः । हि । अग्नेः । अजनिष्ट । शोकात् । विप्रः । विप्रस्य । सहसः । विपःऽचित् ।
इष्टम् । पूर्तम् । अभिऽपूर्तम् । वषट्ऽकृतम् । तत् । देवाः । ऋतुऽशः । कल्पयन्तु ॥ १३ ॥
अमाऽउतम् । वासः । दद्यात् । हिरण्यम् । अपि । दक्षिणाम् ।
तथा । लोकान् । सम् । आप्नोति । ये । दिव्याः । ये । च । पार्थिवाः ॥ १४ ॥
एताः । त्वा । अज । उप । यन्तु । धाराः । सोम्याः । देवीः । घृतऽपृष्ठाः । मधुऽश्चुतः ।
स्तभान । पृथिवीम् । उत । द्याम् । नाकस्य । पृष्ठे । अधि । सप्तऽरश्मौ ॥ १५ ॥
अजः । असि । अज । स्वःऽगः । असि । त्वया । लोकम् । अङ्गिरसः । प्र । अजानन् ।
तम् । लोकम् । पुण्यम् । प्र । ज्ञेषम् ॥ १६ ॥

**IX.5.11** O elders, this is your third light, the unborn, made of five-fold pulp meshed grain, that one offers to an intellectual person. The unborn, offered in this world by a faithful, dispels the darknesses far away.

**IX.5.12** Desirous of obtaining the world of the virtuous ones, who have performed sacrifices, one presents the unborn, made of five-fold pulp of meshed grain, to an intellectual person; as such, may you conquer completely this wide world. May this, accepted, be propitious to us.

**IX.5.13** The (pañcaudana) aja is born, indeed, from the glow of the adorable Lord, this inspired wise one from the overpowering might of the wide lord. May the enlightened ones prepare all that - the sacrificial offerings, philanthropic donations, and bestowals offered with vaṣaṭ according to proper seasons.

**IX.5.14** One should offer a home-woven garment and also gold as priestly fee. Thus one wins completely, the worlds celestial, as well as the terrestrial.

**IX.5.15** O unborn, may these streams of divine Soma juice (cure juice) with purified butter on their surface and dripping honey reach you. May you steady the earth and also the sky on the top of the sorrowless world, above the seven-rayed sun.

**IX.5.16** O unborn (pañcaudana), you are not born, you are going to the world of bliss. Through you, the austere sages (aṅgirases) came to realize their world. May I realize that pious and virtuous world.

येना सहस्रं वहसि येनाग्ने सर्ववेदसम्।
तेनेमं यज्ञं नो वह स्वर्देवेषु गन्तवे ॥१७॥
अजः पक्वः स्वर्गे लोके दधाति पञ्चौदनो निर्ऋतिं बाधमानः।
तेन लोकान्त्सूर्यवतो जयेम ॥१८॥
यं ब्राह्मणे निदधे यं च विक्षु या विप्रुष ओदनानामजस्य।
सर्वं तदग्ने सुकृतस्य लोके जानीतान्नः संगमने पथीनाम् ॥१९॥
अजो वा इदमग्रे व्यक्रमत तस्योर इयमभवद्द्यौः पृष्ठम्।
अन्तरिक्षं मध्यं दिशः पार्श्वे समुद्रौ कुक्षी ॥२०॥
सत्यं चर्तं च चक्षुषी विश्वं सत्यं श्रद्धा प्राणो विराट् शिरः।
एष वा अपरिमितो यज्ञो यदजः पञ्चौदनः ॥२१॥
अपरिमितमेव यज्ञमाप्नोत्यपरिमितं लोकमव रुन्धे।
योऽजं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥२२॥

येन। सहस्रम्। वहसि। येन। अग्ने। सर्वऽवेदसम्।
तेन। इमम्। यज्ञम्। नः। वह। स्वः। देवेषु। गन्तवे ॥ १७ ॥
अजः। पक्वः। स्वःऽगे। लोके। दधाति। पञ्चऽओदनः। निःऽऋतिम्। बाधमानः।
तेन। लोकान्। सूर्यऽवतः। जयेम ॥ १८ ॥
यम्। ब्राह्मणे। निऽदधे। यम्। च। विक्षु। याः। विऽप्रुषः। ओदनानाम्। अजस्य।
सर्वम्। तत्। अग्ने। सुऽकृतस्य। लोके। जानीतात्। नः। सम्ऽगमने। पथीनाम् ॥
अजः। वै। इदम्। अग्रे। वि। अक्रमत। तस्य। उरः। इयम्। अभवत्। द्यौः। पृष्ठम्।
अन्तरिक्षम्। मध्यम्। दिशः। पार्श्वे इति। समुद्रौ। कुक्षी इति ॥ २० ॥
सत्यम्। च। ऋतम्। च। चक्षुषी इति। विश्वम्। सत्यम्। श्रद्धा। प्राणः। विऽराट्। शिरः।
एषः। वै। अपरिऽमितः। यज्ञः। यत्। अजः। पञ्चऽओदनः ॥ २१ ॥
अपरिऽमितम्। एव। यज्ञम्। आप्नोति। अपरिऽमितम्। लोकम्। अव। रुन्द्धे।
यः। अजम्। पञ्चऽओदनम्। दक्षिणाऽज्योतिषम्। ददाति ॥ २२ ॥

**IX.5.17** Wherewith you carry the thousands and wherewith all the wealth you carry, O fire-divine, with that grace of yours, may you carry this our sacrifice to the bounties of Nature, so that we may reach the world of bliss. (Also Yv. XV.55)

**IX.5.18** The well-cooked pañcaudana aja sets one in the world of eternal bliss, removing all distress; by that, may we win the worlds illumined by sun.

**IX.5.19** The bits of meshed grain of the pañcaudana aja, what I deposit here with the intellectual persons and with the ordinary people, O adorable Lord, may you recognize all that of ours in the world of the virtuous deeds, at the junction of pathways.

**IX.5.20** It was this unborn, indeed, that strode out in the beginning. His breast became this (earth), and his back the sky; his middle part the midspace, his two sides the quarters, and his two cavities of abdomen the two oceans.

**IX.5.21** His two eyes the truth (satya) and the right (ṛta); his existence (satyam) all the world; his vital breath the faith (prāṇa); and his head became Virāj; this pañcaudana aja is, indeed, a limitless sacrifice.

**IX.5.22** Verily, a limitless sacrifice does he obtain and a limitless world does he capture, who so offers a pañcaudana aja brightened with sacrificial gifts.

नास्यास्थीनि भिन्द्यान्न मज्ज्ञो निर्धयेत्। सर्वमेनं समादायेदमिदं प्र वेशयेत् ॥२३॥
इदमिदमेवास्य रूपं भवति तेनैनं सं गमयति ।
इषं मह ऊर्जमस्मै दुहे योऽजं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥२४॥
पञ्च रुक्मा पञ्च नवानि वस्त्रा पञ्चास्मै धेनवः कामदुघा भवन्ति ।
योऽजं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥२५॥
पञ्च रुक्मा ज्योतिरस्मै भवन्ति वर्म वासांसि तन्वे भवन्ति ।
स्वर्गं लोकमश्नुते योऽजं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥२६॥
या पूर्वं पतिं वित्त्वाथान्यं विन्दतेपरम् ।
पञ्चौदनं च तावजं ददातो न वि योषतः ॥२७॥
समानलोको भवति पुनर्भुवापरः पतिः ।
योऽजं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥२८॥

न । अस्य । अस्थीनि । भिन्द्यात् । न । मज्ज्ञः । निः । धयेत् ।
सर्वम् । एनम् । सम्ऽआदाय । इदम्ऽइदम् । प्र । वेशयेत् ॥ २३ ॥
इदम्ऽइदम् । एव । अस्य । रूपम् । भवति । तेन । एनम् । सम् । गमयति । इषम् । महः ।
ऊर्जम् । अस्मै । दुहे । यः । अजम् । पञ्चऽओदनम् । दक्षिणाऽज्योतिषम् । ददाति ॥२४॥
पञ्च । रुक्मा । पञ्च । नवानि । वस्त्रा । पञ्च । अस्मै । धेनवः । कामऽदुघाः । भवन्ति ।
यः । अजम् । पञ्चऽओदनम् । दक्षिणाऽज्योतिषम् । ददाति ॥ २५ ॥
पञ्च । रुक्मा । ज्योतिः । अस्मै । भवन्ति । वर्म । वासांसि । तन्वे । भवन्ति ।
स्वःऽगम् । लोकम् । अश्नुते । यः । अजम् । पञ्चऽओदनम् । दक्षिणाऽज्योतिषम् । ददाति ॥
या । पूर्वम् । पतिम् । वित्त्वा । अथ । अन्यम् । विन्दते । अपरम् ।
पञ्चऽओदनम् । च । तौ । अजम् । ददातः । न । वि । योषतः ॥ २७ ॥
समानऽलोकः । भवति । पुनःऽभुवा । अपरः । पतिः ।
यः । अजम् । पञ्चऽओदनम् । दक्षिणाऽज्योतिषम् । ददाति ॥ २८ ॥

**IX.5.23** He needs not break its bones, nor suck out its marrows. Seizing the whole of it, let him thrust it in this.

**IX.5.24** This, surely this, is its real form; with that one unites it. It yields food, grandeur and vigour to him, who so offers a pañcaudana aja brightened with sacrificial gifts.

**IX.5.25** Five gold coins, five new garments, and five milch-cows yielding milk whenever one desires, are for him, whoso offers a pañcaudana aja brightened with sacrificial gifts.

**IX.5.26** Five gold coins become illuminating light for him; the garments become an armour for the body; he wins the world of eternal bliss, whoso offers a pañcaudana aja brightened with sacrificial gifts.

**IX.5.27** She, who wedded to a former husband, later finds another, and if those two offer a pañcaudana aja, then they shall not be separated.

**IX.5.28** Of equal place with the remarried wife becomes the second husband, whoso offers a pañcaudana aja brightened with sacrificial gift.

अनुपूर्ववत्सां धेनुमनड्वाहमुपबर्हणम् ।
वासो हिरण्यं दत्त्वा ते यन्ति दिवमुत्तमाम् ॥२९॥
आत्मानं पितरं पुत्रं पौत्रं पितामहम् ।
जायां जनित्रीं मातरं ये प्रियास्तानुप ह्वये ॥३०॥
यो वै नैदाघं नामर्तुं वेद । एष वै नैदाघो नामर्तुर्यदजः पञ्चौदनः ।
निरेवाप्रियस्य भ्रातृव्यस्य श्रियं दहति भवत्यात्मना ।
यो३जं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥३१॥
यो वै कुर्वन्तं नामर्तुं वेद । कुर्वतींकुर्वतीमेवाप्रियस्य भ्रातृव्यस्य श्रियमा दत्ते ।
एष वै कुर्वन्नामर्तुर्यदजः पञ्चौदनः ।
निरेवाप्रियस्य भ्रातृव्यस्य श्रियं दहति भवत्यात्मना ।
यो३जं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥३२॥
यो वै संयन्तं नामर्तुं वेद । संयतींसंयतीमेवाप्रियस्य भ्रातृव्यस्य श्रियमा दत्ते ।
एष वै संयन्नामर्तुर्यदजः पञ्चौदनः ।
निरेवाप्रियस्य भ्रातृव्यस्य श्रियं दहति भवत्यात्मना ।
यो३जं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥३३॥

अनुपूर्वऽवत्साम् । धेनुम् । अनड्वाहम् । उपऽबर्हणम् ।
वासः । हिरण्यम् । दत्त्वा । ते । यन्ति । दिवम् । उत्ऽतमाम् ॥ २९ ॥
आत्मानम् । पितरम् । पुत्रम् । पौत्रम् । पितामहम् ।
जायाम् । जनित्रीम् । मातरम् । ये । प्रियाः । तान् । उप । ह्वये ॥ ३० ॥
यः । वै । नैदाघम् । नाम । ऋतुम् । वेद । एषः । वै । नैदाघः । नाम । ऋतुः । यत् । अजः । पञ्चऽओदनः । निः । एव । अप्रियस्य । भ्रातृव्यस्य । श्रियम् । दहति । भवति । आत्मना । यः । अजम् । पञ्चऽओदनम् । दक्षिणाऽज्योतिषम् । ददाति ॥ ३१ ॥
यः । वै । कुर्वन्तम् । नाम । ० । कुर्वतीम्ऽकुर्वतीम् । एव । अप्रियस्य । भ्रातृव्यस्य । श्रियम् । आ । दत्ते । एषः । वै । कुर्वन् । नाम । ० ॥ ३२ ॥
यः । वै । सम्ऽयन्तम् । नाम । ० । संयतीम्ऽसंयतीम् । एव । ० ।
एषः । वै । सम्ऽयन् । नाम । ० ॥ ३३ ॥

**IX.5.29** They, presenting a milch-cow, that bears a calf after the previous one, and a draft-ox, a pillow, a garment, and gold, go to the best heaven.

**IX.5.30** Myself, my father, son, grandson, grand-father, wife who bore my children and my mother - who dear to me, them I call near.

**IX.5.31** He who surely knows the season called; scorching; - this, indeed, is the season called scorching that is the pañcaudana aja - burns out the splendour of his hated enemy, and prospers by himself; he, whoso offers a pañcaudana aja brightened with sacrificial gifts.

**IX.5.32** He, who surely knows the season called, 'making', (kurvantam), takes to himself each and every splendour in making, of his hated enemy. This, indeed, is the season called making (kurvan) that is the pañcaudana aja. He burns out the splendour of his hated enemy and prospers by himself; whoso offers a pañaudana aja brightened with sacrificial gifts.

**IX.5.33** He, who surely knows the season called, 'gathering', (sanyan), takes to himself each and every gathering (sanyantam) splendour in making, of his hated enemy. This, indeed, is the season called gathering (sanyam) that is the pañcaudana aja. He burns out the splendour of his hated enemy and prospers by himself; whoso offers a pañaudana aja brightened with sacrificial gifts.

योवै पिन्वन्तं नामर्तुं वेदं । पिन्वतींपिन्वतीमेवाप्रियस्य भ्रातृव्यस्य श्रियमा दत्ते ।
एष वै पिन्वन्नामर्तुर्यदजः पञ्चौदनः ।
निरेवाप्रियस्य भ्रातृव्यस्य श्रियं दहति भवत्यात्मना ।
यो३जं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥३४॥
यो वा उद्यन्तं नामर्तुं वेदं । उद्यतीमुद्यतीमेवाप्रियस्य भ्रातृव्यस्य श्रियमा दत्ते ।
एष वा उद्यन्नामर्तुर्यदजः पञ्चौदनः ।
निरेवाप्रियस्य भ्रातृव्यस्य श्रियं दहति भवत्यात्मना ।
यो३जं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥३५॥
यो वा अभिभुवं नामर्तुं वेदं । अभिभवन्तीमभिभवन्तीमेवाप्रियस्य भ्रातृव्यस्य श्रियमा दत्ते ।
एष वा अभिभूर्नामर्तुर्यदजः पञ्चौदनः ।
निरेवाप्रियस्य भ्रातृव्यस्य श्रियं दहति भवत्यात्मना ।
यो३जं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥३६॥
अजं च पचत पञ्च चौदनान् ।
सर्वा दिशः संमनसः सध्रीचीः सान्तर्देशाः प्रति गृह्णन्तु त एतम् ॥३७॥
तास्ते रक्षन्तु तव तुभ्यमेतं ताभ्य आज्यं हविरिदं जुहोमि ॥३८॥

यः । वै । पिन्वन्तम् । नाम । ० । पिन्वतीम्ऽपिन्वतीम् । एव । ० ।
एषः । वै । पिन्वन् । नाम । ० ॥ ३४ ॥

यः । वै । उत्ऽयन्तम् । नाम । ० । उद्यतीम्ऽउद्यतीम् । एव । ० ।
एषः । वै । उत्ऽयन् । नाम । ० ॥ ३५ ॥

यः । वै । अभिऽभुवम् । नाम । ऋतुम् । वेद ।
अभिभवन्तीम्ऽअभिभवन्तीम् । एव । अप्रियस्य । भ्रातृव्यस्य । श्रियम् । आ । दत्ते ।
एषः । वै । अभिऽभूः । नाम । ऋतुः । यत् । अजः । पञ्चऽओदनः ।
निः । एव । अप्रियस्य । भ्रातृव्यस्य । श्रियम् । दहति । भवति । आत्मना ।
यः । अजम् । पञ्चऽओदनम् । दक्षिणाऽज्योतिषम् । ददाति ॥ ३६ ॥

अजम् । च । पचत । पञ्च । च । ओदनान् ।
सर्वाः । दिशः । सम्ऽमनसः । सध्रीचीः । सऽअन्तर्देशाः । प्रति । गृह्णन्तु । ते । एतम् ॥३७॥
ताः । ते । रक्षन्तु । तव । तुभ्यम् । एतम् । ताभ्यः । आज्यम् । हविः । इदम् । जुहोमि ॥३८॥

**IX.5.34** He, who surely knows the season called, 'abounding', (pinvatī), takes to himself each and every abounding (pinvan) splendour in making, of his hated enemy. This, indeed, is the season called abounding that is the pañcaudana aja. He burns out the splendour of his hated enemy and prospers by himself; whoso offers a pañaudana aja brightened with sacrificial gifts.

**IX.5.35** He, who surley knows the season called,'rising',(udayantam), takes to himself each and every rising (udyan) splendour in making, of his hated enemy. This, indeed, is the season called rising (udyan) that is the pañcaudana aja. He burns out the splendour of his hated enemy and prospers by himself; whoso offers a pañaudana aja brightened with sacrificial gifts.

**IX.5.36** He, who surely knows the season called, 'overcoming', (abhibhuvam), takes to himself each and every overcoming (abhibhuvanti) splendour in making, of his hated enemy. This, indeed, is the season called overcoming (abhibhuvam), that is the pañcaudan aja. He burns out the splendour of his hated enemy and prospers by himself; whoso offers a pañaudana aja brightened with sacrificial gifts.

**IX.5.37** Cook the aja and five measures of messhed grain. May all the quarters, one-minded and agreeing with each other, along with the intermediate quarters give this offering of yours.

**IX.5.38** May they preserve this of yours for you; to them I offer this oblation, prepared with sacrificial butter.

( ६ ) षष्ठं सूक्तम्

'यो विद्यात्' इत्यारभ्य 'ज्योतिष्मतो लोकान्' इत्यन्तानां षड्पर्यायाणां ब्रह्मा ऋषिः । अतिथिर्विद्या वा देवता ।

[ १ ] प्रथमः पर्यायः

(१–१७) सप्तदशर्चस्यास्य पर्यायस्य (१) प्रथमर्चो नागी त्रिपदा गायत्री, (२) द्वितीयायास्त्रिपदार्ची गायत्री, (३, ७) तृतीयासप्तम्योः साम्नी त्रिष्टुप्, (४, ९) चतुर्थीनवम्योरार्च्यनुष्टुप्, (५) पञ्चम्या आसुरी गायत्री, (६) षष्ठ्यास्त्रिपदा साम्नी जगती, (८) अष्टम्या याजुषी त्रिष्टुप्, (१०) दशम्याः साम्नी भुरिग्बृहती, (११, १४–१६) एकादश्याश्चतुर्दश्यादित्रयस्य च साम्न्यनुष्टुप्, (१२) द्वादश्या विराड्गायत्री, (१३) त्रयोदश्याः साम्नी निचृत्पङ्क्तिः, (१७) सप्तदश्याश्च त्रिपदा विराड् भुरिग्गायत्री छन्दांसि ॥

यो विद्याद्ब्रह्म प्रत्यक्षं परूंषि यस्य संभारा ऋचो यस्यानूक्यम् ॥१॥
सामानि यस्य लोमानि यजुर्हृदयमुच्यते परिस्तरणमिद्धविः ॥२॥
यद्वा अतिथिपतिरतिथीन्प्रतिपश्यति देवयजनं प्रेक्षते ॥३॥
यदभिवदति दीक्षामुपैति यदुदकं याचत्यपः प्र णयति ॥४॥
या एव यज्ञ आपः प्रणीयन्ते ता एव ताः ॥५॥
यत्तर्पणमाहरन्ति य एवाग्नीषोमीयः पशुर्बध्यते स एव सः ॥६॥
यदावसथान्कल्पयन्ति सदोहविर्धानान्येव तत्कल्पयन्ति ॥७॥

यः । विद्यात् । ब्रह्म । प्रतिऽअक्षम् । परूंषि । यस्य । सम्ऽभाराः । ऋचः । यस्य । अनूक्यम् ॥
सामानि । यस्य । लोमानि । यजुः । हृदयम् । उच्यते । परिऽस्तरणम् । इत् । हविः ॥२॥
यत् । वै । अतिथिऽपतिः । अतिथीन् । प्रतिऽपश्यति । देवऽयजनम् । प्र । ईक्षते ॥ ३ ॥
यत् । अभिऽवदति । दीक्षाम् । उप । एति । यत् । उदकम् । याचति । अपः । प्र । नयति ॥
याः । एव । यज्ञे । आपः । प्रऽनीयन्ते । ताः । एव । ताः ॥ ५ ॥
यत् । तर्पणम् । आऽहरन्ति । यः । एव । अग्नीषोमीयः । पशुः । बध्यते । सः । एव । सः ॥
यत् । आऽवसथान् । कल्पयन्ति । सदःऽहविर्धानानि । एव । तत् । कल्पयन्ति ॥ ७ ॥

PARYĀYA - I

## Atithiḥ - Vidyā

**IX.6(1).1** Who knows the Lord of knowledge directly, whose joints are the sacrificial equipment; whose spine are the Ṛk verses;

**IX.6(1).2** Whose hair are the Sāmans; whose heat is called the Yajuṣ (sacrificial formulae); whose bedding is verily the sacrificial offerings.

**IX.6(1).3** When a host (house holder, atithipati) looks face to face at his guests (atithi), he, in fact, is looking at a sacrifice to the enlightened ones.

**IX.6(1).4** When he greets them with words, he (in fact) receives consecration (dīkṣā); whoever asks for water, to him he fetches water;

**IX.6(1).5** That is, as if, the very same waters, that are brought to the sacrifice.

**IX.6(1).6** The refreshments (tarpaṇam), that are brought for the guests, that is, as if, the animal tied (baddha- paśu) up for the Lord adorable and blissful at the sacrifice.

**IX.6(1).7** The night's lodgings (avasatha) they arrange (for guests), they are, as if, preparing the seat and shed for storing sacrificial provisions.

यदुपस्तृणन्ति बर्हिरेव तत् ॥८॥
यदुपरिशयनमाहरन्ति स्वर्गमेव तेन लोकमव रुन्धे ॥९॥
यत्कशिपूपबर्हणमाहरन्ति परिधय एव ते ॥१०॥
यदाञ्जनाभ्यञ्जनमाहरन्त्याज्यमेव तत् ॥११॥
यत्पुरा परिवेषात्खादमाहरन्ति पुरोडाशाविव तौ ॥१२॥
यदशनकृतं ह्वयन्ति हविष्कृतमेव तद्ध्वयन्ति ॥१३॥
ये व्रीहयो यवा निरुप्यन्तेंशव एव ते ॥१४॥
यान्युलूखलमुसलानि ग्रावाण एव ते ॥१५॥

यत् । उपऽस्तृणन्ति । बर्हिः । एव । तत् ॥ ८ ॥

यत् । उपरिऽशयनम् । आऽहरन्ति । स्वःऽगम् । एव । तेन । लोकम् । अव । रुन्द्धे ॥ ९ ॥

यत् । कशिपुऽउपबर्हणम् । आऽहरन्ति । परिऽधयः । एव । ते ॥ १० ॥

यत् । आञ्जनऽअभ्यञ्जनम् । आऽहरन्ति । आज्यम् । एव । तत् ॥ ११ ॥

यत् । पुरा । परिऽवेषात् । खादम् । आऽहरन्ति । पुरोडाशौ । एव । तौ ॥ १२ ॥

यत् । अशनऽकृतम । ह्वयन्ति । हविःऽकृतम् । एव । तत् । ह्वयन्ति ॥ १३ ॥

ये । व्रीहयः । यवाः । निःऽउप्यन्ते । अंशवः । एव । ते ॥ १४ ॥

यानि । उलूखलऽमुसलानि । ग्रावाणः । एव । ते । १५ ॥

**IX.6(1).8** The mattresses (upastaraṇa) they spread (on the floor), that is, in fact, spreading of sacred grass (barhis) (at the sacrifice).

**IX.6(1).9** The cot (upariśayanam) they bring in (for guests), with that they, as if, win the world of bliss for themselves.

**IX.6(1).10** The bed-sheet (kaśi pūpa barhaṇam) and the pillow they bring, that are, as if, the enclosing sticks (paridhi) of altar.

**IX.6(1).11** The unguents (añjanam) and ointments (abhyañjanam) they bring, that is, as if, the purified butter for the sacrifice.

**IX.6(1).12** What they bring as food for tasting before the regular meal (puradāśau), that is, as if, the two sacrificial cakes of rice.

**IX.6(1).13** When they call the man, who cooks food, in fact, they are calling the man, who prepares oblations (haviṣkṛtam).

**IX.6(1).14** The grains of rice (vrīhayaḥ) and barley (yavāh) that are selected (for consumption), are, as if, the piece of the cure-plant (anśu).

**IX.6(1).15** The mortar (ulūkhala) and pestles (musala), that are there, are as if, the stones (grāvana) used for pressing out cure-juice (abhiṣavaṇī - āpah).

शूर्पं पवित्रं तुषा ऋजीषाभिषवणीरापः ॥१६॥
स्रुग्दर्विर्नेक्षणमायवनं द्रोणकलशाः कुम्भ्यो वायव्यानि।
पात्राणीयमेव कृष्णाजिनम् ॥१७॥

शूर्पम्। पवित्रम्। तुषाः। ऋजीषाः। अभिऽसवनीः। आपः॥ १६॥

स्रुक्। दर्विः। नेक्षणम्। आऽयवनम्। द्रोणऽकलशाः। कुम्भ्यः। वायव्यानि। पात्राणि। इयम्। एव। कृष्णऽअजिनम्॥ १७॥

[ २ ] द्वितीयः पर्यायः

(१-१३) त्रयोदशर्चस्यास्य पर्यायस्य (१) प्रथमर्चो विराट् पुरस्ताद्बृहती, (२, १२) द्वितीयाद्वादश्योः साम्नी त्रिष्टुप्, (३) तृतीयस्या आसुर्यनुष्टुप्, (४) चतुर्थ्याः साम्न्युष्णिक्, (५) पञ्चम्याः साम्नी बृहती, (६) षष्ठ्या आर्च्यनुष्टुप्, (७) सप्तम्याः पञ्चपदा विराट् पुरस्ताद्बृहती, (८) अष्टम्या आसुरी गायत्री, (९) नवम्याः साम्न्यनुष्टुप्, (१०) दशम्यास्त्रिपदार्ची त्रिष्टुप्, (११) एकादश्या भुरिक्साम्नी बृहती, (१३) त्रयोदश्याश्च त्रिपदार्ची पङ्क्तिश्छन्दांसि॥

यजमानब्राह्मणं वा एतदतिथिपतिः कुरुते यदाहार्याणि।
प्रेक्षत इदं भूया३ इदा३मिति ॥१॥
यदाह भूय उद्धरेति प्राणमेव तेन वर्षीयांसं कुरुते ॥२॥
उप हरति हवींष्या सादयति ॥३॥
तेषामासन्नानामतिथिरात्मञ्जुहोति ॥४॥

यजमानऽब्राह्मणम्। वै। एतत्। अतिथिऽपतिः। कुरुते। यत्। आऽहार्याणि। प्रऽईक्षते। इदम्। भूया३ः। इदा३म्। इति॥ १॥

यत्। आह। भूयः। उत्। हर। इति। प्राणम्। एव। तेन। वर्षीयांसम्। कुरुते॥२॥

उप। हरति। हवींषि। आ। सादयति॥ ३॥

तेषाम्। आऽसन्नानाम्। अतिथिः। आत्मन्। जुहोति॥ ४॥

**IX.6(1).16** The winnowing fan (śūrpa) is, as if, the strainer (pavitram) the chaff (tuṣā) is, as if, the residue (ṛjīṣā) of the cure-juice; the water at meal-time is, as if, the water used for pressing out the cure-juice.

**IX.6(1).17** The ladle (sruk) is the sacrificial spoon (darvī); the stirring prong is the spit; water-jars are the vessels for storing (nakṣanam) cure-juice (droṇa-kalaśa); drinking mugs-kumbhī (for the guests) are the mortar-shaped vessels for drinking cure-juice (at the sacrifice); and this (earth) is, as if, black-buck skin (kṛṣṇa-ajina).

PARYĀYA - II

## Atithiḥ - Vidyā

**IX.6(2).1** When a host-house-holder (atithi pati) inspects the provisions meant for guests, commenting this,"is excellent; this is alright", he is acting as a priest (Brāhmaṇa) to the sacrificer (yajamāna). "(idam bhūyāḥ"; this is excellent; " idāmiti"; this is alright, or is this larger or this is ? )

**IX.6(2).2** When he says, "please take some more", thereby he makes his life-span longer. ("bhūyaḥ uddhara"; take more or take up the larger).

**IX.6(2).3** When he brings viands (to the guest), he, as if, brings forth the libations (at sacrifice).

**IX.6(2).4** Of those viands brought near him, the guest makes offerings within himself. (atithiḥ ātmañ - juhoti).

स्रुचा हस्तेन प्राणे यूपे स्रुक्कारेण वषट्कारेण ॥५॥
एते वै प्रियाश्चाप्रियाश्चर्त्विजः स्वर्गं लोकं गमयन्ति यदतिथयः ॥६॥
स य एवं विद्वान्न द्विषन्नश्नीयान्न द्विषतोन्नमश्नीयान्न ।
मीमांसितस्य न मीमांसमानस्य ॥७॥
सर्वो वा एष जग्धपाप्मा यस्यान्नमश्नन्ति ॥८॥
सर्वो वा एषोजग्धपाप्मा यस्यान्नं नाश्नन्ति ॥९॥
सर्वदा वा एष युक्तग्रावार्द्रपवित्रो विततात्ध्वर
आहृतयज्ञक्रतुर्य उपहरति ॥१०॥
प्राजापत्यो वा एतस्य यज्ञो विततो य उपहरति ॥११॥

स्रुचा । हस्तेन । प्राणे । यूपे । स्रुक्ऽकारेण । वषट्ऽकारेण ॥ ५ ॥

एते । वै । प्रियाः । च । अप्रियाः । च । ऋत्विजः । स्वःऽगम् । लोकम् । गमयन्ति । यत् । अतिथयः ॥ ६ ॥

सः । यः । एवम् । विद्वान् । न । द्विषन् । अश्नीयात् । न । द्विषतः । अन्नम् । अश्नीयात् । न । मीमांसितस्य । न । मीमांसमानस्य ॥ ७ ॥

सर्वः । वै । एषः । जग्धऽपाप्मा । यस्य । अन्नम् । अश्नन्ति ॥ ८ ॥

सर्वः । वै । एषः । अजग्धऽपाप्मा । यस्य । अन्नम् । न । अश्नन्ति ॥ ९ ॥

सर्वदा । वै । एषः । युक्तऽग्रावा । आर्द्रऽपवित्रः । विततऽअध्वरः । आहृतऽयज्ञक्रतुः । यः । उपऽहरति ॥ १० ॥

प्राजाऽपत्यः । वै । एतस्य । यज्ञः । विऽततः । यः । उपहरति ॥ ११ ॥

**IX.6(2).5** With hand, that is, as if, the sacrificial spoon (srucā), at a breath, as if, at the sacrificial post (yūpe), with a sipping sound, as if, with an utterance of vasat. (sruk kāreṇa = with a sipping sound; vaṣaṭkāreṇa)

**IX.6(2).6** Surely, these guests, pleasing (priyāḥ) as well as unpleasing (apriyāḥ), are the priests, who enable one to reach the world of eternal bliss.

**IX.6(2).7** Let him, who knows this, not partake food having malice for the host, nor should he partake food of a malicious host, nor of a host of doubtful conduct (mīmāṅsitasya), nor of a doubting host (mīmāṇsa mānasya).

**IX.6(2).8** Surely, he gets all his sins devoured, whose food (the guests) partake of.

**IX.6(2).9** Surely, all his sins remain undevoured, whose food (the guests) do not partake of.

**IX.6(2).10** Whoever presents food (to guests), surely his cure-juice-stones (pressing stones - yuktagrāva) are always engaged (harnessed), his strainers always wet (ārdrapavitrāḥ), his sacrifice always going on, and his sacrificial rites always accomplished. (yukta grāvāḥ = pressing stones harnessed, adjusted or engaged; ārdra pavitrāḥ = strainers always are wet.)

**IX.6(2).11** Whoever presents food (to guests), surely his sacrifice to the Lord of creatures is arranged.

प्रजापतेर्वा एष विक्रमाननुविक्रमते य उपहरति ॥१२॥
योतिथीनां स आहवनीयो यो वेश्मनि स गार्हपत्यो
यस्मिन्पचन्ति स दक्षिणाग्निः ॥१३॥

प्रजाऽपतेः । वै । एषः । विऽक्रमान् । अनुऽविक्रमते । यः । उपऽहरति ॥ १२ ॥

यः । अतिथीनाम् । सः । आऽहवनीयः । यः । वेश्मनि । सः । गार्हऽपत्यः । यस्मिन् । पचन्ति । सः । दक्षिणऽअग्निः ॥ १३ ॥

[ ३ ] तृतीयः पर्यायः

(१–९) नवर्चस्यास्य पर्यायस्य (१–६, ९) प्रथमादिषड्चां नवम्याश्च त्रिपदा पिपीलिकमध्या गायत्री, (७) सप्तम्याः साम्नी बृहती, (८) अष्टम्याश्च पिपीलिकमध्योष्णिक् छन्दांसि ॥

इष्टं च वा एष पूर्तं च गृहाणामश्नाति यः पूर्वोतिथेरश्नाति ॥१॥
पयश्च वा एष रसं च गृहाणामश्नाति यः पूर्वोतिथेरश्नाति ॥२॥
ऊर्जां च वा एष स्फातिं च गृहाणामश्नाति यः पूर्वोतिथेरश्नाति ॥३॥
प्रजां च वा एष पशूंश्च गृहाणामश्नाति यः पूर्वोतिथेरश्नाति ॥४॥

इष्टम् । च । वै । एषः । पूर्तम् । च । गृहाणाम् । अश्नाति । यः । पूर्वः । अतिथेः । अश्नाति ॥

पयः । च । वै । एषः । रसम् । च । गृहाणाम् । अश्नाति । यः । पूर्वः । अतिथेः । अश्नाति ॥२॥

ऊर्जाम् । च । वै । एषः । स्फातिम् । च । गृहाणाम् । अश्नाति । यः । पूर्वः । अतिथेः । अश्नाति ॥ ३ ॥

प्रऽजाम् । च । वै । एषः । पशून् । च । गृहाणाम् । अश्नाति । यः । पूर्वः । अतिथेः । अश्नाति ॥ ४ ॥

**IX.6(2).12** Whoever presents food (to guests), surely he follows the strides of the Lord creatures. (Prajāpateḥ vihramān anuvikramate).

**IX.6(2).13** The fire, which is of guests, is called āhavanīya (the fire of offerings); one, that is within the house, is called gārhapatya (the householder's fire); one, on which they cook, is called dakṣiṇāgni (the southern fire).

PARYĀYA - III

## Atithiḥ Vidyā

**IX.6(3).1** He devours indeed the sacrificial (iṣṭa) and philanthropic (pūrta) deeds of the house, whosoever eats before the guest has eaten.

**IX.6(3).2** He devours indeed the milk (payaḥ) and the sap (rasam) of the house, whosoever eats before the guest has eaten.

**IX.6(3).3** He devours indeed the vigour (ūrjā) and prosperity (sphāti) of the house, whosoever eats before the guest has eaten.

**IX.6(3).4** He devours indeed the progeny (prajā) and cattle (paśu) of the house, whosoever eats before the guests has eaten.

कीर्तिं च वा एष यशश्च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥५॥
श्रियं च वा एष संविदं च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥६॥
एष वा अतिथिर्यच्छ्रोत्रियस्तस्मात्पूर्वो नाश्नीयात् ॥७॥
अशितावत्यतिथावश्नीयाद्यज्ञस्य सात्मत्वाय यज्ञस्याविच्छेदाय तद्व्रतम् ॥८॥
एतद्वा उ स्वादीयो यदधिगवं क्षीरं वा मांसं वा तदेव नाश्नीयात् ॥९॥

कीर्तिम् । च । वै । एषः । यशः । च । गृहाणाम् । अश्नाति । यः । पूर्वः । अतिथेः । अश्नाति ॥ ५ ॥

श्रियम् । च । वै । एषः । सम्ऽविदम् । च । गृहाणाम् । अश्नाति । यः । पूर्वः । अतिथेः । अश्नाति ॥ ६ ॥

एषः । वै । अतिथिः । यत् । श्रोत्रियः । तस्मात् । पूर्वः । न । अश्नीयात् ॥ ७ ॥

अशितऽवति । अतिथौ । अश्नीयात् । यज्ञस्य । सात्मऽत्वाय । यज्ञस्य । अविऽछेदाय । तत् । व्रतम् ॥ ८ ॥ [३८]

एतत् । वै । ऊं इति । स्वादीयः । यत् । अधिऽगवम् । क्षीरम् । वा । मांसम् । वा । तत् । एव । न । अश्नीयात् ॥ ९ ॥

[ ४ ] चतुर्थः पर्यायः

(१-१०) दशर्चस्यास्य पर्यायस्य (१, ३, ५, ७) प्रथमातृतीयापञ्चमीसप्तमीनामृचां प्राजापत्यानुष्टुप्, (२, ४, ६, ८) द्वितीयाचतुर्थीषष्ठ्यष्टमीनां त्रिपदा गायत्री, (९) नवम्या भुरिगनुष्टुप्, (१०) दशम्याश्च चतुष्पदा प्रस्तारपङ्क्तिश्छन्दांसि ॥

स य एवं विद्वान्क्षीरमुपसिच्योपहरति ॥१॥

सः । यः । एवम् । विद्वान् । क्षीरम् । उपऽसिच्य । उपऽहरति ॥ १ ॥

**IX.6(3).5** He devours indeed the glory (kīrti) and fame (yaśa) the house, whosoever eats before the guest has eaten.

**IX.6(3).6** He devours indeed the splendour (śriyam) and the understanding (saṁvidam) of the house, whosoever eats before the guest has eaten.

**IX.6(3).7** A guest is indeed a learned sage, therefore, one should never eat before he has eaten.

**IX.6(3).8** Let one eat after the guest has eaten; this is the proper course for making the sacrifice full of spirit and for uninterrupted completion of the sacrifice.

**IX.6(3).9** It is, indeed, more delicious that what is obtained from cows, whether milk or meat (cheese), that one should not eat (before the guest has eaten). (māṅsam = cheese or solid or clotted milk)

PARYĀYA - IV

## Atithiḥ - Vidyā

**IX.6(4).1** He, who knowing thus, pours out milk and presents it (to the guest), with it he wins so much as one wins by performing a very successful agniṣṭoma sacrifice.

यावदग्निष्टोमेनेष्ट्वा सुसंमृद्धेनावरुन्धे तावदेनेनाव रुन्धे ॥२॥
स य एवं विद्वान्त्सर्पिरुपसिच्योपहरति ॥३॥
यावदतिरात्रेणेष्ट्वा सुसंमृद्धेनावरुन्धे तावदेनेनाव रुन्धे ॥४॥
स य एवं विद्वान्मधूपसिच्योपहरति ॥५॥
यावत्सत्रसद्येनेष्ट्वा सुसंमृद्धेनावरुन्धे तावदेनेनाव रुन्धे ॥६॥
स य एवं विद्वान्मांसमुपसिच्योपहरति ॥७॥
यावद्द्वादशाहेनेष्ट्वा सुसंमृद्धेनावरुन्धे तावदेनेनाव रुन्धे ॥८॥

यावत् । अग्निऽस्तोमेन । इष्ट्वा । सुऽसंमृद्धेन । अवऽरुन्द्धे । तावत् । एनेन । अव । रुन्द्धे ॥

सः । यः । एवम् । विद्वान् । सर्पिः । उपऽसिच्य । उपऽहरति ॥ ३ ॥

यावत् । अतिऽरात्रेण । इष्ट्वा । ० ॥ ४ ॥

सः । यः । एवम् । विद्वान् । मधु । उपऽसिच्य । उपऽहरति ॥ ५ ॥

यावत् । सत्रऽसद्येन । इष्ट्वा । ० ॥ ६ ॥

सः । यः । एवम् । विद्वान् । मांसम् । उपऽसिच्य । उपऽहरति ॥ ७ ॥

यावत् । द्वादशऽअहेन । इष्ट्वा । सुऽसंमृद्धेन । अवऽरुन्द्धे । तावत् । एनेन । अव । रुन्द्धे ॥

**IX.6(4).2** He, who knowing thus, pours out milk and presents it (to the guest), with it he wins so much as one wins by performing a very successful agniṣṭoma sacrifice.

**IX.6(4).3-4** He, who knowing thus, pours out purified butter and presents it (to the guest), with it he wins so much as one wins by performing a very successful atirātra sacrifice.

**IX.6(4).5-6** He, who knowing thus, pours out honey and presents it (to the guest), with it he wins so much as one wins by performing a very successful satrasadya sacrifice.

**IX.6(4).7-8** He, who knowing thus, pours out meat (cheese or clotted milk) presents it (to the guests), with it he wins so much as one wins by performing a very successful dvādaśāha sacrifice.

स य एवं विद्वानुदकमुपसिच्योपहरति ॥९॥
प्रजानां प्रजननाय गच्छति प्रतिष्ठां प्रियः प्रजानां भवति
य एवं विद्वानुदकमुपसिच्योपहरति ॥१०॥

सः । यः । एवम् । विद्वान् । उदकम् । उपऽसिच्य । उपऽहरति ॥ ९ ॥

प्रऽजानाम् । प्रऽजननाय । गच्छति । प्रतिऽस्थाम् । प्रियः । प्रऽजानाम् । भवति । यः । एवम् । विद्वान् । उदकम् । उपऽसिच्य । उपऽहरति ॥ १० ॥

[ ५ ] पञ्चमः पर्यायः

(१-१०) दशर्चस्यास्य पर्यायस्य (१) प्रथमर्चः साम्न्युष्णिक्, (२) द्वितीयायाः पुर उष्णिक्, (३, ५, ७, १०) तृतीयायाः पञ्चमीसप्तम्युत्तरार्धयोर्दशम्याश्च साम्नी भुरिग्बृहती, (४, ६, ९) चतुर्थीषष्टीनवमीनां साम्न्यनुष्टुप्, (५) पञ्चमीपूर्वार्धस्य त्रिपदा निचृद्विषमा गायत्री, (७) सप्तमीपूर्वार्धस्य त्रिपदा विराड्विषमा गायत्री, (८) अष्टम्याश्च त्रिपदा विराडनुष्टुप् छन्दांसि ॥

तस्मा उषा हिङ्कृणोति सविता प्र स्तौति ॥१॥
बृहस्पतिरूर्जयोद्गायति त्वष्टा पुष्ट्या प्रति हरति विश्वे देवा निधनम् ॥२॥
निधनं भूत्याः प्रजायाः पशूनां भवति य एवं वेद ॥३॥
तस्मा उद्यन्त्सूर्यो हिङ्कृणोति संगवः प्र स्तौति ॥४॥

तस्मै । उषाः । हिङ् । कृणोति । सविता । प्र । स्तौति ॥ १ ॥

बृहस्पतिः । ऊर्जया । उत् । गायति । त्वष्टा । पुष्ट्या । प्रति । हरति । विश्वे । देवाः । निऽधनम् ॥ २ ॥

निऽधनम् । भूत्याः । प्रऽजायाः । पशूनाम् । भवति । यः । एवम् । वेद ॥ ३ ॥

तस्मै । उत्ऽयन् । सूर्यः । हिङ् । कृणोति । सम्ऽगवः । प्र । स्तौति ॥ ४ ॥

**IX.6(4).9-10** He, who knowing thus, pours out water and presents it (to the guest), with it he wins stability for procreation of progeny. He is loved by his children, who knowing thus, pours out water and presents it (to the guest).

PARYĀYA - V

## Atithiḥ - Vidyā

**IX.6(5).1-3** For him the dawn chants hin (a particular sound in chanting of Sāmans; (hiṅkṛṇoti)); the impeller Lord sings the prelude (the part of Sāmans, which is chanted by the prastotṛ); the Lord supreme chants loudly with vigour (the part of the Sāmans, that is sung by the udgātṛ); the universal moulder (mechanic) joins in with nourishment (the part of the sāmans, that is chanted by pratihartṛ); and all the bounties of Nature sing the finale (the concluding part of Sāmans); he, who knows this, becomes the abode of prosperity, of progeny and of cattle.
(Dawn-uṣā; hiṅkāra - Savitṛ; prastotṛ - Bṛhaspati;udgāta tvaṣṭṛ;pratihastṛ viśvedevāḥ - nidhana)

**IX.6(5).4-5** For him the rising sun chants hin; cow-fathering (Saṅgava) time (i.e., early morning) sings the prelude; the noon chants loudly; the after-noon joins in; the sun-set sings the finale; he, who knows this, becomes the abode of prosperity, of progeny and of cattle.
(Rising sun - hiṅkāra; Saṅgava - prastotṛ; Madhyadina Sun - udgātṛ; After-noon sun - pratihartṛ ; Setting sun - nidhana)

मध्यन्दिन उद्गायत्यपराह्णः प्रति हरत्यस्तंयन्निधनम् ।
निधनं भूत्याः प्रजायाः पशूनां भवति य एवं वेद ॥५॥
तस्मा अभ्रो भवन्हिङ्कृणोति स्तनयन्प्र स्तौति ॥६॥
विद्योतमानः प्रति हरति वर्षन्नुद्गायत्युद्गृह्णन्निधनम् ।
निधनं भूत्याः प्रजायाः पशूनां भवति य एवं वेद ॥७॥
अतिथीन्प्रति पश्यति हिङ्कृणोत्यभि वदति प्र स्तौत्युदकं याचत्युद्गायति ॥८॥
उप हरति प्रति हरत्युच्छिष्टं निधनम् ॥९॥
निधनं भूत्याः प्रजायाः पशूनां भवति य एवं वेद ॥१०॥

मध्यन्दिनः । उत् । गायति । अपरऽअह्नः । प्रति । हरति । अस्तम्ऽयन् । निऽधनम् ।
निऽधनम् । ० । ॥ ५ ॥

तस्मै । अभ्रः । भवन् । हिङ् । कृणोति । स्तनयन् । प्र । स्तौति ॥ ६ ॥

विऽद्योतमानः । प्रति । हरति । वर्षन् । उत् । गायति । उत्ऽगृह्णन् । निऽधनम् । निऽधनम् । ०॥

अतिथीन् । प्रति । पश्यति । हिङ् । कृणोति । अभि । वदति । प्र । स्तौति । उदकम् ।
याचति । उत् । गायति ॥ ८ ॥

उप । हरति । प्रति । हरति । उत्ऽशिष्टम् । निऽधनम् ॥ ९ ॥

निऽधनम् । भूत्याः । प्रऽजायाः । पशुनाम् । भवति । यः । एवम् । वेद ॥ १० ॥

I **IX.6(5).6-7** For him the cloud, while forming chants hiṅ; while thundering it sings the prelude; while lightning it joins in; while raining it chants loudly; while petering out (disappearing) it sings the finale; he, who knows this, becomes the abode of prosperity, of progeny, and of cattle (Abhraḥ formation - hiṅkara; Thundering - prastotṛ; Lightning - pratihartṛ; Raining - udgātṛ; Peteringout - nidhana)

**IX.6(5).8-10** When he looks face to face at his guests, he, as if, chants hiṅ; when he greets them, he sings the prelude; when he calls for water (for the guests), he chants loudly: when he presents, he, as if, joins in; the residue or remnant of meal is, as if, singing the finale; he, who knows this, becomes the abode of prosperity, of progeny and of cattle.
(Faces guests - hiṅkāra; Greets guest - prastotṛ; Gives water - udgātṛ; Presents food - pratihartṛ; Remnant - nidhana)

[ ६ ] षष्ठः पर्यायः

(१–१४) चतुर्दशर्चस्यास्य पर्यायस्य (१) प्रथमर्च आसुरी गायत्री, (२) द्वितीयायाः साम्न्यनुष्टुप्, (३, ५) तृतीया-पञ्चम्योस्त्रिपदार्ची पङ्क्तिः, (४) चतुर्थ्या एकपदा प्राजापत्या गायत्री, (६–११) षष्ठ्यादिषण्णा-मार्ची बृहती, (१२) द्वादश्या एकपदासुरी जगती, (१३) त्रयोदश्या याजुषी त्रिष्टुप्, (१४) चतुर्दश्याश्चैकपदासुर्युष्णिक् छन्दांसि ॥

यत्क्षत्तारं ह्वयत्या श्रावयत्येव तत् ॥१॥
यत्प्रतिशृणोति प्रत्याश्रावयत्येव तत् ॥२॥
यत्परिवेष्टारः पात्रहस्ताः पूर्वे चापरे च प्रपद्यन्ते चमसाध्वर्यव एव ते ॥३॥
तेषां न कश्चनाहोता ॥४॥
यद्वा अतिथिपतिरतिथीन्परिविष्य गृहानुपोदैत्यवभृथमेव तदुपावैति ॥५॥
यत्सभागयति दक्षिणाः सभागयति यदनुतिष्ठत उदवस्यत्येव तत् ॥६॥

यत् । क्षत्तारम् । ह्वयति । आ । श्रावयति । एव । तत् ॥ १ ॥

यत् । प्रतिऽशृणोति । प्रतिऽआश्रावयति । एव । तत् ॥ २ ॥

यत् । परिऽवेष्टारः । पात्रऽहस्ताः । पूर्वे । च । अपरे । च । प्रऽपद्यन्ते । चमसऽअध्वर्यवः । एव । ते ॥ ३ ॥

तेषाम् । न । कः । चन । अहोता ॥ ४ ॥

यत् । वै । अतिथिऽपतिः । अतिथीन् । परिऽविष्य । गृहान् । उपऽउदैति । अवऽभृथम् । एव । तत् । उपऽअवैति ॥ ५ ॥

यत् । सभागयति । दक्षिणाः । सभागयति । यत् । अनुऽतिष्ठते । उत्ऽअवस्यति । एव । तत् ॥

PARYĀYA - VI

## Atithiḥ - Vidyā

**IX.6(6).1** When he (the host) summons the distributor, he is, as if, making the ejaculatory call (e.g., Om, svāhā etc.) (śrāvayati).

**IX.6(6).2** When (the distributor) answers the call, (prati-śṛnoti) that is, as if, the ejaculatory response. (pratyāśrava) (pratiśrāvayati)

**IX.6(6).3** When the attendants serving the food (parivestāvaḥ) carrying vessels, the former ones and the latter ones, come in, they are, as if, the priests, who arrange the cups of soma-juice.

**IX.6(6).4** None of them is, who is not an invoker (hotā).

**IX.6(6).5** When a host householder, getting the meals served to guests, goes up into his house, he indeed goes to the purificatory bath (avabhṛtha).

**IX.6(6).6** When he apportions (sabhāgavati) them, he, as if, apportions the priestly fees (dakṣinā); when he follows them out, he, as if, is departing from the place of sacrifice.

स उपहूतः पृथिव्यां भक्षयत्युपहूतस्तस्मिन्यत्पृथिव्यां विश्वरूपम् ॥७॥
स उपहूतोन्तरिक्षे भक्षयत्युपहूतस्तस्मिन्यदन्तरिक्षे विश्वरूपम् ॥८॥
स उपहूतो दिवि भक्षयत्युपहूतस्तस्मिन्यद्दिवि विश्वरूपम् ॥९॥
स उपहूतो देवेषु भक्षयत्युपहूतस्तस्मिन्यद्देवेषु विश्वरूपम् ॥१०॥
स उपहूतो लोकेषु भक्षयत्युपहूतस्तस्मिन्यल्लोकेषु विश्वरूपम् ॥११॥
स उपहूत उपहूतः ॥१२॥
आप्नोतीमं लोकमाप्नोत्यमुम् ॥१३॥

सः । उपऽहूतः । पृथिव्याम् । भक्षयति । उपऽहूतः । तस्मिन् । यत् । पृथिव्याम् । विश्वऽरूपम् ॥

सः । उपऽहूतः । अन्तरिक्षे । भक्षयति । उपऽहूतः । तस्मिन् । यत् । अन्तरिक्षे । विश्वऽरूपम् ।

सः । उपऽहूतः । दिवि । भक्षयति । उपऽहूतः । तस्मिन् । यत् । दिवि । विश्वऽरूपम् ॥ ९ ॥

सः । उपऽहूतः । देवेषु । भक्षयति । उपऽहूतः । तस्मिन् । यत् । देवेषु । विश्वऽरूपम् ॥१०॥

सः । उपऽहूतः । लोकेषु । भक्षयति । उपऽहूतः । तस्मिन् । यत् । लोकेषु । विश्वऽरूपम् ॥

सः । उपऽहूतः । उपऽहूतः ॥ १२ ॥

आप्नोति । इमम् । लोकम् । आप्नोति । अमुम् ॥ १३ ॥

**IX.6(6).7** He, on this earth, being invited, feeds well, being invited to that which wears all the forms on the earth (pṛthivyām).

**IX.6(6).8** He, in the midspace, being invited, feeds well, being invited to that which wears all the forms in the midspace (antarikṣa)

**IX.6(6).9** He, in the heaven, being invited, feeds well, being invited to that which wears all the forms in the heaven (divi).

**IX.6(6).10** He, among the enlightened ones, being invited feeds well, being invited to that which wears all the forms in the enlightened ones (deveṣu).

**IX.6(6).11** He, among the people, being invited, feeds well, being invited to that which wears all the forms in the people (lokeṣu).

**IX.6(6).12** He invited here, invited there and every-where (upahūta - upahūtaḥ).

**IX.6(6).13** Wins this world and wins the yonder one; (āpnoti imam; āpnoti amum)

ज्योतिष्मतो लोकाञ्जयति य एवं वेद ॥१४॥

ज्योतिष्मतः । लोकान् । जयति । यः । एवम् । वेद ॥ १४ ॥

( ७ ) सप्तमं सूक्तम्

पर्यायः

(१-२६) षड्विंशत्यृचस्यास्य पर्यायस्य ब्रह्मा ऋषिः। गौर्देवता। (१) प्रथमर्च आर्ची बृहती, (२) द्वितीयाया आर्च्युष्णिक्, (३, ५) तृतीयापञ्चम्योरार्च्यनुष्टुप्, (४, १४-१६) चतुर्थ्याश्चतुर्दश्यादितृचस्य च साम्नी बृहती, (६, ८ षष्ठषष्टम्योरासुरी गायत्री, (७) सप्तम्यास्त्रिपदा पिपीलिकमध्या निचृद्गायत्री, (९, १३) नवमीत्रयोदश्योः साम्नी गायत्री, (१०) दशम्याः पुर उष्णिक्, (११-१२, १७, २५) एकादशीद्वादशीसप्तदशी-पञ्चविंशीनां साम्न्युष्णिक्, (१८, २२) अष्टादशीद्वाविंश्योरेकपदासुरी जगती, (१९) एकोनविंश्या एकपदासुरी पङ्क्तिः, (२०) विंश्या याजुषी जगती, (२१) एकविंश्या आसुर्यनुष्टुप्, (२३) त्रयोविंश्या एकपदासुरी बृहती, (२४) चतुर्विंश्याः साम्नी भुरिग्बृहती, (२६) षड्विंश्याश्च साम्नी त्रिष्टुप् छन्दांसि।

अनुक्तपादा द्विपदाः ॥

प्रजापतिश्च परमेष्ठी च शृङ्गे इन्द्रः शिरो अग्निर्ललाटं यमः कृकाटम् ॥१॥
सोमो राजा मस्तिष्को द्यौरुत्तरहनुः पृथिव्यधरहनुः ॥२॥
विद्युज्जिह्वा मरुतो दन्ता रेवतीर्ग्रीवाः कृत्तिका स्कन्धा घर्मो वहः ॥३॥
विश्वं वायुः स्वर्गो लोकः कृष्णद्रं विधरणी निवेष्यः ॥४॥
श्येनः क्रोडो३ऽन्तरिक्षं पाजस्यं१ बृहस्पतिः ककुद्बृहतीः कीकसाः ॥५॥

प्रजाऽपतिः । च । परमेऽस्थी । च । शृङ्गे इति । इन्द्रः । शिरः । अग्निः । ललाटम् । यमः । कृकाटम् ॥ १ ॥

सोमः । राजा । मस्तिष्कः । द्यौः । उत्तरऽहनुः । पृथिवी । अधरऽहनुः ॥ २ ॥

विऽद्युत् । जिह्वा । मरुतः । दन्ताः । रेवतीः । ग्रीवाः । कृत्तिकाः । स्कन्धाः । घर्मः । वहः ॥

विश्वम् । वायुः । स्वःऽगः । लोकः । कृष्णऽद्रम् । विऽधरणी । निऽवेष्यः ॥ ४ ॥

श्येनः । क्रोडः । अन्तरिक्षम् । पाजस्यम् । बृहस्पतिः । ककुत् । बृहतीः । कीकसाः ॥५॥

**X.6(6).14** He, who knows this, conquers the worlds shining with light (jyotiṣmataḥ lokaṅ)

PARYĀYA

### Gauḥ

**IX.7.1** The Lord of creatures (Prajāpati) and Lord in highest abode are his two horns; the resplendent Lord (Indra) is his head; the adorable Lord (Agni) is his forehead; the Controller Lord (Yama) is his joint of the neck.

**IX.7.2** The blissful Lord (Soma), the sovereign, is his brain; heaven (dyauḥ) is his upper jaw (hanu), and earth the lower jaw (adhara hanu).

**IX.7.3** Lightning is his tongue (jihvā); the cloud-bearing winds are his teeth (dantāḥ); Revatis are his tendons (grīvāḥ) of the neck; Kṛttikas are his shoulders (skandhāḥ); the cauldron (ghuma) of hot drink is his withers or shoulder-bar (vahaḥ).

**IX.7.4** The world is his vital breath (vāyuḥ), the world of eternal bliss (svarga) is his this world (kṛṣṇadra) are his tendons; the supporting earth is his back-bone.

**IX.7.5** The śyena (hawk) is his breast; the midspace is his belly; the Lord supreme is his hump (kakuda); the bṛhatī verses are his breast-bones (kīkasāḥ).

देवानां पत्नीः पृष्टय उपसदः पर्शवः ॥६॥
मित्रश्च वरुणश्चांसौ त्वष्टा चार्यमा च दोषणी महादेवो बाहू ॥७॥
इन्द्राणी भसद्वायुः पुच्छं पवमानो बालाः ॥८॥
ब्रह्म च क्षत्रं च श्रोणी बलमूरू ॥९॥
धाता च सविता चाष्ठीवन्तौ जङ्घा गन्धर्वा अप्सरसः कुष्ठिका अदितिः शफाः ॥१०॥
चेतो हृदयं यकृन्मेधा व्रतं पुरीतत् ॥११॥
क्षुत्कुक्षिरिरा वनिष्ठुः पर्वताः प्लाशयः ॥१२॥

देवानाम् । पत्नीः । पृष्टयः । उपऽसदः । पर्शवः ॥ ६ ॥

मित्रः । च । वरुणः । च । अंसौ । त्वष्टा । च । अर्यमा । च । दोषणी इति । महाऽदेवः । बाहू इति ॥ ७ ॥

इन्द्राणी । भसत् । वायुः । पुच्छम् । पवमानः । बालाः ॥ ८ ॥

ब्रह्म । च । क्षत्रम् । च । श्रोणी इति । बलम् । ऊरू इति ॥ ९ ॥

धाता । च । सविता । च । अष्ठीवन्तौ । जङ्घाः । गन्धर्वाः । अप्सरसः । कुष्ठिकाः । अदितिः । शफाः ॥ १० ॥

चेतः । हृदयम् । यकृत् । मेधा । व्रतम् । पुरिऽतत् ॥ ११ ॥

क्षुत् । कुक्षिः । इरा । वनिष्ठुः । पर्वताः । प्लाशयः ॥ १२ ॥

**IX.7.6** The mistresses of the bounties of Nature are his side-bones; upasada ceremonies are his ribs.

**IX.7.7** The friendly Lord (Mitra) and the venerable Lord (Varuṇa) are his two shoulder-blades (aṅsau); the universal mechanic (tvaṣṭṛ) and the ordainer Lord (Aryaman) are his two fore-arms; Mahādeva (the great Lord) is his two arms.

**IX.7.8** Indrāṇī (the strength of the resplendent self) is his hinder part; the wind (vāyu) is his tail (puccha); the pressed out (pavamānaḥ) soma juice is his hair (vālāḥ).

**IX.7.9** The intellectual power (Brahma) and the ruling power (kṣattra) are his two hips (śronī); the strength (balam) is his two thighs (krū).

**IX.7.10** The sustainer Lord (dhātṛ) and the impeller Lord (Savitṛ) are his two knee-bones (aṣṭhīvantau);gandharvas (sustainers of the earth) are his shanks (jaṁghā); apsarasas are his cavities of loins (kuṣthikaḥ) and aditi (the indivisible earth) his hooves (śaphāḥ).

**IX.7.11** Thoughtfulness (cetaḥ) is his heart (hṛdaya); intelligence (medhā) is his liver (yakṛt); and the vow (vrata) is his intestines (purītat).

**IX.7.12** Hunger (kṣut) is his belly (kukṣiḥ), enjoyment (irā) his rectum (vaniṣṭhuḥ) and mountains his prostrate gland (plaśiḥ).

क्रोधो वृक्कौ मन्युराण्डौ प्रजा शेपः ॥१३॥
नदी सूत्री वर्षस्य पतय स्तना स्तनयित्नुरूधः ॥१४॥
विश्वव्यचाश्चर्मौषधयो लोमानि नक्षत्राणि रूपम् ॥१५॥
देवजना गुदा मनुष्या आन्त्राण्यत्रा उदरम् ॥१६॥
रक्षांसि लोहितमितरजना ऊबध्यम् ॥१७॥
अभ्रं पीवो मज्जा निधनम् ॥१८॥
अग्निरासीन उत्थितोऽश्विना ॥१९॥

क्रोधः । वृक्कौ । मन्युः । आण्डौ । प्रऽजा । शेपः ॥ १३ ॥

नदी । सूत्री । वर्षस्य । पतयः । स्तनाः । स्तनयित्नुः । ऊधः ॥ १४ ॥

विश्वऽव्यचाः । चर्म । ओषधयः । लोमानि । नक्षत्राणि । रूपम् ॥ १५ ॥

देवऽजनाः । गुदाः । मनुष्याः । आन्त्राणि । अत्राः । उदरम् ॥ १६ ॥

रक्षांसि । लोहितम । इतरऽजनाः । ऊबध्यम् ॥ १७ ॥

अभ्रम् । पीवः । मज्जा । निऽधनम् ॥ १८ ॥

अग्निः । आसीनः । उत्थितः । अश्विना ॥ १९ ॥

**IX.7.13** Anger is his two kidneys (vṛkkau), ardour (manyuḥ) his two testicles (aṇḍau), and progeny (prajā) his penis (śepaḥ).

**IX.7.14** River is the spermatic cord (sūtrī), the lords of rain the teats, and thunder-cloud (stanayitru) the udder (ūdhaḥ).

**IX.7.15** All encompassing space is his skin, plants his small hair, constellations of stars (nakṣatra) his form.

**IX.7.16** Godly people (devajanāḥ) are his large intestine (gudā), men his entrails (antrāṇi) and the devourers his abdomen (udara).

**IX.7.17** The demoniac persons (rakṣāñsi) are his blood, and other-folks (itara-janāh) his undigested food in the bowels.

**IX.7.18** The cloud (abhram) is his fat (piva), and singing the finals of Samans his marrow (majjā).

**IX.7.19** While sitting, he is the fire-divine (Agni); when risen up, he is the twins-divine (aṣvins).

इन्द्रः प्राङ्तिष्ठन्दक्षिणा तिष्ठन्यमः ॥२०॥
प्रत्यङ्तिष्ठन्धातोदङ्तिष्ठन्त्सविता ॥२१॥
तृणानि प्राप्तः सोमो राजा ॥२२॥
मित्र ईक्षमाण आवृत्त आनन्दः ॥२३॥
युज्यमानो वैश्वदेवो युक्तः प्रजापतिर्विमुक्तः सर्वम् ॥२४॥
एतद्वै विश्वरूपं सर्वरूपं गोरूपम् ॥२५॥
उपैनं विश्वरूपाः सर्वरूपाः पशवस्तिष्ठन्ति य एवं वेद ॥२६॥

इन्द्रः । प्राङ् । तिष्ठन् । दक्षिणा । तिष्ठन् । यमः ॥ २० ॥

प्रत्यङ् । तिष्ठन् । धाता । उदङ् । तिष्ठन् । सविता ॥ २१ ॥

तृणानि । प्रऽआप्तः । सोमः । राजा ॥ २२ ॥

मित्रः । ईक्षमाणः । आऽवृत्तः । आऽनन्दः ॥ २३ ॥

युज्यमानः । वैश्वऽदेवः । युक्तः । प्रजाऽपतिः । विऽमुक्तः । सर्वम् ॥ २४ ॥

एतत् । वै । विश्वऽरूपम् । सर्वऽरूपम् । गोऽरूपम् ॥ २५ ॥

उप । एनम् । विश्वऽरूपाः । सर्वऽरूपाः । पशवः । तिष्ठन्ति । यः । एवम् । वेद ॥ २६ ॥

**IX.7.20** Standing eastward (prāṅtiṣṭham) he is the resplendent Lord, standing southward (dakşiṇā) the controlling Lord (Yama).

**IX.7.21** Standing westward (pratyaṅ) the sustainer Lord (Dhātṛ) standing northward (udaṅ) the impeller Lord (Savitṛ).

**IX..7.22** Having received grass he is the blissful Lord (Soma) the sovereign.

**IX.7.23** Looking about his (ikṣamāṇaḥ), he is the friendly Lord (Mitraḥ) (mitra); when turned about (āvṛttaḥ), he is delight.

**IX.7.24** When being yoked (yujyamānaḥ), he is the form of all the bounties of nature; when yoked (yuktaḥ)he is the Lord of creatures; when unyoked and released (viyuktaḥ), he is everything.

**IX.7.25** This, indeed, wears all the forms, wears every form and wears the ox-form.

**IX.7.26** Cattle of all forms and of every form come to him, who knows this.

## ( ८ ) अष्टमं सूक्तम्

(१-२२) द्वाविंशत्यृचस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः । सर्वशीर्षामयाद्यामयापाकरणं देवता । (१-११, १३-१४, १६-२०) प्रथमाद्येकादशर्चा त्रयोदशीचतुर्दश्योः षोडश्यादिपञ्चानाञ्चानुष्टुप्, (१२) द्वादश्या अनुष्टुब्गर्भा ककुम्मती चतुष्पदोष्णिक्, (१५) पञ्चदश्या विराडनुष्टुप्, (२१) एकविंश्या विराट्पथ्या-बृहती, (२२) द्वाविंश्याश्च पथ्यापङ्क्तिश्छन्दांसि ॥

शीर्षक्तिं शीर्षामयं कर्णशूलं विलोहितम् ।
सर्वं शीर्षण्यं१ ते रोगं बहिर्निर्मन्त्रयामहे ॥१॥
कर्णाभ्यां ते कङ्कूषेभ्यः कर्णशूलं विसल्पकम् ।
सर्वं शीर्षण्यं१ ते रोगं बहिर्निर्मन्त्रयामहे ॥२॥
यस्य हेतोः प्रच्यवते यक्ष्मः कर्णत आस्यतः ।
सर्वं शीर्षण्यं१ ते रोगं बहिर्निर्मन्त्रयामहे ॥३॥
यः कृणोति प्रमोतमन्धं कृणोति पूरुषम् ।
सर्वं शीर्षण्यं१ ते रोगं बहिर्निर्मन्त्रयामहे ॥४॥
अङ्गभेदमङ्गज्वरं विश्वाङ्ग्यं१ विसल्पकम् ।
सर्वं शीर्षण्यं१ ते रोगं बहिर्निर्मन्त्रयामहे ॥५॥
यस्य भीमः प्रतीकाश उद्वेपयति पूरुषम् ।
तक्मानं विश्वशारदं बहिर्निर्मन्त्रयामहे ॥६॥

शीर्षक्तिम् । शीर्षऽआमयम् । कर्णऽशूलम् । विऽलोहितम् ।
सर्वम् । शीर्षण्यम् । ते । रोगम् । बहिः । निः । मन्त्रयामहे ॥ १ ॥

कर्णाभ्याम् । ते । कङ्कूषेभ्यः । कर्णऽशूलम् । विऽसल्पकम् । ० ॥ २ ॥

यस्य । हेतोः । प्रऽच्यवते । यक्ष्मः । कर्णतः । आस्यतः । ० ॥ ३ ॥

यः । कृणोति । प्रऽमोतम् । अन्धम् । कृणोति । पुरुषम् । ० ॥ ४ ॥

अङ्गऽभेदम् । अङ्गऽज्वरम् । विश्वऽअङ्ग्यम् । विऽसल्पकम् ।
सर्वम् । शीर्षण्यम् । ते । रोगम् । बहिः । निः । मन्त्रयामहे ॥ ५ ॥

यस्य । भीमः । प्रतिऽकाशः । उत्ऽवेपयति । पुरुषम् ।
तक्मानम् । विश्वऽशारदम् । बहिः । निः । मन्त्रयामहे ॥ ६ ॥

**Removal of all head troubles and diseases**

**IX.8.1** Headache, vertigo, otalgia, anaemia - all your ailments of head we expel by our consultation, examination and treatment (bahir nimantra yamahe).

**IX.8.2** From your two ears, from the inner parts of your ears, the piercing earache, - all your ailments of head we expel by our consultation.

**IX.8.3** Due to which the wasting disease trickles down from your ear and mouth - all your ailments of head we expel by our consultation.

**IX.8.4** That which makes a man dumb (deaf) and blind - all your ailment of head we expel by our consultation.

**IX.8.5** The malady causing soreness of limbs, feverishness of limbs, embracing all the limbs, and very painful - all your ailments of head we expel by our consultations.

**IX.8.6** Whose awful aspect makes a man tremble violently, that fever, full of all the chill, we expel by our consultation.

य ऊरू अनुसर्पत्यथो एति गवीनिके ।
यक्ष्मं ते अन्तरङ्गेभ्यो बहिर्निर्मन्त्रयामहे ॥७॥
यदि कामादपकामाद्धृदयाज्जायते परि ।
हृदो बलासमङ्गेभ्यो बहिर्निर्मन्त्रयामहे ॥८॥
हरिमाणं ते अङ्गेभ्योप्वामन्तरोदरात् ।
यक्ष्मोधामन्तरात्मनो बहिर्निर्मन्त्रयामहे ॥९॥
आसो बलासो भवतु मूत्रं भवत्वामयत् ।
यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत् ॥१०॥
बहिर्बिलं निर्द्रवतु काहाबाहं तवोदरात् ।
यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत् ॥११॥
उदरात्ते क्लोम्नो नाभ्या हृदयादधि ।
यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत् ॥१२॥

यः । ऊरू इति । अनुऽसर्पति । अथो इति । एति । गवीनिके इति ।
यक्ष्मम् । ते । अन्तः । अङ्गेभ्यः । बहिः । निः । मन्त्रयामहे ॥ ७ ॥
यदि । कामात् । अपऽकामात् । हृदयात् । जायते । परि ।
हृदः । बलासम् । अङ्गेभ्यः । बहिः । निः । मन्त्रयामहे ॥ ८ ॥
हरिमाणम् । ते । अङ्गेभ्यः । अप्वाम् । अन्तरा । उदरात् ।
यक्ष्मःऽधाम् । अन्तः । आत्मनः । बहिः । निः । मन्त्रयामहे ॥ ९ ॥
आसः । बलासः । भवतु । मूत्रम् । भवतु । आमयत् ।
यक्ष्माणाम् । सर्वेषाम् । विषम् । निः । अवोचम् । अहम् । त्वत् ॥ १० ॥
बहिः । बिलम् । निः । द्रवतु । काहाबाहम् । तव । उदरात् । ० ॥ ११ ॥
उदरात् । ते । क्लोम्नः । नाभ्याः । हृदयात् । अधि ।
यक्ष्माणाम् । सर्वेषाम् । विषम् । निः । अवोचम् । अहम् । त्वत् ॥ १२ ॥

**IX.8.7** That which creeps along the two thighs and later goes to the two groins, that your wasting disease, we expel out of your inner parts by our consultation.

**IX.8.8** If it is caused to sexual indulgence (kāma), or due to perverted sex, and has affected the heart, that weakening disease of heart, we expel out of your limbs by our consultation.

**IX.8.9** The jaundice (hari māṇam) out of your limbs, the dropsy out of your abdomen (āpvam-antaro darat), and the tendency towards tuberculosis out of your constitution of body, we expel by our consultation.

**IX.8.10** May the wasting disease be thrown out as phlegm; may it follow out as morbid urine; the poison of all wasting diseases, I have expelled from you by my advice.

**IX.8.11** May the rumbling sound in your bowels flow out of your abdomen through orifice; the poison of all wasting diseases, I have expelled from you by my advice.

**IX.8.12** Out of your stomach, out of your right lung, out of your navel and out of your heart, the poison of all wasting diseases, I have expelled from you by my advice.

याः सीमानं विरुजन्ति मूर्धानं प्रत्यर्षणीः ।
अहिंसन्तीरनामया निर्द्रवन्तु बहिर्बिलम् ॥१३॥
या हृदयमुपर्षन्त्यनुतन्वन्ति कीकसाः ।
अहिंसन्तीरनामया निर्द्रवन्तु बहिर्बिलम् ॥१४॥
याः पार्श्वे उपर्षन्त्यनुनिक्षन्ति पृष्टीः ।
अहिंसन्तीरनामया निर्द्रवन्तु बहिर्बिलम् ॥१५॥
यास्तिरश्चीरुपर्षन्त्यर्षणीर्वक्षणासु ते ।
अहिंसन्तीरनामया निर्द्रवन्तु बहिर्बिलम् ॥१६॥
या गुदा अनुसर्पन्त्यान्त्राणि मोहयन्ति च ।
अहिंसन्तीरनामया निर्द्रवन्तु बहिर्बिलम् ॥१७॥
या मज्ज्ञो निर्धयन्ति परूंषि विरुजन्ति च ।
अहिंसन्तीरनामया निर्द्रवन्तु बहिर्बिलम् ॥१८॥

याः । सीमानम् । विऽरुजन्ति । मूर्धानम् । प्रति । अर्षणीः । 
अहिंसन्तीः । अनामयाः । निः । द्रवन्तु । बहिः । बिलम् ॥ १३ ॥

याः । हृदयम् । उपऽऋषन्ति । अनुऽतन्वन्ति । कीकसाः । ० ॥ १४ ॥

याः । पार्श्वे इति । उपऽऋषन्ति । अनुऽनिक्षन्ति । पृष्टीः । ० ॥ १५ ॥

याः । तिरश्चीः । उपऽऋषन्ति । अर्षणीः । वक्षणासु । ते । ० ॥ १६ ॥

याः । गुदाः । अनुऽसर्पन्ति । आन्त्राणि । मोहयन्ति । च । ० ॥ १७ ॥

याः । मज्ज्ञः । निःऽधयन्ति । परूंषि । विऽरुजन्ति । च ।
अहिंसन्तीः । अनामयाः । निः । द्रवन्तु । बहिः । बिलम् ॥ १८ ॥

**IX.8.13** They, that cause severe pain in the nape of neck, and that pierce through to the crown, may those (diseases) flow out through the orifice without causing any harm or sickness.

**IX.8.14** They, that pierce through to the heart and spread out to the breast-bones may those (diseases) flow out through the orifice without causing any harm or sickness.

**IX.8.15** They, that pierce through to the sides and stab into the ribs may those (diseases) flow out through the orifice without causing any harm or sickness.

**IX.8.16** They, that pierce through crosswise, and pierce through to your stomach may those (diseases) flow out through the orifice without causing any harm or sickness.

**IX.8.17** They, that creep through the bowels and make the intestines lethargic may those (diseases) flow out through the orifice without causing any harm or sickness.

**IX.8.18** They, that suck the marrows out and cause severe pain in the joints may those (diseases) flow out through the orifice without causing any harm or sickness.

ये अङ्गानि मदयन्ति यक्ष्मासो रोपणास्तव ।
यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत् ॥१९॥
विसल्पस्य विद्रधस्य वातीकारस्य वालजेः ।
यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत् ॥२०॥
पादाभ्यां ते जानुभ्यां श्रोणिभ्यां परि भंससः ।
अनूकादर्षणीरुष्णिहाभ्यः शीर्ष्णो रोगमनीनशम् ॥२१॥
सं ते शीर्ष्णः कपालानि हृदयस्य च यो विधुः ।
उद्यन्नादित्य रश्मिभिः शीर्ष्णो रोगमनीनशोऽङ्गभेदमशीशमः ॥२२॥

ये । अङ्गानि । मदयन्ति । यक्ष्मासः । रोपणाः । तव ।
यक्ष्माणाम् । सर्वेषाम् । विषम् । निः । अवोचम् । अहम् । त्वत् ॥ १९ ॥
विऽसल्पस्य । विऽद्रधस्य । वातीऽकारस्य । वा । अलजेः ।
यक्ष्माणाम् । सर्वेषाम् । विषम् । निः । अवोचम् । अहम् । त्वत् ॥ २० ॥
पादाभ्याम् । ते । जानुऽभ्याम् । श्रोणिऽभ्याम् । परि । भंससः ।
अनूकात् । अर्षणीः । उष्णिहाभ्यः । शीर्ष्णः । रोगम् । अनीनशम् ॥ २१ ॥
सम् । ते । शीर्ष्णः । कपालानि । हृदयस्य । च । यः । विधुः । उत्ऽयन् । आदित्य ।
रश्मिऽभिः । शीर्ष्णः । रोगम् । अनीनशः । अङ्गऽभेदम् । अशीशमः ॥ २२ ॥

### (९) नवमं सूक्तम्

(१-२२) द्वाविंशत्यृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । वाम आदित्योऽध्यात्मञ्च देवताः । (१-११, १३, १५, १७) प्रथमाद्येकादशर्चा त्रयोदशीपञ्चदशीसप्तदशीनाञ्च त्रिष्टुप्, (१२, १४, १६, १८) द्वादशीचतुर्दशीषोडश्यष्टादशीनाञ्च जगती छन्दसी ॥

अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः ।
तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥१॥

अस्य । वामस्य । पलितस्य । होतुः । तस्य । भ्राता । मध्यमः । अस्ति । अश्नः ।
तृतीयः । भ्राता । घृतऽपृष्ठः । अस्य । अत्र । अपश्यम् । विश्पतिम् । सप्तऽपुत्रम् ॥ १ ॥

**IX.8.19** Your growing wasting diseases, that intoxicate (madayanti) your limbs, the poison of all wasting diseases, I have expelled from you by my advice.

**IX.8.20** Of the very painful, of the catarrhal, of the rheumatic or of the ophthalmic - the poison of all wasting diseases I have expelled from you by my advice and treatment.

**IX.8.21** From your feet, from the knees, from the hips, from the anus, from the spine, from the napes of the neck, I have banished the piercing pains and the ailments of your head.

**IX.8.22** That ailment of the head, which racked the crown of your head and also the heart, the rising sun (udayan āditya raśmibhiḥ) has caused to vanish and put an end to the soreness of your limbs.

## Ādityaḥ - adhyātmam

**IX.9.1** The all-pervading air is the middle brother of this Sun, the benign priest, who is worthy of being propitiated and who is protector of all; and the butter-fed fire, his third brother. Of them, I behold the Sun, who has seven sons and is the lord of all subjects.(Also Ṛg. I.164.1)

सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा ।
त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः ॥२॥
इमं रथमधि ये सप्त तस्थुः सप्तचक्रं सप्त वहन्त्यश्वाः ।
सप्त स्वसारो अभि सं नवन्त यत्र गवां निहिता सप्त नामा ॥३॥
को ददर्श प्रथमं जायमानमस्थन्वन्तं यदनस्था बिभर्ति ।
भूम्या असुरसृगात्मा क्व स्वित्को विद्वांसमुप गात्प्रष्टुमेतत् ॥४॥
इह ब्रवीतु य ईमङ्ग वेदास्य वामस्य निहितं पदं वेः ।
शीर्ष्णः क्षीरं दुह्रते गावो अस्य वव्रिं वसाना उदकं पदापुः ॥५॥
पाकः पृच्छामि मनसाविजानन्देवानामेना निहिता पदानि ।
वत्से बष्कयेधि सप्त तन्तून्वि तत्निरे कवय ओतवा उ ॥६॥
अचिकित्वांश्चिकितुषश्चिदत्र कवीन्पृच्छामि विद्मनो न विद्वान् ।
वि यस्तस्तम्भ षडिमा रजांस्यजस्य रूपे किमपि स्विदेकम् ॥७॥

सप्त । युञ्जन्ति । रथम् । एकऽचक्रम् । एकः । अश्वः । वहति । सप्तऽनामा ।
त्रिऽनाभि । चक्रम् । अजरम् । अनर्वम् । यत्र । इमा । विश्वा । भुवना । अधि । तस्थुः ॥
इमम् । रथम् । अधि । ये । सप्त । तस्थुः । सप्तऽचक्रम् । सप्त । वहन्ति । अश्वाः ।
सप्त । स्वसारः । अभि । सम् । नवन्त । यत्र । गवाम् । निऽहिता । सप्त । नाम ॥ ३ ॥
कः । ददर्श । प्रथमम् । जायमानम् । अस्थन्ऽवन्तम् । यत् । अनस्था । बिभर्ति ।
भूम्याः । असुः । असृक् । आत्मा । क्व । स्वित् । कः । विद्वांसम् । उप । गात् । प्रष्टुम् । एतत् ॥
इह । ब्रवीतु । यः । ईम् । अङ्ग । वेद । अस्य । वामस्य । निऽहितम् । पदम् । वेः ।
शीर्ष्णः । क्षीरम् । दुह्रते । गावः । अस्य । वव्रिम् । वसानाः । उदकम् । पदा । अपुः ॥ ५ ॥
पाकः । पृच्छामि । मनसा । अविऽजानन् । देवानाम् । एना । निऽहिता । पदानि ।
वत्से । बष्कये । अधि । सप्त । तन्तून् । वि । तत्निरे । कवयः । ओतवै । ऊं इति ॥ ६ ॥
अचिकित्वान् । चिकितुषः । चित् । अत्र । कवीन् । पृच्छामि । विद्मनः । न । विद्वान् ।
वि । यः । तस्तम्भ । षट् । इमा । रजांसि । अजस्य । रूपे । किम् । अपि । स्वित् । एकम् ॥

**IX.9.2** They yoke the seven to the one-wheeled car. One horse, named sapta, bears it along; the three-axled wheel (or the wheel with three hubs) is undecaying; it is always firm in its grip; and in it, all these regions of the universe abide. (Also Ṛg. I.164.2)

**IX.9.3** The seven, who preside over the seven-wheeled chariot, are the seven horses who draw it; seven sisters ride together, and in it are deposited the seven forms of sacrifices or utterances. (Also Ṛg. I.164.3)

**IX.9.4** Who was the one, who could see the first-born ? Who was the boneless from which the long-ones were produced ? Where was the breath, blood and the soul of this earth ? Who was the first to raise these questions to the sage ? (Also Ṛg. I.164.4)

**IX.9.5** Let him who knows this (truth) quickly declare it ; the stride of the sun turning to the left (i.e., the divine half) is hidden. His rays pour down water from aloft. Pulling on a visible form, they suck water with their feet. (Also Ṛg.I.164.7)

**IX.9.6** Immature (in understanding), undiscerning in mind, as I am, I inquire about those things (of those strides) which are hidden (even) from the super-powers. What are the seven threads in whom all abide, and which the sages have spread to envelop the sun ? (Also Ṛg. I.164.5)

**IX.9.7** Ignorant, I inquire of the sages who know (the truth); not as one knowing (do I inquire), for the sake of (gaining) knowledge; what is that one supreme, who has upheld these six spheres in the form of the unborn ? (Also Ṛg. I.164.6-Variation)

माता पितरमृत आ बभाज धीत्यग्रे मनसा सं हि जग्मे ।
सा बीभत्सुर्गर्भरसा निविद्धा नमस्वन्त इदुपवाकमीयुः ॥८॥
युक्ता मातासीद्धुरि दक्षिणाया अतिष्ठद्गर्भो वृजनीष्वन्तः ।
अमीमेद्वत्सो अनु गामपश्यद्विश्वरूप्यं त्रिषु योजनेषु ॥९॥
तिस्रो मातृस्त्रीन्पितृन्बिभ्रदेक ऊर्ध्वस्तस्थौ नेमव ग्लापयन्त ।
मन्त्रयन्ते दिवो अमुष्य पृष्ठे विश्वविदो वाचमविश्वविन्नाम् ॥१०॥
पञ्चारे चक्रे परिवर्तमाने यस्मिन्नातस्थुर्भुवनानि विश्वा ।
तस्य नाक्षस्तप्यते भूरिभारः सनादेव न च्छिद्यते सनाभिः ॥११॥
पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् ।
अथेमे अन्य उपरे विचक्षणे सप्तचक्रे षडर आहुरर्पितम् ॥१२॥
द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य ।
आ पुत्रा अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्च तस्थुः ॥१३॥

माता । पितरम् । ऋते । आ । बभाज । धीती । अग्रे । मनसा । सम् । हि । जग्मे ।
सा । बीभत्सुः । गर्भऽरसा । निऽविद्धा । नमस्वन्तः । इत् । उपऽवाकम् । ईयुः ॥ ८ ॥
युक्ता । माता । आसीत् । धुरि । दक्षिणायाः । अतिष्ठत् । गर्भः । वृजनीषु । अन्तः ।
अमीमेत् । वत्सः । अनु । गाम् । अपश्यत् । विश्वऽरूप्यम् । त्रिषु । योजनेषु ॥ ९ ॥
तिस्रः । मातृः । त्रीन् । पितृन् । बिभ्रत् । एकः । ऊर्ध्वः । तस्थौ । न । ईम् । अव । ग्लपयन्त ।
मन्त्रयन्ते । दिवः । अमुष्य । पृष्ठे । विश्वऽविदः । वाचम् । अविश्वऽविन्नाम् ॥ १० ॥
पञ्चऽअरे । चक्रे । परिऽवर्तमाने । यस्मिन् । आऽतस्थुः । भुवनानि । विश्वा ।
तस्य । न । अक्षः । तप्यते । भूरिऽभारः । सनात् । एव । न । छिद्यते । सऽनाभिः ॥११॥
पञ्चऽपादम् । पितरम् । द्वादशऽआकृतिम् । दिवः । आहुः । परे । अर्धे । पुरीषिणम् ।
अथ । इमे । अन्ये । उपरे । विऽचक्षणे । सप्तऽचक्रे । षट्ऽअरे । आहुः । अर्पितम् ॥१२॥
द्वादशऽअरम् । नहि । तत् । जराय । वर्वर्ति । चक्रम् । परि । द्याम् । ऋतस्य ।
आ । पुत्राः । अग्ने । मिथुनासः । अत्र । सप्त । शतानि । विंशतिः । च । तस्थुः ॥१३॥

**IX.9.8** The mother (earth) worships the father (the Sun) with holy rites for the sake of water, but he has anticipated (her desires) in his mind; whereupon, desirous of progeny, she is penetrated by the dews of impregnation, and, (all) expectant of abundance, exchange words of felicitations. (Also Ṛg. I.164.8- Variation)

**IX.9.9** The mother (i.e., space) comes in contact with southern yoke (southern hemisphere). Her embryo (water vapour) stood in the clouds. The calf (i.e., year) lowed (or desired to follow) the rays and saw the Sun in all the three zones of the heavens. (Also Ṛg. I.164.9)

**IX.9.10** The one alone (the Sun), having three mothers and three fathers, stands on high : none ever over-weary him; the (bounties of Nature) on the summit of the heaven take counsel, respecting him in a language all comprehending and extending to all. (Also Ṛg. I. 164.10)

**IX.9.11** All beings abide in this five-spokes revolving wheel; the heavy-loaded axle gets never heated; though in motion since the time eternal, it never breaks away from its hub.(Also Ṛg. I.164.13)

**IX.9.12** They call him (i.e., the Sun) a father having five feet and twelve forms, and one possessed of rain-water in the upper half of the heavens. And these and some others call (the Sun) as fixed in the wonderful chariot having seven wheels and six spokes. (Also Ṛg.I.164.12)

**IX.9.13** The twelve-spoked wheel of the true (sun) revolves round the heavens, and never (tends) to decay; seven hundred and twenty children in pairs, O (Sun) fire-divine, abide in it. (Also Ṛg. I.164.11)

सनेमि चक्रमजरं वि वावृत उत्तानायां दश युक्ता वहन्ति ।
सूर्यस्य चक्षू रजसैत्यावृतं यस्मिन्नातस्थुर्भुवनानि विश्वा ॥१४॥
स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न वि चेतदन्धः ।
कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात्स पितुष्पितासत् ॥१५॥
साकंजानां सप्तथमाहुरेकजं षडिद्यमा ऋषयो देवजा इति ।
तेषामिष्टानि विहितानि धामश स्थात्रे रेजन्ते विकृतानि रूपशः ॥१६॥
अवः परेण पर एनावरेण पदा वत्सं बिभ्रती गौरुदस्थात् ।
सा कद्रीची कं स्विदर्धं परागात्क्व स्वित्सूते नहि यूथे अस्मिन् ॥१७॥
अवः परेण पितरं यो अस्य वेदावः परेण पर एनावरेण ।
कवीयमानः क इह प्र वोचद्देवं मनः कुतो अधि प्रजातम् ॥१८॥
ये अर्वाञ्चस्ताँ उ पराच आहुर्ये पराञ्चस्ताँ उ अर्वाच आहुः ।
इन्द्रश्च या चक्रथुः सोम तानि धुरा न युक्ता रजसो वहन्ति ॥१९॥

सऽनेमि । चक्रम् । अजरम् । वि । ववृते । उत्तानायाम् । दश । युक्ताः । वहन्ति ।
सूर्यस्य । चक्षुः । रजसा । एति । आऽवृतम् । यस्मिन् । आऽतस्थुः । भुवनानि । विश्वा ॥१४॥

स्त्रियः । सतीः । तान् । ऊं इति । मे । पुंसः । आहुः । पश्यत् । अक्षण्ऽवान् । न । वि । चेतत् । अन्धः । कविः । यः । पुत्रः । सः । ईम् । आ । चिकेत । यः । ता । विऽजानात् । सः । पितुः । पिता । असत् ॥ १५ ॥

साकम्ऽजानाम् । सप्तथम् । आहुः । एकऽजम् । षट् । इत् । यमाः । ऋषयः । देवऽजाः । इति । तेषाम् । इष्टानि । विऽहितानि । धामऽशः । स्थात्रे । रेजन्ते । विऽकृतानि । रूपऽशः ॥

अवः । परेण । परः । एना । अवरेण । पदा । वत्सम् । बिभ्रती । गौः । उत् । अस्थात् । सा । कद्रीची । कम् । स्वित् । अर्धम् । परा । अगात् । क्व । स्वित् । सूते । नहि । यूथे । अस्मिन् ॥ १७ ॥

अवः । परेण । पितरम् । यः । अस्य । वेद । अवः । परेण । परः । एना । अवरेण । कविऽयमानः । कः । इह । प्र । वोचत् । देवम् । मनः । कुतः । अधि । प्रऽजातम् ॥

ये । अर्वाञ्चः । तान् । ऊं इति । पराचः । आहुः । ये । पराञ्चः । तान् । ऊं इति । अर्वाचः । आहुः । इन्द्रः । च । या । चक्रथुः । सोम । तानि । धुरा । न । युक्ताः । रजसः । वहन्ति ॥

**IX.9.14** The undecaying wheel with felly goes on revolving again and again. Ten (horses), yoked to the taut rein, carry it. The sun's eye, covered with vapour, goes forth, in which all the worlds abide. (Also Ṛg. I.164.14)

**IX.9.15** They through females, have been called males, so we hear. He, who has eyes, beholds; the blind man does not see; he, who is a sage-son, understands this; and he, who so discriminates, is the father of the father. (Also Ṛg. I.164.16)

**IX.9.16** Of these (seasons) born together, the seventh is called as born of one. The six alone are born in pairs; they move on and are born of god (the Sun). Sacrifices pertaining to them are performed at proper periods, and for him, who presides, the auxiliary sacrifices continue in various forms. (Also Ṛg. I.164.15)

**IX.9.17** The cow gets up, bearing the calf (which holds) the hind leg with the front and the front leg with the hind one. Whither does she come from ? To which half does she go ? Where does she deliver the young calf if not amidst this hard, indeed? (Also Ṛg. I.164.17)

**IX.9.18** Where is such a wise man, who knows its (calf's) father (the Sun), as one traversing the lower from the upper half (in respect of the celestial region) and the upper from the lower half (in respect of the terrestrial region)? Where is such a person, who knows from whence the shining mind (moon) has been born ? Let him come and tell us, if he knows. (Ṛg. I.164.18)

**IX.9.19** Those which (the sages) have termed descending (or moving in the lower half), they have also termed ascending (or moving in the upper half); and those they have termed ascending, they have also called descending; and those orbits which you, the moon and the sun, have made, bear along the worlds like (oxen) yoked to a chariot. (Also Ṛg. I.164.19)

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परि षस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ॥२०॥
यस्मिन्वृक्षे मध्वदः सुपर्णा निविशन्ते सुवते चाधि विश्वे ।
तस्य यदाहुः पिप्पलं स्वाद्वग्रे तन्नोन्नशद्यः पितरं न वेद ॥२१॥
यत्रा सुपर्णा अमृतस्य भक्षमनिमेषं विदथाभिस्वरन्ति ।
एना विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश ॥२२॥

द्वा । सुऽपर्णा । सुऽयुजा । सखाया । समानम् । वृक्षम् । परि । सस्वजाते इति ।
तयोः । अन्यः । पिप्पलम् । स्वादु । अत्ति । अनश्नन् । अन्यः । अभि । चाकशीति ॥२०॥

यस्मिन् । वृक्षे । मधुऽअदः । सुऽपर्णाः । निऽविशन्ते । सुवते । च । अधि । विश्वे । तस्य ।
यत् । आहुः । पिप्पलम् । स्वादु । अग्रे । तत् । न । उत् । नशत् । यः । पितरम् । न । वेद ॥

यत्र । सुऽपर्णाः । अमृतस्य । भक्षम् । अनिऽमेषम् । विदथा । अभिऽस्वरन्ति ।
एना । विश्वस्य । भुवनस्य । गोपाः । सः । मा । धीरः । पाकम् । अत्र । आ । विवेश ॥

( १० ) दशमं सूक्तम्

(१-२८) अष्टाविंशत्यृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । (१-२२, २४-२८) प्रथमादिद्वाविंशत्यृचाञ्चतुर्विंश्यादिपञ्चानाञ्च गौर्विराडध्यात्मञ्च, (२३) त्रयोविंश्याश्च मित्रावरुणौ देवताः । (१, ७, १४, १७-१८) प्रथमासप्तमीचतुर्दशीसप्तदश्यष्टादशीनां जगती, (२, २६-२७) द्वितीयाषड्विंशीसप्तविंशीनां भुरिक्त्रिष्टुप्, (३-६, ८-१३, १५-१६, १९-२०, २२, २३, २५, २८) तृतीयादिचतसृणामष्टम्यादिषण्णां पञ्चदशीषोडश्येकोनविंशीविंशीद्वाविंशीत्रयोविंशीपञ्चविंश्यष्टाविंशीनाञ्च त्रिष्टुप्, (२१) एकविंश्याः पञ्चपदातिशक्वरी, (२४) चतुर्विंश्याश्च चतुष्पदा पुरस्कृतिर्भुरिगतिजगती छन्दांसि ॥

यद्गायत्रे अधि गायत्रमाहितं त्रैष्टुभं वा त्रैष्टुभान्निरतक्षत ।
यद्वा जगज्जगत्याहितं पदं य इत्तद्विदुस्ते अमृतत्वमानशुः ॥१॥
गायत्रेण प्रति मिमीते अर्कमर्केण साम त्रैष्टुभेन वाकम् ।
वाकेन वाकं द्विपदा चतुष्पदाक्षरेण मिमते सप्त वाणीः ॥२॥

यत् । गायत्रे । अधि । गायत्रम् । आऽहितम् । त्रैस्तुभम् । वा । त्रैस्तुभात् । निःऽअतक्षत ।
यत् । वा । जगत् । जगति । आऽहितम् । पदम् । ये । इत् । तत् । विदुः । ते । अमृतऽत्वम् । आनशुः ॥ १ ॥

गायत्रेण । प्रति । मिमीते । अर्कम् । अर्केण । साम । त्रैस्तुभेन । वाकम् ।
वाकेन । वाकम् । द्विऽपदा । चतुःऽपदा । अक्षरेण । मिमते । सप्त । वाणीः ॥ २ ॥

**IX.9.20** Two birds, which are closely associated and intimate friends, perch on the same tree. Of them one (the lower soul) tastes of its fruits; the other (the supreme Lord) shines resplendently without tasting. (Also Ṛg. I.164.20)

**IX.9.21** On the tree, whereon the beautiful birds taste the sweetness, where they all rest and again bring forth their offsprings on its top, they say, the fruits are sweet, but the one, who knows not the father (of the universe) has no privilege to enjoy them. (Also Ṛg. I.164.22)

**IX.9.22** Where the beautiful birds (ryas) cognizant (of their functions), constantly sing the glory of eternal ambrosia, there has the Lord and steadfast protector of all beings consigned me, (through) immature in wisdom. (Also Ṛg. I.164.21)

### Gauḥ - Virāt - Adhyātmam

**IX.10.1** The basic metres are three - Gāyatrī(24), Triṣṭubha (44) and Jagatī (48 syllables). On Gāyatrī is the support of Gāyatra, on Triṣṭubha is the support of Traiṣṭubha and on Jagatī is the support of Jagatī. Those persons who know this secret know immortality,. (Also Ṛg. I.164.23)

**IX.10.2** (Gradual Evolution of seven metres from the three-Gāyatri, Triṣṭubh and Jagatī). From Gayatra, was created arka (the praise songs of the Ṛgveda), and from arka, were evolved the sāman chants, and from Traiṣṭubha came forward vākan, or the prose of the Yajurveda. And from vāka came out vākam of dvipadā and catuṣpadā (of two and four districhs) and finally from these syllables (akṣareṇa) came out all the seven vāks (vāṇīs) or the seven metres, through the instinctive genius of our Vedic Seers.

जग॑ता॒ सिन्धुं॑ दि॒व्य॑स्कभायद्रथंत॒रे सूर्यं॒ पर्य॑पश्यत् ।
गा॒य॒त्रस्य॑ स॒मिध॑स्ति॒स्र आ॑हु॒स्ततो॑ म॒ह्ना प्र रि॑रिचे महि॒त्वा ॥३॥
उप॑ ह्वये सु॒दुघां॑ धे॒नुमे॒तां सु॒हस्तो॑ गो॒धुगु॒त दोह॑देनाम् ।
श्रेष्ठं॑ स॒वं स॑वि॒ता सा॑विषन्नो॒भी॑द्धो घ॒र्मस्तदु॒ षु प्र वो॑चत् ॥४॥
हि॒ङ्कृ॒ण्व॒ती व॑सु॒पत्नी॒ वसू॑नां व॒त्सम॒िच्छन्ती॒ मन॑सा॒भ्याग॑ात् ।
दु॒हाम॒श्विभ्यां॒ पयो॑ अ॒घ्न्येयं सा वर्ध॑तां म॒ह॒ते सौभ॑गाय ॥५॥
गौर॑मीमेद॒भि व॒त्सं मि॒षन्तं॑ मू॒र्धानं॑ हिङ्ङ॑कृणो॒न्मात॒वा उ॑ ।
सृक्वा॑णं घ॒र्मम॒भि वा॑वशा॒ना मिमा॑ति मा॒युं पय॑ते॒ पयो॑भिः ॥६॥
अ॒यं स शि॑ङ्क्ते॒ येन॒ गौर॒भीवृ॑ता मिमा॑ति मा॒युं ध्व॒सना॒वधि॑ श्रि॒ता ।
सा चि॒त्तिभि॒र्नि हि च॒कार॒ मर्त्या॑न्वि॒द्युद्भव॑न्ती॒ प्रति॑ व॒व्रिमौ॑हत ॥७॥
अ॒नच्छ॑ये तु॒रगा॑तु जी॒वमेज॑द्ध्रु॒वं मध्य॒ आ प॒स्त्या॑नाम् ।
जी॒वो मृ॒तस्य॑ चरति स्व॒धाभि॒रम॑र्त्यो॒ मर्त्ये॑ना॒ सयो॑निः ॥८॥

जग॑ता । सिन्धु॑म् । दि॒वि । अ॒स्क॒भा॒य॒त् । र॒थ॒म्ऽत॒रे । सूर्य॑म् । परि॑ । अ॒प॒श्य॒त् ।
गा॒य॒त्रस्य॑ । स॒म्ऽइध॑ः । ति॒स्रः । आ॒हु॒ः । तत॑ः । म॒ह्ना । प्र । रि॒रि॒चे॒ । म॒हि॒ऽत्वा ॥ ३ ॥
उप॑ । ह्व॒ये॒ । सु॒ऽदुघा॑म् । धे॒नुम् । ए॒ताम् । सु॒ऽहस्त॑ः । गो॒ऽधुक् । उ॒त । दो॒ह॒त् । ए॒नाम् ।
श्रेष्ठ॑म् । स॒वम् । स॒वि॒ता । सा॒वि॒ष॒त् । न॒ः । अ॒भिऽइ॑द्धः । घ॒र्मः । तत् । ऊं॒ इति॑ । सु । प्र । वो॒च॒त् ॥
हि॒ङ्ऽकृ॒ण्व॒ती । व॒सु॒ऽपत्नी॑ । वसू॑नाम् । व॒त्सम् । इ॒च्छन्ती॑ । मन॑सा । अ॒भि॒ऽआगा॑त् ।
दु॒हाम् । अ॒श्विऽभ्या॑म् । पय॑ः । अ॒घ्न्या । इ॒यम् । सा । व॒र्ध॒ताम् । म॒ह॒ते । सौभ॑गाय ॥ ५ ॥
गौः । अ॒मी॒मे॒त् । अ॒भि । व॒त्सम् । मि॒षन्त॑म् । मू॒र्धान॑म् । हिङ् । अ॒कृ॒णो॒त् । मात॒वै । ऊं॒ इति॑ ।
सृक्वा॑णम् । घ॒र्मम् । अ॒भि । वा॒व॒शा॒ना । मिमा॑ति । मा॒युम् । पय॑ते । पय॑ःऽभिः ॥ ६ ॥
अ॒यम् । सः । शि॒ङ्क्ते॒ । येन॑ । गौः । अ॒भिऽवृ॑ता । मिमा॑ति । मा॒युम् । ध्व॒सनौ॑ । अधि॑ । श्रि॒ता ।
सा । चि॒त्तिऽभि॑ः । नि । हि । च॒कार॑ । मर्त्या॑न् । वि॒ऽद्युत् । भव॑न्ती । प्रति॑ । व॒व्रिम् । औ॒ह॒त ॥
अ॒नत् । श॒ये॒ । तु॒रऽगा॑तु । जी॒वम् । एज॑त् । ध्रु॒वम् । मध्ये॑ । आ । प॒स्त्या॑नाम् ।
जी॒वः । मृ॒तस्य॑ । च॒र॒ति॒ । स्व॒धाभि॑ः । अम॑र्त्यः । मर्त्ये॑न । स॒ऽयो॑निः ॥ ८ ॥

**IX.10.3** With the Jagati, i.e., jāgata Sāman the flood in heaven has been established (by the Creator), and He saw the Sun in the Rathantara Sāman. We are told that the Gāyatra Sāman had three logs (samidhaḥ) (for burning) and hence it excels (ririce) in majesty and vigour (mahnā and mahitvā).

**IX.10.4** I invoke the milch cow (the cloud) that is easily milked, that the handy milker may milk her; may the creator accept our excellent libation, that His Cosmic Energy (heat) may thereby increase; it is for this, verily, that I earnestly invoke him, (cow = cloud, milk = rain, milker = wind; and again cow = divine speech; milk = knowledge; milker = preceptor). (Also Ṛg. I.164.26)

**IX.10.5** She comes lowing, abounding in riches (products); desiring her calf in her mind; may this cow grant her milk to the cosmic twins; may she thrive for our great advantage. (calf = world or mankind; cow = cloud, milk = rain; and again calf = the seeker or self; cow = divine speech; milk = knowledge). (Also Ṛg. I.164.27)

**IX.10.6** The cow lows standing by the calf with eyes half-closed, and caresses the calf with affection, licking the forehead; she conveys her warm udders to the mouth of the calf; she bellows and feeds the calf with her milk. (Also Ṛg. I.164.28)

**IX.10.7** He, the calf, too, bellows, and encompassed by him is the cow uttering inarticulate sounds, as she repairs to her stall; (influenced) by her instincts, she behaves like human beings, and radiant as lightning, manifests her beautiful form. (calf = cloud; cow = earth; refers to the thunder-cloud encompassing the earth, with occasional flashes of lightning). (Also Ṛg. I.164.29)

**IX.10.8** The soul, endowed with life-breath and fast speed, goes out and the dead body is left behind in the house. The immortal soul, hitherto living in the mortal body, keeps on moving from life to life by its own nature. (Also Ṛg. I.164.30)

विधुं दद्राणं सलिलस्य पृष्ठे युवानं सन्तं पलितो जगार ।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ॥९॥
य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात् ।
स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिरा विवेश ॥१०॥
अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः ॥११॥
द्यौर्नः पिता जनिता नाभिरत्र बन्धुर्नो माता पृथिवी महीयम् ।
उत्तानयोश्चम्वो३र्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात् ॥१२॥
पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि वृष्णो अश्वस्य रेतः ।
पृच्छामि विश्वस्य भुवनस्य नाभिं पृच्छामि वाचः परमं व्योम ॥१३॥
इयं वेदिः परो अन्तः पृथिव्या अयं सोमो वृष्णो अश्वस्य रेतः ।
अयं यज्ञो विश्वस्य भुवनस्य नाभिर्ब्रह्मायं वाचः परमं व्योम ॥१४॥

विऽधुम् । दद्राणम् । सलिलस्य । पृष्ठे । युवानम् । सन्तम् । पलितः । जगार ।
देवस्य । पश्य । काव्यम् । महिऽत्वा । अद्य । ममार । सः । ह्यः । सम् । आन ॥ ९ ॥
यः । ईम् । चकार । न । सः । अस्य । वेद । यः । ईम् । ददर्श । हिरुक् । इत् । नु । तस्मात् ।
सः । मातुः । योना । परिऽवीतः । अन्तः । बहुऽप्रजाः । निःऽऋतिः । आ । विवेश ॥१०॥
अपश्यम् । गोपाम् । अनिऽपद्यमानम् । आ । च । परा । च । पथिऽभिः । चरन्तम् ।
सः । सध्रीचीः । सः । विषूचीः । वसानः । आ । वरीवर्ति । भुवनेषु । अन्तः ॥ ११ ॥
द्यौः । नः । पिता । जनिता । नाभिः । अत्र । बन्धुः । नः । माता । पृथिवी । मही । इयम् ।
उत्तानयोः । चम्वोः । योनिः । अन्तः । अत्र । पिता । दुहितुः । गर्भम् । आ । अधात् ॥ १२ ॥
पृच्छामि । त्वा । परम् । अन्तम् । पृथिव्याः । पृच्छामि । वृष्णः । अश्वस्य । रेतः ।
पृच्छामि । विश्वस्य । भुवनस्य । नाभिम् । पृच्छामि । वाचः । परमम् । विऽओम ॥१३॥
इयम् । वेदिः । परः । अन्तः । पृथिव्याः । अयम् । सोमः । वृष्णः । अश्वस्य । रेतः ।
अयम् । यज्ञः । विश्वस्य । भुवनस्य । नाभिः । ब्रह्मा । अयम् । वाचः । परमम् । विऽओम ॥

**IX.10.9** That old one swallows up the young, staking violently and running on the surface of water. Look at the grandeur of the wonderful skill of the Lord; he has died today, who was accumulating yesterday.

**IX.10.10** He, who was brought to life in body, does not know of it. He, who sees it, is (now) concealed from it. It, hemmed in the womb of the mother, is subject to many births and finally merges into the eternity. (He = Brahman and also Eternal Time; it = lower self and also day). (Also Ṛg. I.164.32)

**IX.10.11** I have beheld the unwearied protector of the universe, the sun, travelling (spirally) upwards and downwards by various orbits; invested with aggregative and diffusive radiance, he revolves in the midst of the regions. (Also Ṛg. I.164.31)

**IX.10.12** The heaven, our father and begetter, is our close relation here; this great earth, our mother, is the close friend. Placed upright (with mouth upwards) the two cups are the womb; here the father lays the seed within the daughter. (Also Ṛg. I.164.33)

**IX.10.13** I ask you, what is the farthest end of the earth ? I ask you, what is the semen of the horse in heat ? I ask you, where is the navel of this world ? I ask you what is the highest space, where the speech abides ? (Also Ṛg. I.164.34)

**IX.10.14** This very altar is the farthest end of the earth. This cure-juice (soma) is the semen of the horse in heat. This very sacrifice is the navel of this world. And this spiritual knowledge is the highest space, where the speech abides. (Also Ṛg. I.164.35)

न वि जानामि यदिवेदमस्मि निण्यः संनद्धो मनसा चरामि ।
यदा मागन्प्रथमजा ऋतस्यादिद्वाचो अश्नुवे भागमस्याः ॥१५॥
अपाङ् प्राङेति स्वधया गृभीतोमर्त्यो मर्त्येना सयोनिः ।
ता शश्वन्ता विषूचीना वियन्ता न्य१न्यं चिक्युर्न नि चिक्युरन्यम् ॥१६॥
सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि ।
ते धीतिभिर्मनसा ते विपश्चितः परिभुवः परि भवन्ति विश्वतः ॥१७॥
ऋचो अक्षरे परमे व्योमिन्यस्मिन्देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्ते अमी समासते ॥१८॥
ऋचः पदं मात्रया कल्पयन्तोर्धर्चेन चाक्लृपुर्विश्वमेजत् ।
त्रिपाद्ब्रह्म पुरुरूपं वि तष्ठे तेन जीवन्ति प्रदिशश्चतस्रः ॥१९॥
सूयवसाद्भगवती हि भूया अधा वयं भगवन्तः स्याम ।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ॥२०॥

न । वि । जानामि । यत्ऽइव । इदम् । अस्मि । निण्यः । सम्ऽनद्धः । मनसा । चरामि ।
यदा । मा । आऽअगन् । प्रथमऽजाः । ऋतस्य । आत् । इत् । वाचः । अश्नुवे । भागम् । अस्याः ॥
अपाङ् । प्राङ् । एति । स्वधया । गृभीतः । अमर्त्यः । मर्त्येन । सऽयोनिः ।
ता । शश्वन्ता । विषूचीना । विऽयन्ता । नि । अन्यम् । चिक्युः । न । नि । चिक्युः । अन्यम् ॥
सप्त । अर्धऽगर्भाः । भुवनस्य । रेतः । विष्णोः । तिष्ठन्ति । प्रऽदिशा । विऽधर्मणि ।
ते । धीतिऽभिः । मनसा । ते । विपःऽचितः । परिऽभुवः । परि । भवन्ति । विश्वतः ॥
ऋचः । अक्षरे । परमे । विऽओमन् । यस्मिन् । देवाः । अधि । विश्वे । निऽसेदुः ।
यः । तत् । न । वेद । किम् । ऋचा । करिष्यति । ये । इत् । तत् । विदुः । ते । अमी इति ।
सम् । आसते ॥ १८ ॥
ऋचः । पदम् । मात्रया । कल्पयन्तः । अर्धऽऋचेन । चक्लृपुः । विश्वम् । एजत् ।
त्रिऽपात् । ब्रह्म । पुरुऽरूपम् । वि । तस्थे । तेन । जीवन्ति । प्रऽदिशः । चतस्रः ॥१९॥
सुयवसऽअत् । भगऽवती । हि । भूयाः । अध । वयम् । भगऽवन्तः । स्याम ।
अद्धि । तृणम् । अघ्न्ये । विश्वऽदानीम् । पिब । शुद्धम् । उदकम् । आऽचरन्ती ॥२०॥

**IX.10.15** I distinguish not if I am this all, for I go perplexed and bound in mind; when the first-born (perceptions) of the Holy Law reached me, then of this speech I first obtained a portion (of the meaning). (Also Ṛg. I.164.37)

**IX.10.16** The immortal soul associated with the mortal body ceaselessly moves the lower (inferior) or the upper (superior) bodies according to its own actions. They both go always together, and every where together; (we, the men) have comprehended the one (whilst in the physical body) but have not comprehended the other (the soul free from body). (Also Ṛg. I.164.38)

**IX.10.17** The seven half-embryos (the semen of the universe) are employed in the work of supporting (the universe) by the Lord's orders. Those wise ones consciously whirl round and round the earth. (Cosmic intelligence, ego and five abstracts - colour, taste, sound, touch and smell - as the seven). (Also Ṛg. I.164.36)

**IX.10.18** The supreme Lord is omnipresent like space and eternal like his world and all Nature's bounties have their repose in Him. What will he, who knows not this (divine principle), do with the Veda ? But they, who know it, they come close to Him. (Also Ṛg. I.164.39)

**IX.10.19** Composing a foot of the Ṛk verse by the measure, with the half-verse they have fashioned all the moves. The supreme Lord, with (remaining) three feet, continues to exist in many forms; by Him the four mid-quarters (of the universe) live.

**IX.10.20** Come, may you be rich in milk through abundant fodder, that we may also be rich (in abundance); eat grass at all seasons and roaming (at will), drink pure water. (Also Ṛg. I.164.40)

गौरिन्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा भुवनस्य पङ्क्तिस्तस्याः
समुद्रा अधि वि क्षरन्ति ॥२१॥
कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति ।
त आववृत्रन्त्सदनादृतस्यादिद्घृतेन पृथिवीं व्यू दुः ॥२२॥
अपादेति प्रथमा पद्वतीनां कस्तद्वां मित्रावरुणा चिकेत ।
गर्भो भारं भरत्या चिदस्या ऋतं पिपर्त्यनृतं नि पाति ॥२३॥
विराड्वाग्विराट् पृथिवी विराडन्तरिक्षं विराट् प्रजापतिः ।
विराण्मृत्युः साध्यानामधिराजो बभूव तस्य भूतं भव्यं वशे स मे भूतं भव्यं वशे कृणोतु ॥२४॥
शकमयं धूममारादपश्यं विषूवता पर एनावरेण ।
उक्षाणं पृश्निमपचन्त वीरास्तानि धर्माणि प्रथमान्यासन् ॥२५॥

गौः । इत् । मिमाय । सलिलानि । तक्षती । एकऽपदी । द्विऽपदी । सा । चतुःऽपदी । अष्टाऽपदी । नवऽपदी । बभूवुषी । सहस्रऽअक्षरा । भुवनस्य । पङ्क्तिः । तस्याः । समुद्राः । अधि । वि । क्षरन्ति ॥ २१ ॥

कृष्णम् । निऽयानम् । हरयः । सुऽपर्णाः । अपः । वसानाः । दिवम् । उत् । पतन्ति । ते । आ । अववृत्रन् । सदनात् । ऋतस्य । आत् । इत् । घृतेन । पृथिवीम् । वि । ऊदुः ॥

अपात् । एति । प्रथमा । पत्ऽवतीनाम् । कः । तत् । वाम् । मित्रावरुणा । आ । चिकेत । गर्भः । भारम् । भरति । आ । चित् । अस्याः । ऋतम् । पिपर्ति । अनृतम् । नि । पाति ॥

विऽराट् । वाक् । विऽराट् । पृथिवी । विऽराट् । अन्तरिक्षम् । विऽराट् । प्रजाऽपतिः । विऽराट् । मृत्युः । साध्यानाम् । अधिऽराजः । बभूव । तस्य । भूतम् । भव्यम् । वशे । सः । मे । भूतम् । भव्यम् । वशे । कृणोतु ॥ २४ ॥

शकऽमयम् । धूमम् । आरात् । अपश्यम् । विषुऽवता । परः । एना । अवरेण । उक्षाणम् । पृश्निम् । अपचन्त । वीराः । तानि । धर्माणि । प्रथमानि । आसन् ॥ २५ ॥

**IX.10.21** The divine speech has been uttered enabling the thoughts to flow, and is one-footed, two-footed, four-footed, eight-footed, nine-footed in the innermost region of heart. (Also Ṛg. I.164.41)

**IX.10.22** The way is dark; golden birds of beautiful wings, robed in waters, fly up to the sky. From the seat of ṛta (righteousness) they descend and innundate the earth with ghṛta (purified butter; water). (Also Ṛg. I.164.47)

**IX.10.23** She, the footless, goes foremost among those who have feet. O friendly Lord (Mitra) and O venerable Lord (Varuṇa), who has speculated about this (doing) of yours ? (The wonder is that) the unborn embryo bears her (body's) burden; it supports the righteousness and keeps a watch over untruth.

**IX.10.24** Virāj is speech, Virāj the wide earth, Virāj the midspace, and Virāj is the Lord of creatures. Virāj is death, the overlord of Sādhyas (souls seeking perfection). He has full control over what was and what will be. May He put what was, and will be, under my control.

**IX.10.25** I behold near (me) the smoky clouds; and by that one arrives at the universe concept of inference of cause (the cosmic heat) from the effect. The priests have glorified with affectionate laurels that causal fire in the fire-rituals for such are their first duties. (Also Ṛg. I.164.43)

त्रयः केशिन ऋतुथा वि चक्षते संवत्सरे वपत एक एषाम् ।
विश्वमन्यो अभिचष्टे शचीभिर्ध्राजिरेकस्य ददृशे न रूपम् ॥२६॥
चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या३ वदन्ति ॥२७॥
इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥२८॥

त्रयः । केशिनः । ऋतुऽथा । वि । चक्षते । सम्ऽवत्सरे । वपते । एकः । एषाम् ।
विश्वम् । अन्यः । अभिऽचष्टे । शचीभिः । ध्राजिः । एकस्य । ददृशे । न । रूपम् ॥२६॥
चत्वारि । वाक् । परिऽमिता । पदानि । तानि । विदुः । ब्राह्मणाः । ये । मनीषिणः ।
गुहा । त्रीणि । निऽहिता । न । इङ्गयन्ति । तुरीयम् । वाचः । मनुष्याः३ । वदन्ति ॥ २७॥
इन्द्रम् । मित्रम् । वरुणम् । अग्निम् । आहुः । अथो इति । दिव्यः । सः । सुऽपर्णः । गरुत्मान् ।
एकम् । सत् । विप्राः । बहुऽधा । वदन्ति । अग्निम् । यमम् । मातरिश्वानम् । आहुः ॥२८॥

॥ इति नवमं काण्डम् ॥

[ नवमकाण्डे सूक्तानि १०, ऋचः ३१३ ]

**IX.10.26** The three, with beautiful tresses, look down in their several seasons upon the earth; one of them (fire) comes forth only once in a year (the ritual fire is established once in a year); the second one (the Sun), by his acts, brightens the universe; the course of the third one (air) is visible though not his form. (Also Ṛg. I.164.44)

**IX.10.27** Four are the definite grades of speech; those learned, who are wise, know them; three deposited in secret, indicate no meaning; men speak the fourth grade of speech (Four grades of speech : Om, Bhūḥ, Bhuvaḥ, Svaḥ, also known as Parā, Paśyantī, Madhyamā, and Vaikharī; Para is the innermost at the origin; Paśyantī pertains to heart, Madhyamā to intellect and Vaikharī the phonetically expressed through the organs of speech). (Also Ṛg. I.164.45)

**IX.10.28** They have styled (Him, God or the sun) indra (the resplendent), mitra (the surveyor), varuṇa (the venerable), agni (the adorable), and He is the celestial, well-winged garutmat (the great), for learned priests call one by many names as they speak of the adorable as yama (ordainer) and matariśvan (cosmic breath). (Also Ṛg. I.164.46)

---

**Here ends Kāṇḍa IX**
**Hymns 10, Verses 313**

---

# अथ दशमं काण्डम् ॥

( १ ) प्रथमं सूक्तम्

(१–३२) द्वात्रिंशदृचस्यास्य सूक्तस्य प्रत्यङ्गिरस ऋषिः। कृत्यादूषणं देवता। (१) प्रथमर्चो महाबृहती, (२) द्वितीयाया विराड्गायत्री, (३–८, १०–११, १४, २१, २५–२७, ३०–३१) तृतीयादिषण्णां दशम्येकादशीचतुर्दश्येकविंशीनां पञ्चविंश्यादितृचस्य त्रिंश्येकत्रिंश्योश्चानुष्टुप्, (९) नवम्याः पथ्यापङ्क्तिः, (१२) द्वादश्याः पङ्क्तिः, (१३) त्रयोदश्या उरोबृहती, (१५) पञ्चदश्याश्चतुष्पदा विराड्जगती, (१६, १८) षोडश्यष्टादश्योस्त्रिष्टुप्, (१७, २४) सप्तदशीचतुर्विंश्योः प्रस्तारपङ्क्तिः, (१९) एकोनविंश्याश्चतुष्पदा जगती, (२०) विंश्या विराट् प्रस्तारपङ्क्तिः, (२२) द्वाविंश्या एकावसाना द्विपदार्च्युष्णिक्, (२३) त्रयोविंश्यास्त्रिपदा भुरिग्विषमा गायत्री, (२८) अष्टाविंश्यास्त्रिपदा गायत्री, (२९) एकोनत्रिंश्या मध्येज्योतिष्मती जगती, (३२) द्वात्रिंश्याश्च द्व्यनुष्टुब्गर्भा पञ्चपदातिजगती छन्दांसि ॥

यां कल्पयन्ति वहतौ वधूमिव विश्वरूपां हस्तकृतां चिकित्सवः ।
सारादेत्वप नुदाम एनाम् ॥१॥

शीर्षण्वती नस्वती कर्णिनी कृत्याकृता संभृता विश्वरूपा ।
सारादेत्वप नुदाम एनाम् ॥२॥

शूद्रकृता राजकृता स्त्रीकृता ब्रह्मभिः कृता ।
जाया पत्या नुत्तेव कर्तारं बन्ध्वृच्छतु ॥३॥

अनयाहमोषध्या सर्वाः कृत्या अदूदुषम् ।
यां क्षेत्रे चक्रुर्यां गोषु यां वा ते पुरुषेषु ॥४॥

याम् । कल्पयन्ति । वहतौ । वधूम्ऽइव । विश्वऽरूपाम् । हस्तऽकृताम् । चिकित्सवः ।
सा । आरात् । एतु । अप । नुदामः । एनाम् ॥ १ ॥

शीर्षण्ऽवती । नस्वती । कर्णिनी । कृत्याऽकृता । सम्ऽभृता । विश्वऽरूपा ।
सा । आरात् । एतु । अप । नुदामः । एनाम् ॥ २ ॥

शूद्रऽकृता । राजऽकृता । स्त्रीऽकृता । ब्रह्मऽभिः । कृता ।
जाया । पत्या । नुत्ताऽइव । कर्तारम् । बन्धु । ऋच्छतु ॥ ३ ॥

अनया । अहम् । ओषध्या । सर्वाः । कृत्याः । अदूदुषम् ।
याम् । क्षेत्रे । चक्रुः । याम् । गोषु । याम् । वा । ते । पुरुषेषु ॥ ४ ॥

## Mantroktāḥ

**X.1.1** May she (the harmful design) of all forms and made with hands, whom the skilled workers adorn like a bride at a wedding, go afar. We push her away.

**X.1.2** She, the harmful design (kṛtyaḥ), having a head, a nose, and ears, has been made and fashioned in all the forms. May she go afar. We push her away.

**X.1.3** Prepared by a śūdra (an unskilled labourer), or by a king, prepared by a woman or by wise intellectual persons, may she, the harmful design go back to her maker, just as a wife banished by the husband goes back to her father or her brother.

**X.1.4** With this medicinal plant, I have spoiled all the harmful designs, which they had planted in your field, in your cattle, or in your men.

अघमस्त्वघकृते शपथः शपथीयते ।
प्रत्यक्प्रतिप्रहिण्मो यथा कृत्याकृतं हनत् ॥५॥
प्रतीचीन आङ्गिरसोध्यक्षो नः पुरोहितः ।
प्रतीचीः कृत्या आकृत्यामून्कृत्याकृतो जहि ॥६॥
यस्त्वोवाच परेहीति प्रतिकूलमुदाय्य्यम् ।
तं कृत्येभिनिवर्तस्व मास्मानिच्छो अनागसः ॥७॥
यस्ते परूंषि संदधौ रथस्येवर्भुर्धिया ।
तं गच्छ तत्र तेयनमज्ञातस्तेयं जनः ॥८॥
ये त्वा कृत्वालेभिरे विद्वला अभिचारिणः ।
शंभ्वी३दं कृत्यादूषणं प्रतिवर्त्म पुनःसरं तेन त्वा स्नपयामसि ॥९॥
यद्दुर्भगां प्रस्नपितां मृतवत्सामुपेयिम ।
अपैतु सर्वं मत्पापं द्रविणं मोप तिष्ठतु ॥१०॥

अघम् । अस्तु । अघऽकृते । शपथः । शपथिऽयते ।
प्रत्यक् । प्रतिऽप्रहिण्मः । यथा । कृत्याऽकृतम् । हनत् ॥ ५ ॥
प्रतीचीनः । आङ्गिरसः । अधिऽअक्षः । नः । पुरःऽहितः ।
प्रतीचीः । कृत्याः । आऽकृत्य । अमून् । कृत्याऽकृतः । जहि ॥ ६ ॥
यः । त्वा । उवाच । परा । इहि । इति । प्रतिऽकूलम् । उत्ऽआय्यम् ।
तम् । कृत्ये । अभिऽनिवर्तस्व । मा । अस्मान् । इच्छः । अनागसः ॥ ७ ॥
यः । ते । परूंषि । सम्ऽदधौ । रथस्यऽइव । ऋभुः । धिया ।
तम् । गच्छ । तत्र । ते । अयनम् । अज्ञातः । ते । अयम् । जनः ॥ ८ ॥
ये । त्वा । कृत्वा । आऽलेभिरे । विद्वलाः । अभिऽचारिणः ।
शम्ऽभु । इदम् । कृत्याऽदूषणम् । प्रतिऽवर्त्म । पुनःऽसरम् । तेन । त्वा । स्नपयामसि ॥९॥
यत् । दुःऽभगाम् । प्रऽस्नपिताम् । मृतऽवत्साम् । उपऽएयिम ।
अप । एतु । सर्वम् । मत् । पापम् । द्रविणम् । मा । उप । तिष्ठतु ॥ १० ॥

**X.1.5** Let evil befall to the evil-doer, let the cures fall on the curser, backward we send her forth, so that she may strike the person who has made that harmful design (kṛtyā-kṛtam).

**X.1.6** The Angirasa priest, skilled in reversing, is our Chief. May you (O priest), turning the harmful designs back, slay those who have fashioned the harmful designs (kṛtyākṛtaḥ).

**X.1.7** Whoso has said to you "Go forward, against all odds and against the stream", O harmful design, may you go back to him, seek not us, the innocents.

**X.1.8** Whoever has put your joints together with thought, as a skilled carpenter those of a chariot, to him may you go. Thereto lies your way. Let this person be quite unknown (ajñātaḥ) to you.

**X.1.9** They, the expert ones, who having fashioned you, have held you firmly; this is an auspicious destroyer of harmful designs; it sends the harmful design back the way it came. With this we battle you.

**X.1.10** In that we have approached a disgusting woman, dripping liquid (prasnāpitām), and with her child dead, may all that illness go away from me; may the wealth come to me.

यत्ते पितृभ्यो ददतो यज्ञे वा नाम जगृहुः ।
संदेश्या३त्सर्वस्मात्पापादिमा मुञ्चन्तु त्वौषधीः ॥११॥
देवैनसात्पित्र्यान्नामग्राहात्संदेश्यादभिनिष्कृतात् ।
मुञ्चन्तु त्वा वीरुधो वीर्येणि ब्रह्मण ऋग्भिः पयस ऋषीणाम् ॥१२॥
यथा वातश्च्यावयति भूम्यां रेणुमन्तरिक्षाच्चाभ्रम् ।
एवा मत्सर्वं दुर्भूतं ब्रह्मनुत्तमपायति ॥१३॥
अप क्राम नानदती विनद्धा गर्दभीव ।
कर्तृन्नक्षस्वेतो नुत्ता ब्रह्मणा वीर्यावता ॥१४॥
अयं पन्थाः कृत्येति त्वा नयामोभिप्रहितां प्रति त्वा प्र हिण्मः ।
तेनाभि याहि भञ्जत्यनस्वतीव वाहिनी विश्वरूपा कुरूटिनी ॥१५॥
पराक्ते ज्योतिरपथं ते अर्वागन्यत्रास्मदयना कृणुष्व ।
परेणेहि नवतिं नाव्या३ अति दुर्गाः स्रोत्या मा क्षणिष्ठाः परेहि ॥१६॥

यत् । ते । पितृऽभ्यः । ददतः । यज्ञे । वा । नाम । जगृहुः ।
सम्ऽदेश्यात् । सर्वस्मात् । पापात् । इमाः । मुञ्चन्तु । त्वा । ओषधीः ॥ ११ ॥

देवऽएनसात् । पित्र्यात् । नामऽग्राहात् । सम्ऽदेश्यात् । अभिऽनिष्कृतात् ।
मुञ्चन्तु । त्वा । वीरुधः । वीर्येणि । ब्रह्मणा । ऋक्ऽभिः । पयसा । ऋषीणाम् ॥ १२ ॥

यथा । वातः । च्यवयति । भूम्याः । रेणुम् । अन्तरिक्षात् । च । अभ्रम् ।
एव । मत् । सर्वम् । दुःऽभूतम् । ब्रह्मऽनुत्तम् । अप । अयति ॥ १३ ॥

अप । क्राम । नानदती । विऽनद्धा । गर्दभीऽइव ।
कर्तृन् । नक्षस्व । इतः । नुत्ता । ब्रह्मणा । वीर्यऽवता ॥ १४ ॥

अयम् । पन्थाः । कृत्ये । इति । त्वा । नयामः । अभिऽप्रहिताम् । प्रति । त्वा । प्र । हिण्मः ।
तेन । अभि । याहि । भञ्जती । अनस्वतीऽइव । वाहिनी । विश्वऽरूपा । कुरूटिनी ॥१५॥

पराक् । ते । ज्योतिः । अपथम् । ते । अर्वाक् । अन्यत्र । अस्मत् । अयना । कृणुष्व ।
परेण । इहि । नवतिम् । नाव्याः । अति । दुःगाः । स्रोत्याः । मा । क्षणिष्ठाः । परा । इहि ॥

**X.1.11** If they have mentioned your name while making offerings to the elders or at the sacrifice, from all that evil thus proposed, let these medicinal plants relieve you.

**X.1.12** From sin against the enlightened ones, against the elders, and from being named, from the evil proposed and arranged, may these medicinal plants relieve you by power of knowledge, by Ṛk verses, and by the vital spirit of the seers.

**X.1.13** As the wind dislodges the dust from the earth and the cloud from the midspace, so may all ill and evil, pushed away by prayer, depart from me.

**X.1.14** Run away making much noise like a she-ass (gardabhī) that has been unfastened, go to your makers pushed and chased from here by an energetic prayer.

**X.1.15** "This is the way, O harmful design", thus we lead you forth. You, who were sent against us, we send back. Go by this road, crushing like an army, all beautiful with cars (vāhinī) and crests (kurūṭinī).

**X.1.16** May there be light for you to go younder. There is no way for you to come hither. Make your going elsewhere other than to us. Go across the ninety (navāti) navigable streams, difficult to cross.

वातं इव वृक्षान्नि मृणीहि पादय मा गामश्वं पुरुषमुच्छिष एषाम् ।
कर्तृन्निवृत्येतः कृत्येप्रजास्त्वायं बोधय ॥१७॥
यां ते बर्हिषि यां श्मशाने क्षेत्रे कृत्यां वलगं वा निचखनुः ।
अग्नौ वा त्वा गार्हपत्येभिचेरुः पाकं सन्तं धीरतरा अनागसम् ॥१८॥
उपाहृतमनुबुद्धं निखातं वैरं त्सार्यन्वविदाम कर्त्रम् ।
तदेतु यत आभृतं तत्राश्व इव वि वर्ततां हन्तु कृत्याकृतः प्रजाम् ॥१९॥
स्वायसा असयः सन्ति नो गृहे विद्मा ते कृत्ये यतिधा परूंषि ।
उत्तिष्ठैव परेहीतोज्ञाते किमिहेच्छसि ॥२०॥
ग्रीवास्ते कृत्ये पादौ चापि कर्त्स्यामि निर्द्रव ।
इन्द्राग्नी अस्मान्रक्षतां यौ प्रजानां प्रजावती ॥२१॥
सोमो राजाधिपा मृडिता च भूतस्य नः पतयो मृडयन्तु ॥२२॥

वातःऽइव । वृक्षान् । नि । मृणीहि । पादय । मा । गाम् । अश्वम् । पुरुषम् । उत् । शिषः । एषाम् । कर्तृन् । निऽवृत्य । इतः । कृत्ये । अप्रजाःऽत्वाय । बोधय ॥ १७ ॥

याम् । ते । बर्हिषि । याम् । श्मशाने । क्षेत्रे । कृत्याम् । वलगम् । वा । निऽचखनुः । अग्नौ । वा । त्वा । गार्हऽपत्ये । अभिऽचेरुः । पाकम् । सन्तम् । धीरऽतराः । अनागसम् ॥

उपऽआहृतम् । अनुऽबुद्धम् । निऽखातम् । वैरम् । त्सारि । अनु । अविदाम । कर्त्रम् । तत् । एतु । यतः । आऽभृतम् । तत्र । अश्वःऽइव । वि । वर्तताम् । हन्तु । कृत्याऽकृतः । प्रऽजाम् ॥

सुऽआयसाः । असयः । सन्ति । नः । गृहे । विद्म । ते । कृत्ये । यतिऽधा । परूंषि ।
उत् । तिष्ठ । एव । परा । इहि । इतः । अज्ञाते । किम् । इह । इच्छसि ॥ २० ॥

ग्रीवाः । ते । कृत्ये । पादौ । च । अपि । कर्त्स्यामि । निः । द्रव ।
इन्द्राग्नी इति । अस्मान् । रक्षताम् । यौ । प्रऽजानाम् । प्रजावती इति प्रजाऽवती ॥२१॥

सोमः । राजा । अधिऽपाः । मृडिता । च । भूतस्य । नः । पतयः । मृडयन्तु ॥ २२ ॥

**X.1.17** Returning from here to your makers, O harmful design, smash them like a tempest the trees; fell them down. Let none of their kine, horses, or men survive. Wake them up to their childlessness (aprajāḥ).

**X.1.18** What harmful design or plotting they have buried under your grass, or in the cremation-ground (śmaśāne), or in your field, and being more determined, what they have conspired through the householder's fire (gārhapatye) against you, who are simple (dhīratarāḥ) and faultless (anāgasaṃ).

**X.1.19** We have found out (the harmful design) that has been brought, that has been buried with hostile intent. We have found out its maker too. May it go back wherefrom it came. Let it rage there like a horse. May it destroy the progeny of the maker of this harmful design.

**X.1.20** There are swords made of good steel (suāyasā) in our house. O harmful design, we know where are your joints. Do get up; go away hence, O stranger, what do you seek here?

**X.1.21** O harmful design, I will slash your neck-bones, and also your feet. Flee away. May the resplendent Lord (Indra) and the adorable Lord (Agni) protect us; they who protect like a mother her children.

**X.1.22** May the blissful Lord, the overruling sovereign, favour us; and may the lords of existence (bhūtasya patayaḥ) favour us too.

भवाशर्वावस्यतां पापकृते कृत्याकृते । दुष्कृते विद्युतं देवहेतिम् ॥२३॥
यद्येयथ द्विपदी चतुष्पदी कृत्याकृता संभृता विश्वरूपा ।
सेतो३ऽष्टापदी भूत्वा पुनः परेहि दुच्छुने ॥२४॥
अभ्य१क्ताक्ता स्वरंकृता सर्वं भरन्ती दुरितं परेहि ।
जानीहि कृत्ये कर्तारं दुहितेवं पितरं स्वम् ॥२५॥
परेहि कृत्ये मा तिष्ठो विद्धस्येव पदं नय ।
मृगः स मृगयुस्त्वं न त्वा निकर्तुमर्हति ॥२६॥
उत हन्ति पूर्वासिनं प्रत्यादायापर इष्वा ।
उत पूर्वस्य निघ्नतो नि हन्त्यपरः प्रति ॥२७॥
एतद्धि शृणु मे वचोथेहि यत एयथ । यस्त्वा चकार तं प्रति ॥२८॥
अनागोहत्या वै भीमा कृत्ये मा नो गामश्वं पुरुषं वधीः ।
यत्रयत्रासि निहिता ततस्त्वोत्थापयामसि पर्णाल्लघीयसी भव ॥२९॥

भवाशर्वौ । अस्यताम् । पापऽकृते । कृत्याऽकृते । दुःऽकृते । विऽद्युतम् । देवऽहेतिम् ॥२३॥
यदि । आऽइयथ । द्विऽपदी । चतुःऽपदी । कृत्याऽकृता । सम्ऽभृता । विश्वऽरूपा ।
सा । इतः । अष्टाऽपदी । भूत्वा । पुनः । परा । इहि । दुच्छुने ॥ २४ ॥
अभिऽअंक्ता । आऽअंक्ता । सुऽअरंकृता । सर्वम् । भरन्ती । दुःऽइतम् । परा । इहि ।
जानीहि । कृत्ये । कर्तारम् । दुहिताऽइव । पितरम् । स्वम् ॥ २५ ॥
परा । इहि । कृत्ये । मा । तिष्ठः । विद्धस्यऽइव । पदम् । नय ।
मृगः । सः । मृगऽयुः । त्वम् । न । त्वा । निऽकर्तुम् । अर्हति ॥ २६ ॥
उत । हन्ति । पूर्वऽआसिनम् । प्रतिऽआदाय । अपरः । इष्वा ।
उत । पूर्वस्य । निऽघ्नतः । नि । हन्ति । अपरः । प्रति ॥ २७ ॥
एतत् । हि । शृणु । मे । वचः । अथ । इहि । यतः । आऽइयथ ।
यः । त्वा । चकार । तम् । प्रति ॥ २८ ॥
अनागःऽहत्या । वै । भीमा । कृत्ये । मा । नः । गाम् । अश्वम् । पुरुषम् । वधीः ।
यत्रऽयत्र । असि । निऽहिता । ततः । त्वा । उत् । स्थापयामसि । पर्णात् । लघीयसी । भव ॥

**X.1.23** May the Lord of existence (bhava) and the Lord of destruction (śarva) hurl the blazing divine weapon at the sinner, the maker of the harmful design, the wicked one. (for Bhava and Sarva, see Av. IV.28.1)

**X.1.24** If, O harmful design, duly made and composed in all forms, you come here as two-footed or four-footed, O harbinger of misfortune, go away from here becoming eight-footed.

**X.1.25** Well-anointed and polished, nicely adorned, bearing all misery, go away. O harmful design, (go and) recognize your fashioner, just like a daughter her father.

**X.1.26** O harmful design, go away; stay not here. Follow in his tracks as if those of a wounded quarry (object of hunt). He is the hunted animal (mṛgaḥ) and you are the hunter (mṛgayuḥ). He is unable to counter you.

**X.1.27** Also him, who shoots first, the other one smites back with an arrow catching hold of him. Also while the first one is smiting, the other one smites him back.

**X.1.28** Listen carefully to what I say. Now go where you have come from; to him, who has made you.

**X.1.29** The killing of an innocent person (anāgo-hatyā) is, indeed, horrible. O harmful design, may you not kill our cow, horse or men. For each and every spot, where you have been placed, we raise you up. May you become lighter (laghīyasī) than a leaf.

यदि स्थ तमसावृता जालेनाभिहिता इव ।
सर्वाः संलुप्येतः कृत्याः पुनः कर्त्रे प्र हिण्मसि ॥३०॥
कृत्याकृतो वलगिनोऽभिनिष्कारिणः प्रजाम् ।
मृणीहि कृत्ये मोच्छिषोऽमून्कृत्याकृतो जहि ॥३१॥
यथा सूर्यो मुच्यते तमसस्परि रात्रिं जहात्युषसश्च केतून् ।
एवाहं सर्वं दुर्भूतं कर्त्रं कृत्याकृता कृतं हस्तीव रजो दुरितं जहामि ॥३२॥

यदि । स्थ । तमसा । आऽवृताः । जालेन । अभिहिताःऽइव ।
सर्वाः । सम्ऽलुप्य । इतः । कृत्याः । पुनः । कर्त्रे । प्र । हिण्मसि ॥ ३० ॥
कृत्याऽकृतः । वलगिनः । अभिऽनिष्कारिणः । प्रऽजाम् ।
मृणीहि । कृत्ये । मा । उत् । शिषः । अमून् । कृत्याऽकृतः । जहि ॥ ३१ ॥
यथा । सूर्यः । मुच्यते । तमसः । परि । रात्रिम् । जहाति । उषसः । च । केतून् । एव । अहम् ।
सर्वम् । दुःऽभूतम् । कर्त्रम् । कृत्याऽकृता । कृतम् । हस्तीऽइव । रजः । दुःऽइतम् । जहामि ॥

( २ ) द्वितीयं सूक्तम्

(१-३३) त्रयस्त्रिंशदृचस्यास्य सूक्तस्य नारायण ऋषिः । पुरुषो ब्रह्मप्रकाशनश्च ( ३१-३२ साक्षात्परब्रह्मप्रकाशनं ) देवते । (१-४, ७-८) प्रथमादिचतुर्ऋचां सप्तम्यष्टम्योश्च त्रिष्टुप्, (५, ९-१०, १२-२७, २९-३३) पञ्चमीनवमीदशमीनां द्वादश्यादिषोडशानामेकोनत्रिंश्यादिपञ्चानाञ्चानुष्टुप्, (६, ११) षष्ठ्येकादश्योर्जगती, (२८) अष्टाविंश्याश्च भुरिग्बृहती छन्दांसि ॥

केन पार्ष्णी आभृते पूरुषस्य केन मांसं संभृतं केन गुल्फौ ।
केनाङ्गुलीः पेशनीः केन खानि केनोच्छ्लङ्खौ मध्यतः कः प्रतिष्ठाम् ॥१॥
कस्मान्नु गुल्फावधरावकृण्वन्नष्ठीवन्तावुत्तरौ पूरुषस्य ।
जङ्घे निर्ऋत्य न्यदधुः क्व स्विज्जानुनोः संधी क उ तच्चिकेत ॥२॥

केन । पार्ष्णी इति । आभृते इत्याऽभृते । पुरुषस्य । केन । मांसम् । सम्ऽभृतम् । केन । गुल्फौ ।
केन । अङ्गुलीः । पेशनीः । केन । खानि । केन । उत्ऽश्लङ्खौ । मध्यतः । कः । प्रतिऽस्थाम् ॥
कस्मात् । नु । गुल्फौ । अधरौ । अकृण्वन् । अष्ठीवन्तौ । उत्ऽतरौ । पुरुषस्य ।
जङ्घे इति । निःऽऋत्य । नि । अदधुः । क्व । स्वित् । जानुनोः । संधी इति सम्ऽधी ।
कः । ऊं इति । तत् । चिकेत ॥ २ ॥

**X.1.30** Even if you are covered with darkness, as if girt with a net, banishing all the harmful designs from here, we send them back to their fashioner.

**X.1.31** The offspring of those who fashion harmful designs of evil plotters, and of those who destroy others, O harmful design may you crush. Let not any of them survive. Kill those fashioners of harmful designs.

**X.1.32** Just as the Sun is freed from the darkness and gets rid of the night and the ensigns of the dawn, so I get rid of all the misery and evil effect caused by the maker of the harmful design, as an elephant shakes off the dirty dust.

### Puruṣa - Brahama - Prakaśanam

**X.2.1** By whom the two heels of men were formed ? By whom the flesh was put on ? By whom the two ankles ? By whom the beautiful fingers ? By whom the orifices ? By whom the two foot-soles. and who gave him support in the middle ? (Pārṣṇī = heals; gulpha = ankle; aṅguli = finger; kha = orifice for organs; ucchalsankha = foot-soles; pratiṣṭhā = support).

**X.2.2** Why did they make the two ankles of man below, and the two knee-joints above them ? Separating the two shanks, where did they set them in and where the two joints of the two knees ? Who has thought and planned it ? (Aṣṭhi = knee-joint; Jaṅghā = shank; Sandhi = joint; Jānu = knee)

चतुष्टयं युज्यते संहितान्तं जानुभ्यामूर्ध्वं शिथिरं कबन्धम् ।
श्रोणी यदूरू क उ तज्जजान याभ्यां कुसिन्धं सुदृढं बभूव ॥३॥
कति देवाः कतमे त आसन्य उरो ग्रीवाश्चिक्युः पूरुषस्य ।
कति स्तनौ व्यदधुः कः कफोडौ कति स्कन्धान्कति पृष्टीरचिन्वन् ॥४॥
को अस्य बाहू समभरद्वीर्यं करवादिति ।
अंसौ को अस्य तद्देवः कुसिन्धे अध्या दधौ ॥५॥
कः सप्त खानि वि ततर्द शीर्षणि कर्णाविमौ नासिके चक्षणी मुखम् ।
येषां पुरुत्रा विजयस्य मह्मनि चतुष्पादो द्विपदो यन्ति यामम् ॥६॥
हन्वोर्हि जिह्वामदधात्पुरूचीमधा महीमधि शिश्राय वाचम् ।
स आ वरीवर्ति भुवनेष्वन्तरपो वसानः क उ तच्चिकेत ॥७॥
मस्तिष्कमस्य यतमो ललाटं ककाटिकां प्रथमो यः कपालम् ।
चित्वा चित्यं हन्वोः पूरुषस्य दिवं रुरोह कतमः स देवः ॥८॥

चतुष्टयम् । युज्यते । संहितऽअन्तम् । जानुऽभ्याम् । ऊर्ध्वम् । शिथिरम् । कबन्धम् ।
श्रोणी इति । यत् । ऊरू इति । कः । ऊं इति । तत् । जजान । याभ्याम् । कुसिन्धम् ।
सुऽदृढम् । बभूव ॥ ३ ॥

कति । देवाः । कतमे । ते । आसन् । ये । उरः । ग्रीवाः । चिक्युः । पुरुषस्य । कति ।
स्तनौ । वि । अदधुः । कः । कफोडौ । कति । स्कन्धान् । कति । पृष्टीः । अचिन्वन् ॥
कः । अस्य । बाहू इति । सम् । अभरत् । वीर्यम् । करवात् । इति ।
अंसौ । कः । अस्य । तत् । देवः । कुसिन्धे । अधि । आ । दधौ ॥ ५ ॥

कः । सप्त । खानि । वि । ततर्द । शीर्षणि । कर्णौ । इमौ । नासिके इति । चक्षणी
इति । मुखम् । येषाम् । पुरुत्रा । विऽजयस्य । मह्मनि । चतुःऽपादः । द्विऽपदः । यन्ति । यामम् ॥
हन्वोः । हि । जिह्वाम् । अदधात् । पुरूचीम् । अध । महीम् । अधि । शिश्राय । वाचम् ।
सः । आ । वरीवर्ति । भुवनेषु । अन्तः । अपः । वसानः । कः । ऊं इति । तत् । चिकेत ॥

मस्तिष्कम् । अस्य । यतमः । ललाटम् । ककाटिकाम् । प्रथमः । यः । कपालम् ।
चित्वा । चित्यम् । हन्वोः । पुरुषस्य । दिवम् । रुरोह । कतमः । सः । देवः ॥ ८ ॥

**X.2.3** Wherewith did they make man's four-fold frame with ends connected and up above the knees, the yielding belly, hips and thighs ? And of the props whereby the trunk became firmly established. (kabandha = belly; śroṇi = two hips; ūrū = two thighs; kusindham = props).

**X.2.4** How many and which were the enlightened ones, who fastened the breast (uras) and neck of man together ? How many (of them) formed his two teats ? Who formed his two collar-bones ? How many (of them) his shoulders and how many joined the ribs ? (uraḥ = breast; grīvā = neck; stana = teat; kaphoda = collar-bone; skandha = shoulder; pṛṣṭīḥ = rib).

**X.2.5** Who provided him with two arms, so that he may act with manly strength. Which was the enlightened one who put two shoulders upon his trunk ? (Bāhu = arm; aṅsa = shoulder-blade; kusindha = trunk).

**X.2.6** Who pierced seven orifices in his head - these two ears, two nostrils, two eyes and the mouth ? In whose multiple grandeur, the quadrupeds and the bipeds move on the path of victory ? ( khāni = orifice; śīrsa = head; karṇa = ear; nāsikā = nose; cakṣaṇī = eye; mukha = mouth; dvipada = biped; catuṣpāda = quadruped).

**X.2.7** Between the two jaws he set the far-reaching tongue; thereafter he reposed the mighty speech in it. Robed in his actions he moves to and from within all the beings. Who has speculated about him even ? ( Hanu = jaw; jihvā = tongue; vāk = speech)

**X.2.8** Which was that deity, who first having made man's skull, made the brain, the forehead, and the occiput, and having piled up the pile between his two jaws, ascendent to heaven? ( mastiṣka = skull lalāta = brain; kalātikā = occiput; kapāla = forehead; hanu-citva = pile for jaw).

प्रियाप्रियाणि बहुला स्वप्नं संबाधतन्द्यः ।
आनन्दानुग्रो नन्दांश्च कस्माद्वहति पूरुषः ॥९॥
आर्तिरवर्तिर्निर्ऋतिः कुतो नु पुरुषेमतिः ।
राद्धिः समृद्धिरव्यृद्धिर्मतिरुदितयः कुतः ॥१०॥
को अस्मिन्नापो व्यदधाद्विषूवृतः पुरूवृतः सिन्धुसृत्याय जाताः ।
तीव्रा अरुणा लोहिनीस्ताम्रधूम्रा ऊर्ध्वा अवाचीः पुरुषे तिरश्चीः ॥११॥
को अस्मिन्रूपमदधात्को मह्यानं च नाम च ।
गातुं को अस्मिन्कः केतुं कश्चरित्राणि पूरुषे ॥१२॥
को अस्मिन्प्राणमवयत्को अपानं व्यानमु ।
समानमस्मिन्को देवोधि शिश्राय पूरुषे ॥१३॥
को अस्मिन्यज्ञमदधादेको देवोधि पूरुषे ।
को अस्मिन्त्सत्यं कोनृतं कुतो मृत्युः कुतोमृतम् ॥१४॥

प्रियऽअप्रियाणि । बहुला । स्वप्नम् । संबाधऽतन्द्यः ।
आऽनन्दान् । उग्रः । नन्दान् । च । कस्मात् । वहति । पुरुषः ॥ ९ ॥
आर्तिः । अवर्तिः । निःऽऋतिः । कुतः । नु । पुरुषे । अमतिः ।
राद्धिः । समऽऋद्धिः । अविऽऋद्धिः । मतिः । उत्ऽइतयः । कुतः ॥ १० ॥
कः । अस्मिन् । आपः । वि । अदधात् । विषुऽवृतः । पुरुऽवृतः । सिन्धुऽसृत्याय । जाताः ।
तीव्राः । अरुणाः । लोहिनीः । ताम्रऽधूम्राः । ऊर्ध्वाः । अवाचीः । पुरुषे । तिरश्चीः ॥ ११ ॥
कः । अस्मिन् । रूपम् । अदधात् । कः । मह्यानम् । च । नाम । च ।
गातुम् । कः । अस्मिन् । कः । केतुम् । कः । चरित्राणि । पुरुषे ॥ १२ ॥
कः । अस्मिन् । प्राणम् । अवयत् । कः । अपानम् । विऽआनम् । ऊं इति ।
समऽआनम् । अस्मिन् । कः । देवः । अधि । शिश्राय । पुरुषे ॥ १३ ॥
कः । अस्मिन् । यज्ञम् । अदधात् । एकः । देवः । अधि । पुरुषे ।
कः । अस्मिन् । सत्यम् । कः । अनृतम् । कुतः । मृत्युः । कुतः । अमृतम् ॥ १४ ॥

**X.2.9** Wherefrom does mighty man get numerous pleasant and unpleasant things - sleep, distress, fatigue, delights and enjoyments ?

**X.2.10** Wherefrom comes to man injury, poverty, misery and thoughtlessness? Wherefrom comes (to him) success, prosperity, opulence, thought and ascendence?

**X.2.11** Who has created in this man the waters moving in diverse directions, moving every-where, created for flowing like rivers, quick, ruddy, red, copper-hued and smoke-coloured, running upward, downward and crosswise.

**X.2.12** Who placed beauty in him, who the dignity and who the fame ? Who set motion in him, who the consciousness, and who the behaviors in man ?

**X.2.13** Who has woven the in-breath in him, and who the out-breath and the diffused breath ? Which is the deity that has set the equalizer breath within man. (Prāṇa = in-breath; apāna = outbreath; vyāna = diffused breath; samanar = equalizer-breath).

**X.2.14** Which was the sole deity that reposed the sacrifice within this man ? Who placed the truth and the untruth within him? Wherefrom (comes) the death and wherefrom the immortality ?

को अस्मै वासः पर्यदधात्को अस्यायुरकल्पयत् ।
बलं को अस्मै प्रायच्छत्को अस्याकल्पयज्जवम् ॥१५॥
केनापो अन्वतनुत केनाहरकरोद्रुचे ।
उषसं केनान्वैन्द्ध केन सायंभवं ददे ॥१६॥
को अस्मिन्रेतो न्यदधात्तन्तुरा तायतामिति ।
मेधां को अस्मिन्नध्यौहत्को बाणं को नृतो दधौ ॥१७॥
केनेमां भूमिमौर्णोत्केन पर्यभवद्दिवम् ।
केनाभि मह्ना पर्वतान्केन कर्माणि पूरुषः ॥१८॥
केन पर्जन्यमन्वेति केन सोमं विचक्षणम् ।
केन यज्ञं च श्रद्धां च केनास्मिन्निहितं मनः ॥१९॥
केन श्रोत्रियमाप्नोति केनेमं परमेष्ठिनम् ।
केनेममग्निं पूरुषः केन संवत्सरं ममे ॥२०॥

कः । अस्मै । वासः । परि । अदधात् । कः । अस्य । आयुः । अकल्पयत् ।
बलम् । कः । अस्मै । प्र । अयच्छत् । कः । अस्य । अकल्पयत् । जवम् ॥ १५ ॥
केन । आपः । अनु । अतनुत । केन । अहः । अकरोत् । रुचे ।
उषसम् । केन । अनु । ऐन्द्ध । केन । सायम्ऽभवम् । ददे ॥ १६ ॥
कः । अस्मिन् । रेतः । नि । अदधात् । तन्तुः । आ । तायताम् । इति ।
मेधाम् । कः । अस्मिन् । अधि । औहत् । कः । बाणम् । कः । नृतः । दधौ ॥ १७ ॥
केन । इमाम् । भूमिम् । और्णोत् । केन । परि । अभवत् । दिवम् ।
केन । अभि । मह्ना । पर्वतान् । केन । कर्माणि । पुरुषः ॥ १८ ॥
केन । पर्जन्यम् । अनु । एति । केन । सोमम् । विऽचक्षणम् ।
केन । यज्ञम् । च । श्रद्धाम् । च । केन । अस्मिन् । निऽहितम् । मनः ॥ १९ ॥
केन । श्रोत्रियम् । आप्नोति । केन । इमम् । परमेऽस्थिनम् ।
केन । इमम् । अग्निम् । पुरुषः । केन । सम्ऽवत्सरम् । ममे ॥ २० ॥

**X.2.15** Who has clothed him in robes ? who has arranged his life-span? Who has bestowed strength on him ? Who has granted him the speed ? (Āyu = life-span).

**X.2.16** With what did he spread the waters around ? With what did he make the day so shining ? With what did he enkindle the dawn ? With what did he grant the coming of the evening ?

**X.2.17** Who has placed within him the semen, so that he may extend his line ? Who has conducted the intellect into him ? Who has put the singing (voice) and who the dancing in him? (Reta = semen; medha = intellect; bāṇam = speech; nṛta = dance).

**X.2.18** With what has he covered this earth? With what has he encompassed the sky ? With what has be surrounded the mountains with grandeur ? With what does the cosmic man perform his actions ?

**X.2.19** With what does he receive the rain ? With what does he obtain the wonderful cure-juice ? With what the sacrifice and faith (does he obtain) ? By whom the mind (the thinking power) has been set in him? (Soma = cure juice that treats all diseases; yajñ = sacrifice (self-less); śrraddhā = faith; determination to accept = truth for life).

**X.2.20** Through whom does he find a learned and wise guide ? Through whom does he realize this Lord of the highest abode ? Through whom does man gain this fire divine ? By what does he measure the year ? (śrotriya = learned in Vedic lores).

ब्रह्म श्रोत्रियमाप्नोति ब्रह्मेमं परमेष्ठिनम् ।
ब्रह्मेममग्निं पूरुषो ब्रह्म संवत्सरं ममे ॥२१॥
केन देवाँ अनु क्षियति केन दैवजनीर्विशः ।
केनेदमन्यन्नक्षत्रं केन सत्क्षत्रमुच्यते ॥२२॥
ब्रह्म देवाँ अनु क्षियति ब्रह्म दैवजनीर्विशः ।
ब्रह्मेदमन्यन्नक्षत्रं ब्रह्म सत्क्षत्रमुच्यते ॥२३॥
केनेयं भूमिर्विहिता केन द्यौरुत्तरा हिता ।
केनेदमूर्ध्वं तिर्यक्चान्तरिक्षं व्यचो हितम् ॥२४॥
ब्रह्मणा भूमिर्विहिता ब्रह्म द्यौरुत्तरा हिता ।
ब्रह्मेदमूर्ध्वं तिर्यक्चान्तरिक्षं व्यचो हितम् ॥२५॥
मूर्धानमस्य संसीव्याथर्वा हृदयं च यत् ।
मस्तिष्कादूर्ध्वः प्रैरयत्पवमानोधि शीर्षतः ॥२६॥

ब्रह्म । श्रोत्रियम् । आप्नोति । ब्रह्म । इमम् । परमेऽस्थिनम् ।
ब्रह्म । इमम् । अग्निम् । पुरुषः । ब्रह्म । सम्ऽवत्सरम् । ममे ॥ २१ ॥
केन । देवान् । अनु । क्षियति । केन । दैवऽजनीः । विशः ।
केन । इदम् । अन्यत् । नक्षत्रम् । केन । सत् । क्षत्रम् । उच्यते ॥ २२ ॥
ब्रह्म । देवान् । अनु । क्षियति । ब्रह्म । दैवऽजनीः । विशः ।
ब्रह्म । इदम् । अन्यत् । नक्षत्रम् । ब्रह्म । सत् । क्षत्रम् । उच्यते ॥ २३ ॥
केन । इयम् । भूमिः । विऽहिता । केन । द्यौः । उत्ऽतरा । हिता ।
केन । इदम् । ऊर्ध्वम् । तिर्यक् । च । अन्तरिक्षम् । व्यचः । हितम् ॥ २४ ॥
ब्रह्मणा । भूमिः । विऽहिता । ब्रह्म । द्यौः । उत्ऽतरा । हिता ।
ब्रह्म । इदम् । ऊर्ध्वम् । तिर्यक् । च । अन्तरिक्षम् । व्यचः । हितम् ॥ २५ ॥
मूर्धानम् । अस्य । सम्ऽसीव्य । अथर्वा । हृदयम् । च । यत् ।
मस्तिष्कात् । ऊर्ध्वः । प्र । ऐरयत् । पवमानः । अधि । शीर्षतः ॥ २६ ॥

**X.2.21** By knowledge he finds a learned and wise guide. By knowledge he realizes the Lord of the highest abode. By knowledge man gains this fire divine. By knowledge he measures the year.

**X.2.22** By what does he dwell with the enlightened ones, and by what with the people of godly nature ? By what is this other one is called the non-rulling power, and by what the real ruling power ? (Daivajanīrviśaḥ people of godly nature; na-kṣatram = non-ruling; kṣartam = ruling power).

**X.2.23** By knowledge he dwells with the enlightened ones, and by knowledge with the people of godly nature. By knowledge this other one is called the non-rulling power and by knowledge the real ruling power.

**X.2.24** By whom has this earth been put in order ? By whom is the sky set higher up ? Who has put this midspace above and spreading crosswise ? (Tiryak = cross-wise).

**X.2.25** The Lord supreme has put the earth in order. The Lord supreme has set the sky higher up. The Lord supreme has put this midspace above and spreading crosswise.

**X.2.26** Stiching his head and the heart, the uninjuring Lord, urges forth the purifying breath above the brain in the head. (Saṅsīvya = having stiched).

तद्वा अथर्वणः शिरो देवकोशः समुब्जितः ।
तत्प्राणो अभि रक्षति शिरो अन्नमथो मनः ॥२७॥
ऊर्ध्वो नु सृष्टा३स्तिर्यङ् नु सृष्टा३ः सर्वा दिशः पुरुष आ बभूवाँ३ ।
पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते ॥२८॥
यो वै तां ब्रह्मणो वेदामृतेनावृतां पुरम् ।
तस्मै ब्रह्म च ब्राह्माश्च चक्षुः प्राणं प्रजां ददुः ॥२९॥
न वै तं चक्षुर्जहाति न प्राणो जरसः पुरा ।
पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते ॥३०॥
अष्टाचक्रा नवद्वारा देवानां पूरयोध्या ।
तस्यां हिरण्ययः कोशः स्वर्गो ज्योतिषावृतः ॥३१॥
तस्मिन्हिरण्यये कोशे त्र्यरे त्रिप्रतिष्ठिते ।
तस्मिन्यद्यक्षमात्मन्वत्तद्वै ब्रह्मविदो विदुः ॥३२॥

तत् । वै । अथर्वणः । शिरः । देवऽकोशः । समऽउब्जितः ।
तत् । प्राणः । अभि । रक्षति । शिरः । अन्नम् । अथो इति । मनः ॥ २७ ॥
ऊर्ध्वः । नु । सृष्टा३ः । तिर्यङ् । नु । सृष्टा३ः । सर्वाः । दिशः । पुरुषः । आ । बभूवाँ३ ।
पुरम् । यः । ब्रह्मणः । वेद । यस्याः । पुरुषः । उच्यते ॥ २८ ॥
यः । वै । ताम् । ब्रह्मणः । वेद । अमृतेन । आऽवृताम् । पुरम् ।
तस्मै । ब्रह्म । च । ब्राह्माः । च । चक्षुः । प्राणम् । प्रऽजाम् । ददुः ॥ २९ ॥
न । वै । तम् । चक्षुः । जहाति । न । प्राणः । जरसः । पुरा ।
पुरम् । यः । ब्रह्मणः । वेद । यस्याः । पुरुषः । उच्यते ॥ ३० ॥
अष्टाऽचक्रा । नवऽद्वारा । देवानाम् । पूः । अयोध्या ।
तस्याम् । हिरण्ययः । कोशः । स्वऽगः । ज्योतिषा । आऽवृतः ॥ ३१ ॥
तस्मिन् । हिरण्यये । कोशे । त्रिऽअरे । त्रिऽप्रतिस्थिते ।
तस्मिन् । यत् । यक्षम् । आत्मन्ऽवत् । तत् । वै । ब्रह्मऽविदः । विदुः ॥३२ ॥

**X.2.27** That head, indeed, is the firmly-closed divine treasure-chest of the uninjuring Lord. The vital breath, the food and also the mind protect that head.

**X.2.28** Whether created vertically or created horizontally, all the quarters the cosmic man pervades. He whoso knows the castle of the Lord supreme, is called puruṣa (man) due to this. (ūrdhavaḥ sṛṣṭā = vertically created; tiryaṅ sṛṣṭā = horizontally or cross-wise created).

**X.2.29** Whoso knows that supreme Lord's castle, encompassed with immortality, to him the Lord supreme and devotees of the Lord supreme grant vision, vitality and offsprings. (cakṣuḥ, prāṇam, prajā).

**X.2.30** Surely the vision does not desert him, nor the vitality before the natural decay, who knows the supreme Lord's castle, due to which man is named puruṣa. (Puram = castle).

**X.2.31** With eight circles and nine gates or portals impregnable is the castle of the enlightened ones. Therein lies the golden chest, conductor to the world of bliss-encompassed by brilliant light. (aṣṭa-cakra - eight basic building materials of body) see Taitt. Āraṇyaka (I.27, 2-3)
(tvak = skin; asrak = blood; mānsà = flesh; meda = fat; asthi = bone; majjā = marrow; śukra = semen and oja = glow, (Nine portals = seven in head = 2 eyes, 2 ears, 2 nostrils, 1 mouth opening and 2 below for urine and feces). (Nava dvārā).

**X.2.32** Within that golden chest, having three spokes and three supports, (within that) there is a mighty being as its soul; surely they who have realized the Lord supreme, know him.

प्रभ्राजमानां हरिणीं यशसा संपरीवृताम् ।
पुरं हिरण्ययीं ब्रह्मा विवेशापराजिताम् ॥३३॥

प्रऽभ्राजमानाम् । हरिणीम् । यशसा । सम्ऽपरिवृताम् ।
पुरम् । हिरण्ययीम् । ब्रह्म । आ । विवेश । अपराऽजिताम् ॥ ३३ ॥

( ३ ) तृतीयं सूक्तम्

(१-२५) पञ्चविंशत्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । वरणो वनस्पतिश्चन्द्रमा वा देवता । (१, ४-५, ७, ९-१०, १२) प्रथमाचतुर्थीपञ्चमीसप्तमीनवमीदशमीद्वादशीनामृचामनुष्टुप्, (२-३, ६) द्वितीयातृतीयाषष्ठीनां भुरिक्त्रिष्टुप्, (८, १३-१४) अष्टमीत्रयोदशीचतुर्दशीनां पथ्यापङ्क्तिः, (११, १६) एकादशीषोडश्योर्भुरिगनुष्टुप्, (१५, १७-२५) पञ्चदश्याः सप्तदश्यादिनवानाञ्च षट्पदा जगती छन्दांसि ॥

अयं मे वरणो मणिः सपत्नक्षयणो वृषा ।
तेना रभस्व त्वं शत्रून्प्र मृणीहि दुरस्यतः ॥१॥
प्रैणाञ्छृणीहि प्र मृणा रभस्व मणिस्ते अस्तु पुरएता पुरस्तात् ।
अवारयन्त वरणेन देवा अभ्याचारमसुराणां श्वःश्वः ॥२॥
अयं मणिर्वरणो विश्वभेषजः सहस्राक्षो हरितो हिरण्ययः ।
स ते शत्रूनधरान्पादयाति पूर्वस्तान्दभ्नुहि ये त्वा द्विषन्ति ॥३॥
अयं ते कृत्यां विततां पौरुषेयादयं भयात् ।
अयं त्वा सर्वस्मात्पापाद्वरणो वारयिष्यते ॥४॥

अयम् । मे । वरणः । मणिः । सपत्नऽक्षयणः । वृषा ।
तेन । आ । रभस्व । त्वम् । शत्रून् । प्र । मृणीहि । दुरस्यतः ॥ १ ॥

प्र । एनान् । शृणीहि । प्र । मृण । आ । रभस्व । मणिः । ते । अस्तु । पुरःऽएता । पुरस्तात् ।
अवारयन्त । वरणेन । देवाः । अभिऽआचारम् । असुराणाम् । श्वःऽश्वः ॥ २ ॥

अयम् । मणिः । वरणः । विश्वऽभेषजः । सहस्रऽअक्षः । हरितः । हिरण्ययः ।
सः । ते । शत्रून् । अधरान् । पादयाति । पूर्वः । तान् । दभ्नुहि । ये । त्वा । द्विषन्ति ॥ ३ ॥

अयम् । ते । कृत्याम् । विऽतताम् । पौरुषेयात् । अयम् । भयात् ।
अयम् । त्वा । सर्वस्मात् । पापात् । वरणः । वारयिष्यते ॥ ४ ॥

**X.2.33** The Lord supreme enters the golden castle, which blazes brilliantly, removes all weariness, is surrounded with glory and is ever unconquered. (āparajitam and thus ayodhyā, see - ayodhya, impregnable castle; see Av. X.2.11)

## Varaṇa - maṇiḥ - Vanaspatiḥ

**X.3.1** This protective blessing of mine is a mighty destroyer of rivals. With this may you take hold of the enemies. May you crush those, who would injure you.

**X.3.2** Slay them, crush them, capture them. May this blessing be your leader while moving forward. With the protective blessing the enlightened ones have been warding off the aggressions of the destroyers of life (asuras).

**X.3.3** This protective blessing is an all-curing remedy, thousand-eyed, yellow and golden. This will subdue your enemies. Be first to attack them, who hate you. (viśva-bheṣaja = all-curing medicine).

**X.3.4** This protective blessing will ward off the harmful designs spread out for you; this will protect you from danger from men, and from all sorts of the calamities.

वरणो वारयाता अयं देवो वनस्पतिः ।
यक्ष्मो यो अस्मिन्नाविष्टस्तमु देवा अवीवरन् ॥५॥
स्वप्नं सुप्त्वा यदि पश्यासि पापं मृगः सृतिं यति धावादजुष्टाम् ।
परिक्षवाच्छकुनेः पापवादादयं मणिर्वरणो वारयिष्यते ॥६॥
अरात्यास्त्वा निर्ऋत्या अभिचारादथो भयात् ।
मृत्योरोजीयसो वधाद्वरणो वारयिष्यते ॥७॥
यन्मे माता यन्मे पिता भ्रातरो यच्च मे स्वा यदेनश्चकृमा वयम् ।
ततो नो वारयिष्यतेयं देवो वनस्पतिः ॥८॥
वरणेन प्रव्यथिता भ्रातृव्या मे सबन्धवः ।
असूर्तं रजो अप्यगुस्ते यन्त्वधमं तमः ॥९॥
अरिष्टोहमरिष्टगुरायुष्मान्त्सर्वपूरुषः ।
तं मायं वरणो मणिः परि पातु दिशोदिशः ॥१०॥

वरणः । वारयातै । अयम् । देवः । वनस्पतिः ।
यक्ष्मः । यः । अस्मिन् । आऽविष्टः । तम् । ऊं इति । देवाः । अवीवरन् ॥ ५ ॥

स्वप्नम् । सुप्त्वा । यदि । पश्यासि । पापम् । मृगः । सृतिम् । यति । धावात् । अजुष्टाम् ।
परिऽक्षवात् । शकुनेः । पापऽवादात् । अयम् । मणिः । वरणः । वारयिष्यते ॥ ६ ॥

अरात्याः । त्वा । निःऽऋत्याः । अभिऽचारात् । अथो इति । भयात् ।
मृत्योः । ओजीयसः । वधात् । वरणः । वारयिष्यते ॥ ७ ॥

यत् । मे । माता । यत् । मे । पिता । भ्रातरः । यत् । च । मे । स्वाः । यत् । एनः । चकृम । वयम् ।
ततः । नः । वारयिष्यते । अयम् । देवः । वनस्पतिः ॥ ८ ॥

वरणेन । प्रऽव्यथिताः । भ्रातृव्याः । मे । सऽबन्धवः ।
असूर्तम् । रजः । अपि । अगुः । ते । यन्तु । अधमम् । तमः ॥ ९ ॥

अरिष्टः । अहम् । अरिष्टऽगुः । आयुष्मान् । सर्वऽपुरुषः ।
तम् । मा । अयम् । वरणः । मणिः । परि । पातु । दिशःऽदिशः ॥१०॥

**X.3.5** This protective divine plant is a warder off the troubles. The enlightened ones have driven away the wasting disease, which had entered into this person.

**X.3.6** If, while sleeping, you see an evil dream; if a wild animal stalks you ominously on the way - from that, and from sneezing, and from the evil cry of a bird, this protective blessing will shield you.

**X.3.7** From adversity, from calamity, from murderous conspiracy, from fear of death and from violent death the protective blessing will shield you

**X.3.8** Whatever sin we - my mother, my father, my brothers, and my close relatives - might have committed, from that this divine lord of forest will shield us.

**X.3.9** Afflicted by the protective blessing, my hostile cousins along with their kinsman have gone to the lightless region. May they go to the vilest darkness (andham-tamaḥ).

**X.3.10** I am uninjured; uninjured are my sense-organs. I am enjoying long life, with all my men around me. Me as such, may this protective blessing guard from each and every direction.

अयं मे वरण उरसि राजा देवो वनस्पतिः ।
स मे शत्रून्वि बाधतामिन्द्रो दस्यूनिवासुरान् ॥११॥
इमं बिभर्मि वरणमायुष्माञ्छतशारदः ।
स मे राष्ट्रं च क्षत्रं च पशूनोजश्च मे दधत् ॥१२॥
यथा वातो वनस्पतीन्वृक्षान्भनक्त्योजसा ।
एवा सपत्नान्मे भङ्धि पूर्वाञ्जाताँ उतापरान्वरणस्त्वाभि रक्षतु ॥१३॥
यथा वातश्चाग्निश्च वृक्षान्प्सातो वनस्पतीन् ।
एवा सपत्नान्मे प्साहि पूर्वाञ्जाताँ उतापरान्वरणस्त्वाभि रक्षतु ॥१४॥
यथा वातेन प्रक्षीणा वृक्षाः शेरे न्यर्पिताः ।
एवा सपत्नांस्त्वं मम प्र क्षिणीहि न्यर्पय पूर्वाञ्जाताँ
उतापरान्वरणस्त्वाभि रक्षतु ॥१५॥
तांस्त्वं प्र च्छिन्द्धि वरण पुरा दिष्टात्पुरायुषः ।
य एनं पशुषु दिप्सन्ति ये चास्य राष्ट्रदिप्सवः ॥१६॥

अयम् । मे । वरणः । उरसि । राजा । देवः । वनस्पतिः ।
सः । मे । शत्रून् । वि । बाधताम् । इन्द्रः । दस्यून्ऽइव । असुरान् ॥ ११ ॥

इमम् । बिभर्मि । वरणम् । आयुष्मान् । शतऽशारदः ।
सः । मे । राष्ट्रम् । च । क्षत्रम् । च । पशून् । ओजः । च । मे । दधत् ॥ १२ ॥

यथा । वातः । वनस्पतीन् । वृक्षान् । भनक्ति । ओजसा । एव । सऽपत्नान् । मे । भङ्ग्धि । पूर्वान् । जातान् । उत । अपरान् । वरणः । त्वा । अभि । रक्षतु ॥ १३ ॥

यथा । वातः । च । अग्निः । च । वृक्षान् । प्सातः । वनस्पतीन् ।
एव । सऽपत्नान् । मे । प्साहि । पूर्वान् । ०॥ १४ ॥

यथा । वातेन । प्रऽक्षीणाः । वृक्षाः । शेरे । निऽअर्पिताः । एव । सऽपत्नान् । त्वम् । मम । प्र । क्षिणीहि । नि । अर्पय । पूर्वान् । जातान् । उत । अपरान् । वरणः । त्वा । अभि । रक्षतु ॥१५॥

तान् । त्वम् । प्र । छिन्द्धि । वरण । पुरा । दिष्टात् । पुरा । आयुषः ।
ये । एनम् । पशुषु । दिप्सन्ति । ये । च । अस्य । राष्ट्रऽदिप्सवः ॥ १६ ॥

**X.3.11** This protective blessing, shining, divine and the lord of forest is on my breast. May it harass my enemies, as the resplendent army-chief (vāja devaḥ) harasses the robbers and the destroyers of life.

**X.3.12** I put on this protective blessing, so that I may have a long life of a hundred autumns. May it bestow on me kingdom (rāṣtra) and ruling power (kṣarta), on me cattle (paśu) and vigour (ojā).

**X.3.13** Just as the wind with its face breaks the trees (vṛkṣa), the lords of the forest (vanaspati), even so may you break my rivals, born before, and also the latter. May the protective blessing guard you well. (pūrvāñ-jātā = born-before; ut-āparān = born latter).

**X.3.14** Just as the wind and the fire destroy the trees, the lords of forest even so may destroy my rivals, born before, and also the latter born. May the protective blessing guard you well.

**X.3.15** Just as the trees, broken down by the wind, lie prostrate (on the ground), even so may you break my rivals down and lay them prostrate - those born before and also the latter. May the protective blessing guard you well.

**X.3.16** Annihilate them, O protective blessing, before their term of life - them, who seek to harm him in his cattle-pounds (cattle-enclosures):and who would harm his kingdom.

यथा सूर्यो अतिभाति यथास्मिन्तेज आहितम् ।
एवा मे वरणो मणिः कीर्तिं भूतिं नि यच्छतु
तेजसा मा समुक्षतु यशसा समनक्तु मा ॥१७॥
यथा यशश्चन्द्रमस्यादित्ये च नृचक्षसि ।
एवा मे वरणो मणिः कीर्तिं भूतिं नि यच्छतु
तेजसा मा समुक्षतु यशसा समनक्तु मा ॥१८॥
यथा यशः पृथिव्यां यथास्मिञ्जातवेदसि ।
एवा मे वरणो मणिः कीर्तिं भूतिं नि यच्छतु
तेजसा मा समुक्षतु यशसा समनक्तु मा ॥१९॥
यथा यशः कन्यायां यथास्मिन्त्संभृते रथे ।
एवा मे वरणो मणिः कीर्तिं भूतिं नि यच्छतु
तेजसा मा समुक्षतु यशसा समनक्तु मा ॥२०॥
यथा यशः सोमपीथे मधुपर्के यथा यशः ।
एवा मे वरणो मणिः कीर्तिं भूतिं नि यच्छतु
तेजसा मा समुक्षतु यशसा समनक्तु मा ॥२१॥
यथा यशोऽग्निहोत्रे वषट्कारे यथा यशः ।
एवा मे वरणो मणिः कीर्तिं भूतिं नि यच्छतु
तेजसा मा समुक्षतु यशसा समनक्तु मा ॥२२॥

यथा । सूर्यः । अतिऽभाति । यथा । अस्मिन् । तेजः । आऽहितम् । एव । मे । वरणः । मणिः । कीर्तिम् । भूतिम् । नि । यच्छतु । तेजसा । मा । सम् । उक्षतु । यशसा । सम् । अनक्तु । मा ॥
यथा । यशः । चन्द्रमसि । आदित्ये । च । नृऽचक्षसि । एव । मे ॥०॥१८॥
यथा । यशः । पृथिव्याम् । यथा । अस्मिन् । जातऽवेदसि ॥०॥ १९ ॥
यथा । यशः । कन्यायाम् । यथा । अस्मिन् । सम्ऽभृते । रथे ॥०॥ २० ॥
यथा । यशः । सोमऽपीथे । मधुऽपर्के । यथा । यशः । ० ॥ २१ ॥
यथा । यशः । अग्निऽहोत्रे । वषट्ऽकारे । यथा । यशः । ० ॥ २२ ॥

**X.3.17** Just as the sun shines extremely bright, as the brilliance is stored in him, even so may this protective blessing grant me fame and prosperity, sprinkle me with lustre (teja), and anoint me with renown (yaśa).

**X.3.18** Just as there is graciousness (glory) in the moon and the sun, who watches over men, even so may this protective blessing grant me fame and prosperity, sprinkle me with lustre, and anoint me with renown (glory).

**X.3.19** Just as there is graciousness (yaśa-glory) in the earth and in this fire-divine, cognizant of all, even so may this protective blessing grant me fame and prosperity, sprinkle me with lustre and anoint me with renown (glory).

**X.3.20** Just as there is graciousness (glory) in a virgin (kanyā) and in this well-equipped chariot, even so may this protective blessing grant me fame and prosperity, sprinkle me with lustre and anoint me with renown (glory).

**X.3.21** Just as there is graciousness (glory) in the drinking of Soma (cure-juice) and as there is graciousness in the honeyed drink, even so may this protective blessing grant me fame and prosperity, sprinkle me with lustre and anoint me with renown (glory).

**X.3.22** Just as there is graciousness (glory) in the sacrifice to the adorable Lord and as there is graciousness in the offerings made with the utterance of Vaṣaṭ, even so may this protective blessing grant me fame and prosperity, sprinkle me with lustre and anoint me with renown (glory).

यथा यशो यजमाने यथास्मिन्यज्ञ आहितम् ।
एवा मे वरणो मणिः कीर्तिं भूतिं नि यच्छतु
तेजसा मा समुक्षतु यशसा समनक्तु मा ॥२३॥
यथा यशः प्रजापतौ यथास्मिन्परमेष्ठिनि ।
एवा मे वरणो मणिः कीर्तिं भूतिं नि यच्छतु
तेजसा मा समुक्षतु यशसा समनक्तु मा ॥२४॥
यथा देवेष्वमृतं यथैषु सत्यमाहितम् ।
एवा मे वरणो मणिः कीर्तिं भूतिं नि यच्छतु
तेजसा मा समुक्षतु यशसा समनक्तु मा ॥२५॥

यथा । यशः । यजमाने । यथा । अस्मिन् । यज्ञे । आऽहितम् ॥ ० ॥ २३ ॥

यथा । यशः । प्रजाऽपतौ । यथा । अस्मिन् । परमेऽस्थिनि ॥ ० ॥ २४ ॥

यथा । देवेषु । अमृतम् । यथा । एषु । सत्यम् । आऽहितम् ।
एव । मे । वरणः । मणिः । कीर्तिम् । भूतिम् । नि । यच्छतु ।
तेजसा । मा । सम् । उक्षतु । यशसा । सम् । अनक्तु । मा ॥ २५ ॥

## ( ४ ) चतुर्थं सूक्तम्

(१-२६) षड्विंशत्यृचस्यास्य सूक्तस्य गरुत्मानृषिः । तक्षको देवता । (१) प्रथमर्चः पथ्यापङ्क्तिः, (२) द्वितीयाया-स्त्रिपदा यवमध्या गायत्री, (३-४) तृतीयाचतुर्थ्योः पथ्याबृहती, (५-७, ९-११, १३-१५, १७-२०, २२, २४-२५) पञ्चम्यादितृचस्य नवम्यादितृचस्य त्रयोदश्यादितृचस्य सप्तदश्यादिचतसृणां द्वाविंशीचतुर्विंशी-पञ्चविंशीनाञ्चानुष्टुप्, (८) अष्टम्या उष्णिग्गर्भा परात्रिष्टुप्, (१२) द्वादश्या भुरिग्गायत्री, (१६) षोडश्यास्त्रिपदा प्रतिष्ठा गायत्री, (२१) एकविंश्याः ककुम्मत्यनुष्टुप्, (२३) त्रयोविंश्या-स्त्रिष्टुप्, (२६) षड्विंश्याश्च त्र्यवसाना षट्पदा बृहतीगर्भा ककुम्मती भुरिक्त्रिष्टुप् छन्दांसि ॥

इन्द्रस्य प्रथमो रथो देवानामपरो रथो वरुणस्य तृतीय इत् ।
अहीनामपमा रथ स्थाणुमारदथार्षत् ॥१॥
दर्भः शोचिस्तरूणकमश्वस्य वारः परुषस्य वारः । रथस्य बन्धुरम् ॥२॥

इन्द्रस्य । प्रथमः । रथः । देवानाम् । अपरः । रथः । वरुणस्य । तृतीयः । इत् ।
अहीनाम् । अपऽमा । रथः । स्थाणुम् । आरत् । अथ । अर्षत् ॥ १ ॥
दर्भः । शोचिः । तरूणकम् । अश्वस्य । वारः । परुषस्य । वारः । रथस्य । बन्धुरम् ॥ २ ॥

**X.3.23** Just as there is graciousness (glory) in the sacrificer and as is laid in this sacrifice, even so may this protective blessing grant me fame and prosperity, sprinkle me with lustre and anoint me with renown (glory).

**X.3.24** Just as there is graciousness in the Lord of creatures and as in this Lord of the highest abode, even so may this protective blessing grant me fame and prosperity, sprinkle me with lustre and anoint me with renown (glory).

**X.3.25** Just as there is immortality in the enlightened ones, and as the truth is set in them, even so may this protective blessing grant me fame and prosperity, sprinkle me with lustre, and anoint me with renown (glory).

**Sarpa-viṣa-apākaraṇam (Snake-Poison - Its Elimination)**

**X.4.1** First chariot is that of the resplendent Lord (Indra); another chariot is that of the enlightened ones (deva); the chariot of the venerable Lord (varuṇa) is the third; the last one is the chariot of the serpents (ahī) or clouds; it goes to a piller (sthāṇu) nest of white ants and thereafter glides quickly.

**X.4.2** The sacred grass (darbha), the fire, young shoot or tarūṇaka (of plants), horse's hair, man's hair, the chariot's nave (are the cures for snake-bite). (bandhur = nave (of a chariot); aśva-vara = horse- hair)

अर्व श्वेत पदा जहि पूर्वेण चापरेण च ।
उदप्लुतमिव दार्वहीनामरसं विषं वारुग्रम् ॥३॥
अरंघुषो निमज्योन्मज्य पुनरब्रवीत् ।
उदप्लुतमिव दार्वहीनामरसं विषं वारुग्रम् ॥४॥
पैद्वो हन्ति कसर्णीलं पैद्वः श्वित्रमुतासितम् ।
पैद्वो रथर्व्याः शिरः सं बिभेद पृदाक्वाः ॥५॥
पैद्व प्रेहि प्रथमोनु त्वा वयमेमसि ।
अहीन्व्यस्यतात्पथो येन स्मा वयमेमसि ॥६॥
इदं पैद्वो अजायतेदमस्य परायणम् ।
इमान्यर्वतः पदाहिघ्न्यो वाजिनीवतः ॥७॥
संयतं न वि ष्परद्व्यात्तं न सं यमत् ।
अस्मिन्क्षेत्रे द्वावही स्त्री च पुमांश्च तावुभावरसा ॥८॥

अर्व । श्वेत । पदा । जहि । पूर्वेण । च । अपरेण । च ।
उदप्लुतम्ऽइव । दारु । अहीनाम् । अरसम् । विषम् । वाः । उग्रम् ॥ ३ ॥
अरम्ऽघुषः । निऽमज्य । उत्ऽमज्य । पुनः । अब्रवीत् ।
उदप्लुतम्ऽइव । दारु । अहीनाम् । अरसम् । विषम् । वाः । उग्रम् ॥ ४ ॥
पैद्वः । हन्ति । कसर्णीलम् । पैद्वः । श्वित्रम् । उत । असितम् ।
पैद्वः । रथर्व्याः । शिरः । सम् । बिभेद । पृदाक्वाः ॥ ५ ॥
पैद्व । प्र । इहि । प्रथमः । अनु । त्वा । वयम् । आ । ईमसि ।
अहीन् । वि । अस्यतात् । पथः । येन । स्म । वयम् । आऽईमसि ॥ ६ ॥
इदम् । पैद्वः । अजायत । इदम् । अस्य । पराऽअयनम् ।
इमानि । अर्वतः । पदा । अहिऽघ्न्यः । वाजिनीऽवतः ॥ ७ ॥
सम्ऽयतम् । न । वि । स्परत् । विऽआत्तम् । न । सम् । यमत् ।
अस्मिन् । क्षेत्रे । द्वौ । अही इति । स्त्री । पुमान् । च । तौ । उभौ । अरसा ॥ ८ ॥

**X.4.3** O white horse, smite with your foot, with the fore foot and with the hind foot also. May you stay the strong poison of snakes and make it weak like a wood soaked in water.

**X.4.4** The loud-neighing horse, diving under water and emerging up again, said. "Stayed is the strong poison of snakes and made weak like a wood soaked in water."

**X.4.5** Paidva kills the kasarṇīla; paidva (kills) the whitish as well as the black one. Paidva breaks the head of the ratharvi and of the viper (pṛdāku). (ratharvi and pṛdāku = names of various snakes),

**X.4.6** O paidva, first you go forward, then we shall follow you. Throw the serpents off the path, along which we have to travel.

**X.4.7** This paidva has grown here. This is its best abode. These are the identification marks of the quick and powerful killer of the serpents.

**X.4.8** May the closed (mouth of the snake) not open; may the open (mouth of the snake) not close. there are two (types) serpents in this field, a female and a male. Both of them are powerless.

अरसास इहाहयो ये अन्ति ये च दूरके ।
घनेन हन्मि वृश्चिकमहिं दण्डेनागतम् ॥९॥
अघाश्वस्येदं भेषजमुभयोः स्वजस्य च ।
इन्द्रो मेहिमघायन्तमहिं पैद्वो अरन्धयत् ॥१०॥
पैद्वस्य मन्महे वयं स्थिरस्य स्थिरधाम्नः ।
इमे पश्चा पृदाकवः प्रदीध्यत आसते ॥११॥
नष्टासवो नष्टविषा हता इन्द्रेण वज्रिणा ।
जघानेन्द्रो जघ्निमा वयम् ॥१२॥
हतास्तिरश्चिराजयो निपिष्टासः पृदाकवः ।
दर्विं करिक्रतं श्वित्रं दर्भेष्वसितं जहि ॥१३॥
कैरातिका कुमारिका सका खनति भेषजम् ।
हिरण्ययीभिरभ्रिभिर्गिरीणामुप सानुषु ॥१४॥

अरसासः । इह । अहयः । ये । अन्ति । ये । च । दूरके ।
घनेन । हन्मि । वृश्चिकम् । अहिम् । दण्डेन । आऽगतम् ॥ ९ ॥
अघऽअश्वस्य । इदम् । भेषजम् । उभयोः । स्वजस्य । च ।
इन्द्रः । मे । अहिम् । अघऽयन्तम् । अहिम् । पैद्वः । अरन्धयत् ॥ १० ॥
पैद्वस्य । मन्महे । वयम् । स्थिरस्य । स्थिरऽधाम्नः ।
इमे । पश्चा । पृदाकवः । प्रऽदीध्यतः । आसते ॥ ११ ॥
नष्टऽअसवः । नष्टऽविषाः । हताः । इन्द्रेण । वज्रिणा ।
जघान । इन्द्रः । जघ्निम । वयम् ॥ १२ ॥
हताः । तिरश्चिऽराजयः । निऽपिष्टासः । पृदाकवः ।
दर्विम् । करिक्रतम् । श्वित्रम् । दर्भेषु । असितम् । जहि ॥ १३ ॥
कैरातिका । कुमारिका । सका । खनति । भेषजम् ।
हिरण्ययीभिः । अभ्रिऽभिः । गिरीणाम् । उप । सानुषु ॥ १४ ॥

**X.4.9** May the serpents that are near and that are afar,or without rasa or poison become powerless. With a mace I kill the scorpion (vṛścika) and with a stick the snake that comes here. With a hard stick I kill the stinger serpent that comes here.

**X.4.10** This is the remedy for both the aghāśva (poisonous) and the constrictor (svaja). The resplendent paidva has put the poisonous snake and also the serpent in my power.

**X.4.11** With appreciation, we think of paidva, steady, and of fixed abode. Behind there these vipers lie thinking of us.

**X.4.12** With destroyed life, with destroyed poison, they lie smitten by the resplendent one (Indra), bearing the adamantine weapon. The resplendent one has killed; we also kill them.

**X.4.13** Killed are the snakes with crossed lines (tiraści-rājayaḥ); crushed are the vipers (pṛdāku). Kill the hooded snake (cobra), karikratam, white and also the black snake in the kuśa grass.

**X.4.14** The young kirāta (kairātikā), maiden (kumārikā) digs out the medicine with golden shovels on the ridges of the hills.

आयमगन्युवा भिषक्पृश्निहापराजितः ।
स वै स्वजस्य जम्भन उभयोर्वृश्चिकस्य च ॥१५॥
इन्द्रो मेहिमरन्धयन्मित्रश्च वरुणश्च ।
वातापर्जन्योउभा ॥१६॥
इन्द्रो मेहिमरन्धयत्पृदाकुं च पृदाकम् ।
स्वजं तिरश्चिराजिं कसर्णीलं दशोनसिम् ॥१७॥
इन्द्रो जघान प्रथमं जनितारमहे तव ।
तेषामु तृह्यमाणानां कः स्वित्तेषामसद्रसः ॥१८॥
सं हि शीर्षाण्यग्रभं पौञ्जिष्ठ इव कर्वरम् ।
सिन्धोर्मध्यं परेत्य व्यनिजमहेर्विषम् ॥१९॥
अहीनां सर्वेषां विषं परा वहन्तु सिन्धवः ।
हतास्तिरश्चिराजयो निपिष्टासः पृदाकवः ॥२०॥

आ । अयम् । अगन् । युवा । भिषक् । पृश्निऽहा । अपराऽजितः ।
सः । वै । स्वजस्य । जम्भनः । उभयोः । वृश्चिकस्य । च ॥ १५ ॥
इन्द्रः । मे । अहिम् । अरन्धयत् । मित्रः । च । वरुणः । च । वातापर्जन्या । उभा ॥१६॥
इन्द्रः । मे । अहिम् । अरन्धयत् । पृदाकुम् । च । पृदाकम् ।
स्वजम् । तिरश्चिऽराजिम् । कसर्णीलम् । दशोनसिम् ॥ १७ ॥
इन्द्रः । जघान । प्रथमम् । जनितारम् । अहे । तव ।
तेषाम् । ऊं इति । तृह्यमाणानाम् । कः । स्वित् । तेषाम् । असत् । रसः ॥ १८ ॥
सम् । हि । शीर्षाणि । अग्रभम् । पौञ्जिष्ठःऽइव । कर्वरम् ।
सिन्धोः । मध्यम् । पराऽइत्य । वि । अनिजम् । अहेः । विषम् ॥ १९ ॥
अहीनाम् । सर्वेषाम् । विषम् । परा । वहन्तु । सिन्धवः ।
हताः । तिरश्चिऽराजयः । निऽपिष्टासः । पृदाकवः ॥ २० ॥

**X.4.15** Here comes this youthful physician, killer of the speckled snakes (pṛśnihā) and always unconquered. He is the slayer of both, the contractor (svaja) and the stinger (Vṛścika).

**X.4.16** The resplendent Lord, the friendly Lord, the venerable Lord, and both the blower (vāta) and the showerer (parjanya), have put the serpent in my power.

**X.4.17** The resplendent one has put in my power the serpent, the viper male and the viper female, the constrictor, the cross-lined, the kasarṇila, and the daśonasi.

**X.4.18** O serpent, the resplendent one has killed your first progenitor. What power can there be in them, who have been thus shattered.

**X.4.19** I have grabbed the heads (of the snakes), just as a fisherman grabs a spotted (fish) going to the middle of the stream (sindhu-madhya), I have washed the poison off the snake.

**X.4.20** May the streams wash the poison of all the snakes far away. The cross-lined (snakes) have been killed; the vipers have been crushed thoroughly.

ओषधीनामहं वृण उर्वरीरिव साधुया ।
नयाम्यर्वतीरिवाहे निरैतु ते विषम् ॥२१॥
यदग्नौ सूर्ये विषं पृथिव्यामोषधीषु यत् ।
कान्दाविषं कनक्ककं निरैत्वैतु ते विषम् ॥२२॥
ये अग्निजा ओषधिजा अहीनां ये अप्सुजा विद्युत आबभूवुः ।
येषां जातानि बहुधा महान्ति तेभ्यः सर्पेभ्यो नमसा विधेम ॥२३॥
तौदी नामासि कन्या घृताची नाम वा असि ।
अधस्पदेन ते पदमा ददे विषदूषणम् ॥२४॥
अङ्गादङ्गात्प्र च्यावय हृदयं परि वर्जय ।
अधा विषस्य यत्तेजोऽवाचीनं तदेतु ते ॥२५॥
आरे अभूद्विषमरौद्विषे विषमप्रागपि ।
अग्निर्विषमहेर्निरधात्सोमो निरणयीत् ।
दंष्टारमन्वगाद्विषमहिरमृत ॥२६॥

ओषधीनाम् । अहम् । वृणे । उर्वरीःऽइव । साधुऽया ।
नयामि । अर्वतीःऽइव । अहे । निःऽऐतु । ते । विषम् ॥ २१ ॥

यत् । अग्नौ । सूर्ये । विषम् । पृथिव्याम् । ओषधीषु । यत् ।
कान्दाऽविषम् । कनक्ककम् । निःऽऐतु । आ । एतु । ते । विषम् ॥ २२ ॥

ये । अग्निऽजाः । ओषधिऽजाः । अहीनाम् । ये । अप्सुऽजाः । विऽद्युतः । आऽबभूवुः ।
येषाम् । जातानि । बहुऽधा । महान्ति । तेभ्यः । सर्पेभ्यः । नमसा । विधेम ॥ २३ ॥

तौदी । नाम । असि । कन्या । घृताची । नाम । वै । असि ।
अधःऽपदेन । ते । पदम् । आ । ददे । विषऽदूषणम् ॥ २४ ॥

अङ्गात्ऽअङ्गात् । प्र । च्यवय । हृदयम् । परि । वर्जय ।
अध । विषस्य । यत् । तेजः । अवाचीनम् । तत् । एतु । ते ॥ २५ ॥

आरे । अभूत् । विषम् । अरौत् । विषे । विषम् । अप्राक् । अपि ।
अग्निः । विषम् । अहेः । निः । अधात् । सोमः । निः । अनयीत् ।
दंष्टारम् । अनु । अगात् । विषम् । अहिः । अमृत ॥ २६ ॥

**X.4.21** I select carefully the medicinal herbs. I fetch them with ease like those grown on fertile lands. O snake, may your venom, go away like fast speeding mares.

**X.4.22** What poison is there in the fire, in the Sun, in the earth and in the herbs; the poison, which is stored in tubers (kāndā-viśa) and is very effective, may all that come out of you; may it pass away.

**X.4.23** We bow in reverence to those of the serpents, which are born from fire, from plants, which are born in waters and those which have sprung from the lightning; to those whose broods (jātāni) are very large in number.

**X.4.24** (O herb), you are taudiī, kanyā or ghṛtācī by name. Along with your lower part, I take your root, which destroys the poison.

**X.4.25** Remove the poison from each and every part of the body. Keep it away from the heart. Then, whatever strength of poison is there, may that pass downward from you.

**X.4.26** It was far away. Still it obstructed the poison. It has mingled the poison with poison. The fire has determined the poison of the snake and soma (cure-juice) has drawn it out. The poison of the snake has gone back to the stinger (daṇṣṭāram or biter). The snake has died.

### ( ५ ) पञ्चमं सूक्तम्

(१-५०) पञ्चाशदृचस्यास्य सूक्तस्य (१-२४) प्रथमादिचतुर्विंशत्यृचां सिन्धुद्वीप ऋषिः । आपश्चन्द्रमा वा देवता ।
(१-५) प्रथमादिपञ्चानां पुरोऽभिकृतिः ककुम्मतीगर्भा पङ्क्तिः, (६) षष्ठ्याश्चतुष्पदा जगतीगर्भा जगती,
(७-१०, १२-१३) सप्तम्यादिचतसृणां द्वादशीत्रयोदश्योश्च त्र्यवसाना पञ्चपदा विपरीतपादलक्ष्मा
बृहती, (११, १४) एकादशीचतुर्दश्योः पथ्यापङ्क्तिः, (१५-१८, २१) पञ्चदश्यादिचतसृणामेक-
विंश्याश्च चतुरवसाना दशपदा त्रैष्टुभगर्भातिधृतिः, (१९-२०) एकोनविंशीविंश्योश्चतुर-
वसाना दशपदा त्रैष्टुभगर्भा कृतिः, (२२-२३) द्वाविंशीत्रयोविंश्योरनुष्टुप्,
(२४) चतुर्विंश्याश्च त्रिपदा विराड्गायत्री छन्दांसि ।

(२५-३५) पञ्चविंश्याद्येकादशर्चां कौशिक ऋषिः । विष्णुक्रमः प्रतिमन्त्रोक्ता वा देवताः ।
त्र्यवसाना षट्पदा यथाक्षरं शक्वर्यतिशक्वरी च छन्दसी ।

(३६) षट्त्रिंश्या ऋचः कौशिक ऋषिः । मृत्युर्देवता । पञ्चपदातिशाक्वरातिजागतगर्भाष्टिश्छन्दः ।

(३७-४१) सप्तत्रिंश्यादिपञ्चर्चां ब्रह्मा ऋषिः । मन्त्रोक्ता देवताः । (३७) सप्तत्रिंश्या विराट् पुरस्ताद्बृहती,
(३८) अष्टात्रिंश्याः पुर उष्णिक्, (३९, ४१) एकोनचत्वारिंश्येकचत्वारिंश्योरार्षी गायत्री,
(४०) चत्वारिंश्याश्च विराड्विषमा गायत्री छन्दांसि ।

(४२-५०) द्विचत्वारिंश्यादिनवर्चां विहव्य ऋषिः । प्रजापतिर्देवता । (४२-४३, ४५-४९) द्विचत्वारिंशी-
त्रिचत्वारिंश्योः पञ्चचत्वारिंश्यादिपञ्चानाञ्चानुष्टुप्, (४४) चतुश्चत्वारिंश्यास्त्रिपदा
गायत्रीगर्भानुष्टुप्, (५०) पञ्चाशयाश्च त्रिष्टुप् छन्दांसि ॥

इन्द्रस्यौज स्थेन्द्रस्य सह स्थेन्द्रस्य बलं स्थेन्द्रस्य वीर्यं स्थेन्द्रस्य नृम्णं स्थ ।
जिष्णवे योगाय ब्रह्मयोगैर्वो युनज्मि ॥१॥

इन्द्रस्यौज स्थेन्द्रस्य सह स्थेन्द्रस्य बलं स्थेन्द्रस्य वीर्यं स्थेन्द्रस्य नृम्णं स्थ ।
जिष्णवे योगाय क्षत्रयोगैर्वो युनज्मि ॥२॥

इन्द्रस्यौज स्थेन्द्रस्य सह स्थेन्द्रस्य बलं स्थेन्द्रस्य वीर्यं स्थेन्द्रस्य नृम्णं स्थ ।
जिष्णवे योगायेन्द्रयोगैर्वो युनज्मि ॥३॥

इन्द्रस्यौज स्थेन्द्रस्य सह स्थेन्द्रस्य बलं स्थेन्द्रस्य वीर्यं स्थेन्द्रस्य नृम्णं स्थ ।
जिष्णवे योगाय सोमयोगैर्वो युनज्मि ॥४॥

इन्द्रस्य । ओजः । स्थ । इन्द्रस्य । सहः । स्थ । इन्द्रस्य । बलम् । स्थ । इन्द्रस्य । वीर्यम् ।
स्थ । इन्द्रस्य । नृम्णम् । स्थ । जिष्णवे । योगाय । ब्रह्मऽयोगैः । वः । युनज्मि ॥ १ ॥

इन्द्रस्य । ओजः । ०। जिष्णवे । योगाय । क्षत्रऽयोगैः । वः । युनज्मि ॥ २ ॥

इन्द्रस्य । ओजः । ०। जिष्णवे । योगाय । इन्द्रऽयोगैः । वः । युनज्मि ॥ ३ ॥

इन्द्रस्य । ओजः ।०। जिष्णवे । योगाय । सोमऽयोगैः । वः । युनज्मि ॥ ४॥

## Āpaḥ

**X.5.1** (O waters), you are the vigour of the resplendent Lord (Indra), the conquering force of the resplendent Lord, the strength of the resplendent Lord, the valour of the resplendent Lord, the manliness of the resplendent Lord, for the enterprize of conquest, I equip you with the means of intellectual power (brahma-yogaiḥ-nṛmṇam).

**X.5.2** (O water), you are the vigour of the resplendent Lord, the conquering force of the resplendent Lord, the strength of the resplendent Lord; the valour of the resplendent Lord, the manliness of the resplendent Lord; for the enterprize of the conquest, I equip you with the means of ruling power (Kṣatra-yogaiḥ-nṛmṇam)

**X.5.3** (O waters), You are the vigour of the resplendent Lord, the conquering force of the resplendent Lord, the strength of the resplendent Lord, the valour of the resplendent Lord, the manliness of the resplendent Lord; for the enterprize of the conquest, I equip you with the means of the resplendent Lord (Indrasya-nṛmṇam).

**X.5.4** (O water), you are the vigour of the resplendent Lord, the conquering force of the resplendent Lord, the strength of the resplendent Lord, the valour of the resplendent Lord, the manliness of the resplendent Lord; for the enterprize of the conquest, I equip you with the means of the blissful Lord (Somayogaiḥ-nṛmṇam).

इन्द्रस्यौज स्थेन्द्रस्य सह स्थेन्द्रस्य बलं स्थेन्द्रस्य वीर्यं स्थेन्द्रस्य नृम्णं स्थ ।
जिष्णवे योगायाप्सुयोगैर्वो युनज्मि ॥५॥

इन्द्रस्यौज स्थेन्द्रस्य सह स्थेन्द्रस्य बलं स्थेन्द्रस्य वीर्यं स्थेन्द्रस्य नृम्णं स्थ ।
जिष्णवे योगाय विश्वानि मा भूतान्युप तिष्ठन्तु युक्ता म आप स्थ ॥६॥

अग्नेर्भाग स्थ । अपां शुक्रमापो देवीर्वर्चो अस्मासु धत्त ।
प्रजापतेर्वो धाम्नास्मै लोकाय सादये ॥७॥

इन्द्रस्य भाग स्थ । अपां शुक्रमापो देवीर्वर्चो अस्मासु धत्त ।
प्रजापतेर्वो धाम्नास्मै लोकाय सादये ॥८॥

सोमस्य भाग स्थ । अपां शुक्रमापो देवीर्वर्चो अस्मासु धत्त ।
प्रजापतेर्वो धाम्नास्मै लोकाय सादये ॥९॥

वरुणस्य भाग स्थ । अपां शुक्रमापो देवीर्वर्चो अस्मासु धत्त ।
प्रजापतेर्वो धाम्नास्मै लोकाय सादये ॥१०॥

इन्द्रस्य । ओजः । ०। जिष्णवे । योगाय । अप्सुऽयोगैः । वः । युनज्मि ॥ ५ ॥

इन्द्रस्य । ओजः । स्थ । इन्द्रस्य । सहः । स्थ । इन्द्रस्य । बलम् । स्थ । इन्द्रस्य । वीर्यम् । स्थ । इन्द्रस्य । नृम्णम् । स्थ । जिष्णवे । योगाय । विश्वानि । मा । भूतानि । उप । तिष्ठन्तु । युक्ताः । मे । आपः । स्थ ॥ ६ ॥

अग्नेः । भागः । स्थ । अपाम् । शुक्रम । आपः । देवीः । वर्चः । अस्मासु । धत्त । प्रजाऽपतेः । वः । धाम्ना । अस्मै । लोकाय । सादये ॥ ७ ॥

इन्द्रस्य । भागः । ० ॥ ८ ॥

सोमस्य । भागः । ० ॥ ९ ॥

वरुणस्य । भागः ।० ॥ १० ॥

**X.5.5** (O waters), you are the vigour of the resplendent Lord, the conquering force of the resplendent Lord, the strength of the resplendent Lord, the valour of the resplendent Lord, the manliness of the resplendent Lord; for the enterprize of conquest, I equip you with the means that are within the waters (Apsuyogaiḥ-nṛmṇam).

**X.5.6** (O waters), you are the vigour of the resplendent Lord, the conquering force of the resplendent Lord, the strength of the resplendent Lord, the valour of the resplendent Lord, the manliness of the resplendent Lord; for the enterprize of the conquest, may all the beings attend on me. O waters, may you suit me.

**X.5.7** You are the portion of the adorable Lord (Agni). O waters divine, may you put in us the lustre, (which is) the sperm of the waters. From the domain of the creator Lord. I set you (here) for this world.

**X.5.8** You are the portion of the resplendent Lord (Indra). O waters divine, may you put in us the lustre, (which is) the sperm of the waters. From the domain of the creator Lord, I set you (here) for this world.

**X.5.9** You are the portion of the blissful Lord (Soma). O waters divine, may you put in us the lustre, (which is) the sperm of the waters. From the domain of the creator Lord, I set you (here) for this world.

**X.5.10** You are the portion of the venerable Lord (Varaṇa). O waters divine, may you put in us the lustre (which is) the sperm of the waters. From the domain of the creator Lord, I set you (here) for this world.

मित्रावरुणयोर्भाग स्थ । अपां शुक्रमापो देवीर्वर्चो अस्मासु धत्त ।
प्रजापतेर्वो धाम्नास्मै लोकाय सादये ॥११॥
यमस्य भाग स्थ । अपां शुक्रमापो देवीर्वर्चो अस्मासु धत्त ।
प्रजापतेर्वो धाम्नास्मै लोकाय सादये ॥१२॥
पितृणां भाग स्थ । अपां शुक्रमापो देवीर्वर्चो अस्मासु धत्त ।
प्रजापतेर्वो धाम्नास्मै लोकाय सादये ॥१३॥
देवस्य सवितुर्भाग स्थ । अपां शुक्रमापो देवीर्वर्चो अस्मासु धत्त ।
प्रजापतेर्वो धाम्नास्मै लोकाय सादये ॥१४॥
यो व आपोपां भागो३प्स्व१न्तर्यजुष्यो॑ देवयजनः ।
इदं तमति सृजामि तं माभ्यवनिक्षि ।
तेन तमभ्यतिसृजामो यो३स्मान्द्वेष्टि यं वयं द्विष्मः ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणानेन कर्मणानया मेन्या ॥१५॥
यो व आपोपामूर्मिरप्स्व१न्तर्यजुष्यो॑ देवयजनः ।
इदं तमति सृजामि तं माभ्यवनिक्षि ।
तेन तमभ्यतिसृजामो यो३स्मान्द्वेष्टि यं वयं द्विष्मः ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणानेन कर्मणानया मेन्या ॥१६॥

मित्रावरुणयोः । भागः ।० ॥ ११ ॥

यमस्य । भागः ।० ॥ १२ ॥

पितृणाम् । भागः ।० ॥ १३ ॥

देवस्य । सवितुः । भागः । स्थ । अपाम् । शुक्रम् । आपः । देवीः । वर्चः । अस्मासु ।
धत्त । प्रजाऽपतेः । वः । धाम्ना । अस्मै । लोकाय । सादये ॥ १४ ॥

यः । वः । आपः । अपाम् । भागः । अप्ऽसु । अन्तः । यजुष्यः । देवऽयजनः ।
इदम् । तम् । अति । सृजामि । तम् । मा । अभिऽअवनिक्षि ।
तेन । तम् । अभिऽअतिसृजामः । यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः ।
तम् । वधेयम् । तम् । स्तृषीय । अनेन । ब्रह्मणा । अनेन । कर्मणा । अनया । मेन्या ॥ १५ ॥

यः । वः । आपः । अपाम् । ऊर्मिः । अप्ऽसु ।० ॥ १६ ॥

**X.5.11** You are the Lord friendly and venerable (Mitrā-varuṇa). O waters divine, may you put in us the lustre, (which is) the sperm of the waters. From the domain of the creator Lord, I set you (here) for this world.

**X.5.12** You are the portion of the controller Lord (Yama). O waters divine, may put in us the lustre, (which is) the sperm of the waters. From the domain of the creator Lord, I set you (here) for this world.

**X.5.13** You are the portion of the elders (Pitṛs). O waters divine, may you put in us the lustre (which is) the sperm of the waters. From the domain of the creator Lord, I set you (here) for this world.

**X.5.14** You are the portion of the impeller Lord (Deva-savitṛ). O waters divine, may you put in us the lustre, (which is) the sperm of the waters. From the domain of the creator Lord, I set you (here) for this world.

**X.5.15** What of you, O waters, is the portion (bhāga) of water within the waters, useful or the sacrificial rites (Yajuṣya) and useful for the congregation of enlightened beings (gods or devas), that I present here. May I not dismiss or ignore him outright. That let me not wash down against myself (tam mābhya-vanikṣi). That we do not let go against him who hates us, or whom we hate, him may I slay, or stab, him may I bestrews (stṛṣīya) with this prayer, (brahmaṇā) with this act (karmaṇā) with this weapon (menyā).

**X.5.16** What of you, O waters, is the wave (ūrmi) of the waters, useful for the sacrificial rites (yajuṣya) and useful for the congregation of enlightened beings (gods or devas), that' I present here, may I not dismiss or ignore him outright. That let me not wash down against myself (tam mābhya vanikṣi). That we do not let go against him who hates us, or whom we hate; him may I slay, or stab, him may I bestrew (stṛṣiya) with this prayer (brahmaṇnā), with this acts (karmaṇā) with this weapon (menyā).

यो व आपोपां वत्सो३ प्स्व१न्तर्यजुष्यो॒ देवयजनः ।
इदं तमति सृजामि तं माभ्यवनिक्षि ।
तेन तमभ्यतिसृजामो यो३स्मान्द्वेष्टि यं वयं द्विष्मः ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणानेन कर्मणानया मेन्या ॥१७॥
यो व आपोपां वृषभो३ प्स्व१न्तर्यजुष्यो॒ देवयजनः ।
इदं तमति सृजामि तं माभ्यवनिक्षि ।
तेन तमभ्यतिसृजामो यो३स्मान्द्वेष्टि यं वयं द्विष्मः ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणानेन कर्मणानया मेन्या ॥१८॥
यो व आपोपां हिरण्यगर्भो३ प्स्व१न्तर्यजुष्यो॒ देवयजनः ।
इदं तमति सृजामि तं माभ्यवनिक्षि ।
तेन तमभ्यतिसृजामो यो३स्मान्द्वेष्टि यं वयं द्विष्मः ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणानेन कर्मणानया मेन्या ॥१९॥
यो व आपोपामश्मा पृश्निर्दिव्यो३ प्स्व१न्तर्यजुष्यो॒ देवयजनः ।
इदं तमति सृजामि तं माभ्यवनिक्षि ।
तेन तमभ्यतिसृजामो यो३स्मान्द्वेष्टि यं वयं द्विष्मः ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणानेन कर्मणानया मेन्या ॥२०॥

यः । वः । आपः । अपाम् । वत्सः । अप्ऽसु ।० ॥ १७ ॥

यः । वः । आपः । अपाम् । वृषभः । अप्ऽसु ।० ॥ १८ ॥

यः । वः । आपः । अपाम् । हिरण्यऽगर्भः । अप्ऽसु ।० ॥ १९ ॥

यः । वः । आपः । अपाम् । अश्मा । पृश्निः । दिव्यः । अप्ऽसु । अन्तः । यजुष्यः । देवऽयजनः ।
इदम् । तम् । अति । सृजामि । तम् । मा ।० ॥ तेन । तम् ।० ॥ २० ॥

**X.5.17** What of you, O waters is the young dear child (vatsa) of the waters within the waters, useful for the sacrificial (yajuṣya) and useful for the congregation of enligtened beings (gods or devas), that I present here. May I not dismiss or ignore him outright. That let me not wash down against myself. That we do not let go against him who hates us, or whom we hate; him may I slay, or stab; him may I bestrew (stṛṣīya), with this prayer (brahmaṇā) with this act (karmaṇā), with this weapon (menyā).

**X.5.18** What of you, O waters, is the vṛṣabha (bull or impregnator) of the waters within waters, useful for the sacrificial rites (yajuṣya) useful for the congregation of enlightened beings (gods or devas) (devayajanaḥ) that I present here; may I not dismiss or ignore him outright. That let me not wash down against myself. That we do not let go against him who hates us, or whom we hate; him may I slay, or stab; him may I bestrew (stṛṣīya), with this prayer (brahmaṇā), with this act (karmaṇā) with this weapon (menyā).

**X.5.19** What of you, O waters, is the golden-wealth (hiraṇya-garbha, shining and glittering) of the waters within waters, useful for the sacrificial rites (yajuṣya), useful for the congregation of enlightened beings (gods, or devas) that I present here; may I not dismiss or ignore him outright. That let me not wash down against myself. That we do not let go against him who hates us, or whom we hate; him may I slay, or stab; him may I bestrew (stṛṣīya), with this prayer (brahmaṇā), with this act (karmaṇā), with this weapon (menyā).

**X.5.20** What of you, O waters, is the Heavenly spotted stone of the waters within the waters, useful for the sacrificial rites (yajuṣya), useful for the congregation of enlightened beings (gods or devas) that I present here; may I not dismiss or ignore him outright. That let me not wash down against my self. That we do not let go against him who hates us, or whom we hate; him may I slay, or stab, him may I bestrew with this prayer (brahmaṇā), with this act ( karmaṇā), with this weapon (menyā).

ये वं आपोपाममग्नयोप्स्व१न्तर्यजुष्या३ देवयजनाः ।
इदं तानति सृजामि तान्माभ्यवनिक्षि ।
तैस्तमभ्यतिसृजामो यो३स्मान्द्वेष्टि यं वयं द्विष्मः ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणानेन कर्मणानया मेन्या ॥२१॥
यदर्वाचीनं त्रैहायणादनृतं किं चोदिम ।
आपो मा तस्मात्सर्वस्माद्दुरितात्पान्त्वंहसः ॥२२॥
समुद्रं वः प्र हिणोमि स्वां योनिमपीतन ।
अरिष्टाः सर्वहायसो मा च नः किं चनाममत् ॥२३॥
अरिप्रा आपो अप रिप्रमस्मत् ।
प्रास्मदेनो दुरितं सुप्रतीकाः प्र दुष्वप्न्यं प्र मलं वहन्तु ॥२४॥
विष्णोः क्रमोसि सपत्नहा पृथिवीसंशितोग्नितेजाः ।
पृथिवीमनु वि क्रमेहं पृथिव्यास्तं निर्भजामो यो३स्मान्द्वेष्टि यं वयं द्विष्मः ।
स मा जीवीत्तं प्राणो जहातु ॥२५॥

ये । वः । आपः । अपाम् । अग्नयः । अप्ऽसु । अन्तः । यजुष्याः । देवऽयजनाः ।
इदम् । तान् । अति । सृजामि । तान् । मा । अभिऽअवनिक्षि ।
तैः । तम् । अभिऽअतिसृजामः । यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः ।
तम् । वधेयम् । तम् । स्तृषीय । अनेन । ब्रह्मणा । अनेन । कर्मणा । अनया । मेन्या ॥२१॥
यत् । अर्वाचीनम् । त्रैहायनात् । अनृतम् । किम् । च । ऊदिम ।
आपः । मा । तस्मात् । सर्वस्मात् । दुःऽइतात् । पान्तु । अंहसः ॥ २२ ॥
समुद्रम् । वः । प्र । हिणोमि । स्वाम् । योनिम् । अपि । इतन ।
अरिष्टाः । सर्वऽहायसः । मा । च । नः । किम् । चन । आममत् ॥ २३ ॥
अरिप्राः । आपः । अप । रिप्रम् । अस्मत् । प्र । अस्मत् । एनः ।
दुःऽइतम् । सुऽप्रतीकाः । प्र । दुःऽस्वप्न्यम् । प्र । मलम् । वहन्तु ॥ २४ ॥
विष्णोः । क्रमः । असि । सपत्नऽहा । पृथिवीऽसंशितः । अग्निऽतेजाः ।
पृथिवीम् । अनु । वि । क्रमे । अहम् । पृथिव्याः । तम् । निः । भजामः । यः । अस्मान् ।
द्वेष्टि । यम् । वयम् । द्विष्मः । सः । मा । जीवीत् । तम् । प्राणः । जहातु ॥ २५ ॥

**X.5.21** What of you, O waters, are the fires of the waters within the waters of the nature of sacrificial rites (yajuṣya), useful for the congregation of the enlightened ones (gods, devas), them now I let go; them let me not wahsdown against myself; them we let go against him who hates us, whom we hate. Him may I slay or stab; him may I lay low with this prayer (brahmaṇā), with this action (karmaṇā), with this weapon (meni).

**X.5.22** Whatever lies we have told within the last three years; may the waters shield me from all that evil and sin.

**X.5.23** I urge you forth to the ocean. Go to your own abode. (May we remain) unharmed throughout our life-span. May nothing whatsoever cause us to bow down.

**X.5.24** O pure and clean waters, carry the impurity away from us. May these (waters), beautiful to look at, take the evil, the bad dream and the deficient away from us.

### Mantroktāḥ

**X.5.25** You are the stride (krama) of the all-prevading Lord (viṣṇu), slayer of rivals, sharpened by the earth (pṛthivī-samśitā), full of fire's might (agni-teja). I stride forth on the earth (pṛthivyam). From the earth, we drive out him, who hates us and whom we do hate. May he not live. May the vital breath quit him.

विष्णोः क्रमोसि सपत्नहान्तरिक्षसंशितो वायुतेजाः ।
अन्तरिक्षमनु वि क्रमेहमन्तरिक्षात्तं निर्भजामो यो३स्मान्द्वेष्टि यं वयं द्विष्मः ।
स मा जीवीत्तं प्राणो जहातु ॥२६॥

विष्णोः क्रमोसि सपत्नहा द्यौसंशितः सूर्यतेजाः ।
दिवमनु वि क्रमेहं दिवस्तं निर्भजामो यो३स्मान्द्वेष्टि यं वयं द्विष्मः ।
स मा जीवीत्तं प्राणो जहातु ॥२७॥

विष्णोः क्रमोसि सपत्नहा दिक्संशितो मनस्तेजाः ।
दिशोनु वि क्रमेहं दिग्भ्यस्तं निर्भजामो यो३स्मान्द्वेष्टि यं वयं द्विष्मः ।
स मा जीवीत्तं प्राणो जहातु ॥२८॥

विष्णोः क्रमोसि सपत्नहाशासंशितो वाततेजाः ।
आशा अनु वि क्रमेहमाशाभ्यस्तं निर्भजामो यो३स्मान्द्वेष्टि यं वयं द्विष्मः ।
स मा जीवीत्तं प्राणो जहातु ॥२९॥

विष्णोः क्रमोसि सपत्नह ऋक्संशितः सामतेजाः ।
ऋचोनु वि क्रमेहमृग्भ्यस्तं निर्भजामो यो३स्मान्द्वेष्टि यं वयं द्विष्मः ।
स मा जीवीत्तं प्राणो जहातु ॥३०॥

विष्णोः । क्रमः । असि । सपत्नऽहा । अन्तरिक्षऽसंशितः । वायुऽतेजाः ।
अन्तरिक्षम् । अनु । वि । क्रमे । अहम् । अन्तरिक्षात् । तम् ।० ॥ २६ ॥

विष्णोः । क्रमः । असि । सपत्नऽहा । द्यौऽसंशितः । सूर्यऽतेजाः ।
दिवम् । अनु । वि । क्रमे । अहम् । दिवः । तम् ।० ॥ २७ ॥

विष्णोः । क्रमः । असि । सपत्नऽहा । दिक्ऽसंशितः । मनःऽतेजाः ।
दिशः । अनु । वि । क्रमे । अहम् । दिक्ऽभ्यः । तम् ।० ॥ २८ ॥

विष्णोः । क्रमः । असि । सपत्नऽहा । आशाऽसंशितः । वातऽतेजाः ।
आशाः । अनु । वि । क्रमे । अहम् । आशाभ्यः । तम् ।० ॥ २९ ॥

विष्णोः । क्रमः । असि । सपत्नऽहा । ऋक्ऽसंशितः । सामऽतेजाः ।
ऋचः । अनु । वि । क्रमे । अहम् । ऋक्ऽभ्यः । तम् ।० ॥ ३० ॥

**X.5.26** You are the stride (krama) of the all-prevading Lord (Viṣṇu), slayer of rivals, sharpened by the midspace, full of wind's might (vāyu-teja). I stride forth on the midspace (antarikṣat). From the midspace, we drive out him, who hates us and whom we do hate. May he not live. May the vital breath quit him.

**X.5.27** You are the stride (krama) of the all-prevading Lord (Viṣṇu) slayer of rivals, sharpened by the sky (dyau), full of sun's might (sūrya-teja). I stride forth on the sky (divam). From the sky, we drive out him, who hates us and whom we do hate. May he not live. May the vital breath quit him.

**X.5.28** You are the stride (krama) of the all-prevading Lord (Viṣṇu) slayer of rivals, sharpened by the quarters, full of mind's might (manas-tejaḥ). I stride forth on the quarters (dik). From the quarters (digbhyaḥ), we drive out him, who hates us and whom we do hate. May he not live. May the vital breath quit him.

**X.5.29** You are the stride (krama) of the all-prevading Lord (Viṣṇu) slayer of rivals, sharpened by the mid-quarters (āśā), full of breeze's might (vāta-tejāḥ). I stride forth on the mid-quarters. From the mid-quarters, we drive out him, who hates us and whom we do hate. May he not live. May the vital breath quit him.

**X.5.30** You are the stride (krama) of the all-prevading Lord (Viṣṇu) slayer of rivals, sharpened by the Ṛk verses, full of saman's might (sāma-tejaḥ). I stride forth on the Ṛk verses (ṛcaḥ). From the Ṛk verses, we drive out him, who hates us and whom we do hate. May he not live. May the vital breath quit him.

विष्णोः क्रमोसि सपत्नहा यज्ञसंशितो ब्रह्मतेजाः ।
यज्ञमनु वि क्रमेहं यज्ञात्तं निर्भजामो योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ।
स मा जीवीत्तं प्राणो जहातु ॥३१॥
विष्णोः क्रमोसि सपत्नहौषधीसंशितः सोमतेजाः ।
ओषधीरनु वि क्रमेहमोषधीभ्यस्तं निर्भजामो योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ।
स मा जीवीत्तं प्राणो जहातु ॥३२॥
विष्णोः क्रमोसि सपत्नहाप्सुसंशितो वरुणतेजाः ।
अपोनु वि क्रमेहमद्भ्यस्तं निर्भजामो योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ।
स मा जीवीत्तं प्राणो जहातु ॥३३॥
विष्णोः क्रमोसि सपत्नहा कृषिसंशितोन्नतेजाः ।
कृषिमनु वि क्रमेहं कृष्यास्तं निर्भजामो योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ।
स मा जीवीत्तं प्राणो जहातु ॥३४॥
विष्णोः क्रमोसि सपत्नहा प्राणसंशितः पुरुषतेजाः ।
प्राणमनु वि क्रमेहं प्राणात्तं निर्भजामो योऽ३स्मान्द्वेष्टि यं वयं द्विष्मः ।
स मा जीवीत्तं प्राणो जहातु ॥३५॥

विष्णोः । क्रमः । असि । सपत्नऽहा । यज्ञऽसंशितः । ब्रह्मऽतेजाः ।
यज्ञम् । अनु । वि । क्रमे । अहम् । यज्ञात् । तम् ।० ॥ ३१ ॥
विष्णोः । क्रमः । असि । सपत्नऽहा । ओषधीऽसंशितः । सोमऽतेजाः ।
ओषधीः । अनु । वि । क्रमे । अहम् । ओषधीभ्यः । तम् ।० ॥ ३२ ॥
विष्णोः । क्रमः । असि । सपत्नऽहा । अप्सुऽसंशितः । वरुणऽतेजाः ।
अपः । अनु । वि । क्रमे । अहम् । अत्ऽभ्यः । तम् ।० ॥ ३३ ॥
विष्णोः । क्रमः । असि । सपत्नऽहा । कृषिऽसंशितः । अन्नऽतेजाः ।
कृषिम् । अनु । वि । क्रमे । अहम् । कृष्याः । तम् । ० ॥३४॥
विष्णोः । क्रमः । असि । सपत्नऽहा । प्राणऽसंशितः । पुरुषऽतेजाः । प्राणम् । अनु । वि । क्रमे ।
अहम् । प्राणात् । तम् । निः । भजामः । यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः ।
सः । मा । जीवीत् । तम् । प्राणः । जहातु ॥ ३५ ॥

**X.5.31** You are the stride (krama) of the all-prevading Lord (Viṣṇu) slayer of rivals, sharpened by the sacrifice (yajña), full of prayer's might (brahma-tejaḥ). I stride forth on the sacrifice (yajña). From the sacrifice, we drive out him, who hates us and whom we do hate. May he not live. May the vital breath quit him.

**X.5.32** You are the stride (krama) of the all-prevading Lord (Viṣṇu) slayer of rivals, sharpened by the herbs (oṣadhi), full of cure-juice's might (soma-tejaḥ). I stride forth in the herbs. From the herbs (oṣadhi), we drive out him, who hates us and whom we do hate. May he not live. May the vital breath quit him.

**X.5.33** You are the stride (krama) of the all-prevading Lord (Viṣṇu) slayer of rivals, sharpened by the waters, full of venerable Lord's might (varuṇa-teja). I stride forth on the waters. From the water, we drive out him, who hates us and whom we do hate. May he not live. May the vital breath quit him.

**X.5.34** You are the stride (krama) of the all-prevading Lord (Viṣṇu) slayer of rivals, sharpened by the farming (kṛsi), full of food's might. I stride forth in the farming. From the farming (kṛṣyaḥ), we drive out him, who hates us and whom we do hate. May he not live. May the vital breath quit him.

**X.5.35** You are the stride (krama) of the all-prevading Lord (Viṣṇu) slayer of rivals, sharpened by the vital breaths (prāṇa), full of man's might (puruṣa-teja). I stride forth in the vital breaths. From the vital breaths, we drive out him, who hates us and whom we do hate. May he not live. May the vital breath quit him.

जितमस्माकमुद्भिन्नमस्माकमभ्यष्ठां विश्वाः पृतना अरातीः ।
इदमहमामुष्यायणस्यामुष्याः पुत्रस्य वर्चस्तेजः प्राणमायुर्नि
वेष्टयामीदमेनमधराञ्चं पादयामि ॥३६॥

सूर्यस्यावृतमन्वावर्ते दक्षिणामन्वावृतम् ।
सा मे द्रविणं यच्छतु सा मे ब्राह्मणवर्चसम् ॥३७॥

दिशो ज्योतिष्मतीरभ्यावर्ते । ता मे द्रविणं यच्छन्तु ता मे ब्राह्मणवर्चसम् ॥३८॥

सप्तऋषीनभ्यावर्ते । ते मे द्रविणं यच्छन्तु ते मे ब्राह्मणवर्चसम् ॥३९॥

ब्रह्माभ्यावर्ते । तन्मे द्रविणं यच्छतु तन्मे ब्राह्मणवर्चसम् ॥४०॥

ब्राह्मणाँ अभ्यावर्ते । ते मे द्रविणं यच्छन्तु ते मे ब्राह्मणवर्चसम् ॥४१॥

जितम् । अस्माकम् । उत्ऽभिन्नम् । अस्माकम् । अभि । अस्थाम् । विश्वाः । पृतनाः ।
अरातीः । इदम् । अहम् । आमुष्यायणस्य । अमुष्याः । पुत्रस्य । वर्चः । तेजः । प्राणम् ।
आयुः । नि । वेष्टयामि । इदम् । एनम् । अधराञ्चम् । पादयामि ॥ ३६ ॥

सूर्यस्य । आऽवृतम् । अनुऽआवर्ते । दक्षिणाम् । अनु । आऽवृतम् ।
सा । मे । द्रविणम् । यच्छतु । सा । मे । ब्राह्मणऽवर्चसम् ॥ ३७ ॥

दिशः । ज्योतिष्मतीः । अभिऽआवर्ते ।
ताः । मे । द्रविणम् । यच्छन्तु । ताः । मे । ब्राह्मणऽवर्चसम् ॥ ३८ ॥

सप्तऽऋषीन् । अभिऽआवर्ते ।
ते । मे । द्रविणम् । यच्छन्तु । ते । मे । ब्राह्मणऽवर्चसम् ॥ ३९ ॥

ब्रह्म । अभिऽआवर्ते ।
तत् । मे । द्रविणम् । यच्छतु । तत् । मे । ब्राह्मणऽवर्चसम् ॥ ४० ॥

ब्राह्मणान् । अभिऽआवर्ते । ते । मे । द्रविणम् । यच्छन्तु । ते । मे । ब्राह्मणऽवर्चसम् ॥४१॥

**X.5.36** Ours is the victory (jitām). Ours is the rising up. I have thrown back all the hosts of enemies. I hereby invest the lustre, brilliance, the vital breath and life-span of so and so (amuṣya), of such and such lineage, and the son of such and such (amuṣya) woman. I hereby make him fall down (adharām pāda yāmi).

**X.5.37** I follow the course of the Sun (suryasya-āvṛtam), his turning to the south. May she grant me wealth; may she grant me an intellectual person's lusture.

**X.5.38** I turn towards the quarters full of light (diśo-jyotiṣmatīḥ); may they (feminine) grant me wealth; may they grant me an intellectual person's lusture.

**X.5.39** I turn to the seven seers (sapta-ṛṣīḥ); may they grant me wealth; may they grant me an intellectual person's lustre.

**X.5.40** I turn to the knowledge (brahma-abhyāvarte); may that grant me wealth; may that grant me an intellectual person's lustre.

**X.5.41** I turn to the intellectual persons (brahmaṇām); may they grant me wealth; may they grant me an intellectual person's lustre.

यं वयं मृगयामहे तं वधै स्तृणवामहै। व्यात्ते परमेष्ठिनो ब्रह्मणापीपदाम तम् ॥४२॥
वैश्वानरस्य दंष्ट्राभ्यां हेतिस्तं समधादभि।
इयं तं प्सात्वाहुतिः समिद्देवी सहीयसी ॥४३॥
राज्ञो वरुणस्य बन्धोऽसि। सो३मुमामुष्यायणममुष्याः पुत्रमन्ने प्राणे बधान ॥४४॥
यत्ते अन्नं भुवस्पत आक्षियति पृथिवीमनु।
तस्य नस्त्वं भुवस्पते संप्रयच्छ प्रजापते ॥४५॥
अपो दिव्या अचायिषं रसेन समपृक्ष्महि।
पयस्वानग्न आगमं तं मा सं सृज वर्चसा ॥४६॥
सं माग्ने वर्चसा सृज सं प्रजया समायुषा।
विद्युर्मे अस्य देवा इन्द्रो विद्यात्सह ऋषिभिः ॥४७॥

यम्। वयम्। मृगयामहे। तम्। वधैः। स्तृणवामहै।
विऽआत्ते। परमेऽस्थिनः। ब्रह्मणा। आ। अपीपदाम। तम्॥ ४२॥

वैश्वानरस्य। दंष्ट्राभ्याम्। हेतिः। तम्। सम्। अधात्। अभि।
इयम्। तम्। प्सातु। आऽहुतिः। सम्ऽइत्। देवी। सहीयसी॥ ४३॥

राज्ञः। वरुणस्य। बन्धः। असि।
सः। अमुम्। आमुष्यायणम्। अमुष्याः। पुत्रम्। अन्ने। प्राणे। बधान॥ ४४॥

यत्। ते। अन्नम्। भुवः। पते। आऽक्षियति। पृथिवीम्। अनु।
तस्य। नः। त्वम्। भुवः। पते। सम्ऽप्रयच्छ। प्रजाऽपते॥ ४५॥

अपः। दिव्याः। अचायिषम्। रसेन। सम्। अपृक्ष्महि।
पयस्वान्। अग्ने। आ। अगमम्। तम्। मा। सम्। सृज। वर्चसा॥ ४६॥

सम्। मा। अग्ने। वर्चसा। सृज। सम्। प्रऽजया। सम्। आयुषा।
विद्युः। मे। अस्य। देवाः। इन्द्रः। विद्यात्। सह। ऋषिऽभिः॥ ४७॥

## Prajāpatiḥ

**X.5.42** Whomsoever we hunt (mṛgayāmahe), we bestrew him with our deadly weapons. With our knowledge, we push him into the open jaws of the Lord of the highest abode (Parameṣṭhī).

**X.5.43** May our weapon catch him with the two jaws of the benefactor of all men. May this offering and this divine and mighty sacrificial wood (samid) destroy him.

**X.5.44** You are the fetter of the sovereign venerable Lord (Varuṇa-bandha). As such, may you bind so and so, of such and such lineage, the son of such and such mother, through his food (anne) and through his vital breath (prāṇe).

**X.5.45** O Lord of the midspace (bhuvaspate), whatever food there lies on the earth, O Lord of creatures (Prajāpate), O Lord of the midspace, may you grant that to us profusely.

**X.5.46** The heavenly waters have been honoured by me; with their rasa or sap, we have been mixed; O Agni, fire-divine, I have now come; here I shall get mingled with all splendour. (Also Av. VII.89.1)

**X.5.47** O fire-divine, please unite me with all dignity· (varcas). May I have children, living a full span of life. May I have good approach to people of enlightenment. May our king, or the resplendent authority know me well; and may all the saints and sears know me. (Also Av. VII.89.2)

यदंग्ने अद्य मिथुना शपांतो यद्वाचस्तृष्टं जनयंन्त रेभाः ।
मन्योर्मनंसः शरव्या॒३ जायंते या तया विध्य हृदये यातुधानान् ॥४८॥
परा शृणीहि तपसा यातुधानान्परांग्ने रक्षो हरसा शृणीहि ।
परार्चिषा मूरंदेवाञ्छृणीहि परासुतृपः शोशुंचतः शृणीहि ॥४९॥
अपामस्मै वज्रं प्र हंरामि चतुंर्भृष्टिं शीर्षभिद्याय विद्वान् ।
सो अस्याङ्गानि प्र शृणातु सर्वा तन्मे देवा अनुं जानन्तु विश्वे ॥५०॥

यत् । अग्ने । अद्य । मिथुना । शपांतः । यत् । वाचः । तृष्टम् । जनयंन्त । रेभाः ।
मन्योः । मनंसः । शरव्या । जायंते । या । तया । विध्य । हृदये । यातुऽधानान् ॥ ४८ ॥

परा । शृणीहि । तपसा । यातुऽधानान् । परा । अग्ने । रक्षः । हरसा । शृणीहि ।
परा । अर्चिषा । मूरंऽदेवान् । शृणीहि । परा । असुऽतृपः । शोशुंचतः । शृणीहि ॥ ४९ ॥

अपाम् । अस्मै । वज्रम् । प्र । हरामि । चतुंःऽभृष्टिम् । शीर्षऽभिद्याय । विद्वान् ।
सः । अस्य । अङ्गानि । प्र । शृणातु । सर्वा । तत् । मे । देवाः । अनुं । जानन्तु । विश्वे ॥५०॥

( ६ ) षष्ठं सूक्तम्

(१–३५) पञ्चत्रिंशदृचस्यास्य सूक्तस्य बृहस्पतिर्ऋषिः । (१–२, ४–३५) प्रथमाद्द्वितीययोर्ऋचोश्चतुर्थ्यादिद्वात्रिंशतश्च फालमणिर्वनस्पतिर्वा, (३) तृतीयायाश्च आपो देवताः । (१, ४, २१) प्रथमाचतुर्थ्येकविंशीनां गायत्री, (२–३, १८–१९, २२, २८–३०, ३२–३४) द्वितीयातृतीयाष्टादश्येकोनविंशीद्वाविंशीनामष्टाविंश्यादितृचस्य द्वात्रिंश्यादितृचस्य चानुष्टुप्, (५) पञ्चम्याः षट्पदा जगती, (६) षष्ठ्याः सप्तपदा विराट् शक्वरी, (७–९) सप्तम्यादितृचस्य त्र्यवसानाष्टपदाष्टिः, (१०) दशम्यास्त्र्यवसाना नवपदा धृतिः, (११, २०, २३–२७) एकादशीविंश्योस्त्रयोविंश्यादिपञ्चानाञ्च पथ्यापङ्क्तिः, (१२–१७) द्वादश्यादितृचद्वयस्य त्र्यवसाना षट्पदा शक्वरी, (३१) एकत्रिंश्यास्त्र्यवसाना षट्पदा जगती, (३५) पञ्चत्रिंश्याश्च पञ्चपदा त्र्यनुष्टुब्गर्भा जगती छन्दांसि ॥

अरातीयोर्भ्रातृंव्यस्य दुर्हार्दो द्विषतः शिरः । अपि वृश्चाम्योजसा ॥१॥
वर्म मह्यमयं मणिः फालाज्जातः करिष्यति ।
पूर्णो मन्थेन मागमद्रसेन सह वर्चसा ॥२॥

अरातिऽयोः । भ्रातृंव्यस्य । दुःऽहार्दः । द्विषतः । शिरः ।
अपि । वृश्चामि । ओजसा ॥ १ ॥

वर्म । मह्यम् । अयम् । मणिः । फालात् । जातः । करिष्यति ।
पूर्णः । मन्थेन । मा । आ । अगमत् । रसेन । सह । वर्चसा ॥ २ ॥

**X.5.48** O fire-divine, what the evil-minded wicked person has uttered in the foremost a curse today and what harshness of speech was clear from street mongers, speaking aloud what they gave out in anger and fury, may you suppress them with strictness and severity. Crush them at the very root.

**X.5.49** O fire-divine, crush all the undesirable leaders of opposition; you may have to use fire against them. They have been misguiding and exciting our people. Among them are such persons, bent upon taking our lives. (Also Av. VIII.3.13)

**X.5.50** Knowing all this, I throw at this (enemy) the four-edged thunder bolt of water to break his head (into pieces). May this cut through all his limbs. May all the enlightened ones approve this action of mine.

### Vanaspatiḥ - Phālamaṇiḥ - Āpaḥ

**X.6.1** Mightily I hack off the head of my inimical cousin, ill-wisher and hateful.

**X.6.2** This jewel, which has appeared from the plough-share (phālājjātaḥ), will make itself a shield (varma, for me. Full of shaking power, it has come to me with virility and lustre.

यत्त्वा शिक्वः परावधीत्तक्षा हस्तेन वास्या ।
आपस्त्वा तस्माज्जीवलाः पुनन्तु शुचयः शुचिम् ॥३॥
हिरण्यस्रगयं मणिः श्रद्धां यज्ञं महो दधत् । गृहे वसतु नोतिथिः ॥४॥
तस्मै घृतं सुरां मध्वन्नमन्नं क्षदामहे ।
स नः पितेव पुत्रेभ्यः श्रेयःश्रेयश्चिकित्सतु भूयोभूयः श्वःश्वो देवेभ्यो मणिरेत्य ॥५॥
यमबध्नाद्बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे । ।
तमग्निः प्रत्यमुञ्चत सो अस्मै दुह आज्यं भूयोभूयः श्वःश्वस्तेन त्वं द्विषतो जहि ॥६॥
यमबध्नाद्बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।
तमिन्द्रः प्रत्यमुञ्चतौजसे वीर्याय कम् ।
सो अस्मै बलमिद्दुहे भूयोभूयः श्वःश्वस्तेन त्वं द्विषतो जहि ॥७॥
यमबध्नाद्बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।
तं सोमः प्रत्यमुञ्चत महे श्रोत्राय चक्षसे ।
सो अस्मै वर्च इद्दुहे भूयोभूयः श्वःश्वस्तेन त्वं द्विषतो जहि ॥८॥

यत् । त्वा । शिक्वः । पराऽअवधीत् । तक्षा । हस्तेन । वास्या ।
आपः । त्वा । तस्मात् । जीवलाः । पुनन्तु । शुचयः । शुचिम् ॥ ३ ॥

हिरण्यऽस्रक् । अयम् । मणिः । श्रद्धाम् । यज्ञम् । महः । दधत् ।
गृहे । वसतु । नः । अतिथिः ॥ ४ ॥

तस्मै । घृतम् । सुराम् । मधु । अन्नम्ऽअन्नम् । क्षदामहे । सः । नः । पिताऽइव । पुत्रेभ्यः ।
श्रेयःऽश्रेयः । चिकित्सतु । भूयःऽभूयः । श्वःऽश्वः । देवेभ्यः । मणिः । आऽइत्य ॥ ५ ॥

यम् । अबध्नात् । बृहस्पतिः । मणिम् । फालम् । घृतऽश्चुतम् । उग्रम् । खदिरम् ।
ओजसे । तम् । अग्निः । प्रति । अमुञ्चत । सः । अस्मै । दुहे । आज्यम् । भूयःऽभूयः ।
श्वःऽश्वः । तेन । त्वम् । द्विषतः । जहि ॥ ६ ॥

यम् । अबध्नात् । बृहस्पतिः । मणिम् । फालम् । घृतऽश्चुतम् । उग्रम् । खदिरम् ।
ओजसे । तम् । इन्द्रः । प्रति । अमुञ्चत । ओजसे । वीर्याय । कम् । सः । अस्मै । बलम् ।
इत् । दुहे । भूयःऽभूयः ।० ॥ ७ ॥

यम् । अबध्नात् । बृहस्पतिः । मणिम् । फालम् । घृतऽश्चुतम् । उग्रम् । खदिरम् । ओजसे ।
तम् । सोमः । प्रति । अमुञ्चत । महे । श्रोत्राय । चक्षसे । सः । अस्मै । वर्चः । इत् ।०॥

**X.6.3** Wherever the deft (takṣā) smith has struck you with his hand and an axe from that at the life-giving (jīvalā) waters, pure and bright, purify you, the pure and shining (śucim).

**X.6.4** May this jewel, strung on a golden chain, bestow faith, sacrifice and magnamity. May it stay at our house as a guest.

**X.6.5** For it we give the purified butter, the strong drink, and sweet food of every kind. Like a father for his sons, may this provide us with better and better things, more and more, morrow to morrow (śvāśvo), coming from the bounties of Nature.

**X.6.6** The formidable khadira blessing, obtained from plough-share, dripping purified butter, which the Lord supreme (Bṛhaspati) has bestowed for vigour, that (blessing) the adorable leader (Agni) has put on. That, verily, yields purified butter to him, more and more, morrow to morrow. With that, may you destroy the malicious enemies.

**X.6.7** The formidable khadira (Acacia catechu) blessing, obtained from plough-share, dripping purified butter, which the Lord supreme bestowed for vigour, that (blessing) the resplendent army-chief (Indra) has put on for vigour (vīrya), verily and happiness. That, verily, yields purified butter to him, more and more, morrow to morrow. With that, may you destroy the malicious enemies.

**X.6.8** The formidable khadira blessing, obtained from plough-share, dripping purified butter, which the Lord supreme has bestowed for vigour, that (blessing) the Soma (the curative principle) has put on for acute hearing (śrotra) and vision (cakṣu). That, verily, yields purified butter to him, more and more, morrow to morrow. With that, may you destroy the malicious enemies.

यमबध्नाद्बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।
तं सूर्यः प्रत्यमुञ्चत तेनेमा अजयद्दिशः ।
सो अस्मै भूतिमिद्दुहे भूयोभूयः श्वःश्वस्तेन त्वं द्विषतो जहि ॥९॥

यमबध्नाद्बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।
तं बिभ्रच्चन्द्रमा मणिमसुराणां पुरोजयद्दानवानां हिरण्ययीः ।
सो अस्मै श्रियमिद्दुहे भूयोभूयः श्वःश्वस्तेन त्वं द्विषतो जहि ॥१०॥

यमबध्नाद्बृहस्पतिर्वाताय मणिमाशवे ।
सो अस्मै वाजिनं दुहे भूयोभूयः श्वःश्वस्तेन त्वं द्विषतो जहि ॥११॥

यमबध्नाद्बृहस्पतिर्वाताय मणिमाशवे । तेनेमां मणिना कृषिमश्विनावभि रक्षतः ।
स भिषग्भ्यां महो दुहे भूयोभूयः श्वःश्वस्तेन त्वं द्विषतो जहि ॥१२॥

यमबध्नाद्बृहस्पतिर्वाताय मणिमाशवे । तं बिभ्रत्सविता मणिं तेनेदमजयत्स्वः ।
सो अस्मै सूनृतां दुहे भूयोभूयः श्वःश्वस्तेन त्वं द्विषतो जहि ॥१३॥

यमबध्नाद्बृहस्पतिर्वाताय मणिमाशवे । तमापो बिभ्रतीर्मणिं सदा धावन्त्यक्षिताः ।
स आभ्योमृतमिद्दुहे भूयोभूयः श्वःश्वस्तेन त्वं द्विषतो जहि ॥१४॥

यम् । अबध्नात् । बृहस्पतिः । मणिम् । फालम् । घृतऽश्चुतम् । उग्रम् । खदिरम् । ओजसे ।
तम् । सूर्यः । प्रति । अमुञ्चत । तेन । इमाः । अजयत् । दिशः । सः । अस्मै । भूतिम् । इत् । ० ॥

यम् । अबध्नात् । बृहस्पतिः । मणिम् । फालम् । घृतऽश्चुतम् । उग्रम् । खदिरम् ।
ओजसे । तम् । बिभ्रत् । चन्द्रमाः । मणिम् । असुराणाम् । पुरः । अजयत् । दानवानाम् ।
हिरण्ययीः । सः । अस्मै । श्रियम् । इत् । दुहे । ० ॥ १० ॥

यम् । अबध्नात् । बृहस्पतिः । वाताय । मणिम् । आशवे ।
सः । अस्मै । वाजिनम् । दुहे । ० ॥ ११ ॥

यम् । अबध्नात् । बृहस्पतिः । वाताय । मणिम् । आशवे । तेन । इमाम् । मणिना ।
कृषिम् । अश्विनौ । अभि । रक्षतः । सः । भिषक्ऽभ्याम् । महः । दुहे । ० ॥१२॥

यम् । अबध्नात् । बृहस्पतिः । वाताय । मणिम् । आशवे । तम् । बिभ्रत् ।
सविता । मणिम् । तेन । इदम् । अजयत् । स्वः । सः । अस्मै । सूनृताम् । दुहे । ० ॥१३॥

यम् । अबध्नात् । बृहस्पतिः । मणिम् । वाताय । आशवे । तम् । आपः । बिभ्रतीः ।
मणिम् । सदा । धावन्ति । अक्षिताः । सः । आभ्यः । अमृतम् । इत् । दुहे । ० ॥ १४ ॥

**X.6.9** The formidable khadira blessing, obtained from plough-share, dripping purified butter, which the Lord supreme has bestowed for vigour, that (blessing) the Sun (Sūrya) has put on; with that he has conquered these quarters (diśaḥ). That, verily, yields purified butter to him, more and more, morrow to morrow. With that, may you destroy the malicious enemies.

**X.6.10** The formidable khadira blessing, obtained from plough-share, dripping purified butter, which the Lord supreme has bestowed for vigour, that (blessing) the moon (candramā) conquers the golden costels (puraḥ) of the life-destroyers (asurāṇam) and dare-devils (dānva). That, verily, yields purified butter to him, more and more, morrow to morrow. With that, may you destroy the malicious enemies.

**X.6.11** The blessing, which the Lord supreme has bestowed upon the fast-moving wind (vāta), that, verily, yields speed (vājinam) to him, more and more, morrow to morrow. With that may you destroy the malicious enemies.

**X.6.12** The blessing, which the Lord supreme has bestowed upon the fast-moving wind (vatāya), with that blessing the twins divine (aśvinau) guard this farming (kṛṣi) well. That, verily, yields magnanimity to the two physicians (bhiṣagbhyām), more and more, morrow to morrow. With that, may you destroy the malicious enemies.

**X.6.13** The blessing, which the Lord supreme has bestowed upon the fast-moving wind, the impeller sun (savitṛ) has put on that blessing. With that he has won this world of light (svaḥ). That, verily, yields truthful speech to him, more and more, morrow to morrow. With that, may you destroy the malicious enemies.

**X.6.14** The blessing, which the Lord supreme has bestowed upon the fast-moving wind, putting on that blessing the waters flow always unexhausted (dhāvanti akṣitāḥ). That, verily, yields immortality (amṛtam) to them, more and more, morrow to morrow. With that may you destroy the malicious enemies.

यमबध्नाद्बृहस्पतिर्वाताय मणिमाशवे। तं राजा वरुणो मणिं प्रत्यमुञ्चत शंभुवम्।
सो अस्मै सत्यमिद्दुहे भूयोभूयः श्वःश्वस्तेन त्वं द्विषतो जहि ॥१५॥
यमबध्नाद्बृहस्पतिर्वाताय मणिमाशवे। तं देवा बिभ्रतो मणिं सर्वाँल्लोकान्युधाजयन्।
स एभ्यो जितिमिद्दुहे भूयोभूयः श्वःश्वस्तेन त्वं द्विषतो जहि ॥१६॥
यमबध्नाद्बृहस्पतिर्वाताय मणिमाशवे। तमिमं देवता मणिं प्रत्यमुञ्चन्त शंभुवम्।
स आभ्यो विश्वमिद्दुहे भूयोभूयः श्वःश्वस्तेन त्वं द्विषतो जहि ॥१७॥
ऋतवस्तमबध्नतार्तवास्तमबध्नत। संवत्सरस्तं बद्ध्वा सर्वं भूतं वि रक्षति ॥१८॥
अन्तर्देशा अबध्नत प्रदिशस्तमबध्नत। प्रजापतिसृष्टो मणिर्द्विषतो मेऽधराँ अकः ॥१९॥
अथर्वाणो अबध्नताथर्वणा अबध्नत।
तैर्मेदिनो अङ्गिरसो दस्यूनां बिभिदुः पुरस्तेन त्वं द्विषतो जहि ॥२०॥

यम्। अबध्नात्। बृहस्पतिः। वाताय। मणिम्। आशवे। तम्। राजा।
वरुणः। मणिम्। प्रति। अमुञ्चत। शम्ऽभुवम्। सः। अस्मै। सत्यम्। इत्। दुहे।०॥ १५॥
यम्। अबध्नात्। बृहस्पतिः। वाताय। मणिम्। आशवे। तम्। देवाः।
बिभ्रतः। मणिम्। सर्वान्। लोकान्। युधा। अजयन्। सः। एभ्यः। जितिम्। इत्। दुहे।०॥
यम्। अबध्नात्। बृहस्पतिः। वाताय। मणिम्। आशवे।
तम्। इमम्। देवताः। मणिम्। प्रति। अमुञ्चन्त। शम्ऽभुवम्।
सः। आभ्यः। विश्वम्। इत्। दुहे। भूयःऽभूयः। श्वःऽश्वः। तेन। त्वम्। द्विषतः। जहि॥
ऋतवः। तम्। अबध्नत। आर्तवाः। तम्। अबध्नत।
सम्ऽवत्सरः। तम्। बद्ध्वा। सर्वम्। भूतम्। वि। रक्षति॥ १८॥
अन्तःऽदेशाः। अबध्नत। प्रऽदिशः। तम्। अबध्नत।
प्रजापतिऽसृष्टः। मणिः। द्विषतः। मे। अधरान्। अकः॥ १९॥
अथर्वाणः। अबध्नत। आथर्वणाः। अबध्नत।
तैः। मेदिनः। अङ्गिरसः। दस्यूनाम्। बिभिदुः। पुरः। तेन। त्वम्। द्विषतः। जहि ॥२०॥

**X.6.15** The blessing, which the Lord supreme has bestowed upon the fast-moving wind, that bliss-bestowing blessing the venerable king (Rajā Varuṇa) has put on. That verily, yields truth (Satyam) to him, more and more, morrow to morrow. With that may you destroy the malicious enemies.

**X.6.16** The blessing, which the Lord supreme has bestowed upon the fast-moving wind, putting on that blessing, the enlightened ones have conquered all the worlds by war (yudhā). That, verily, yields victory to them, more and more, morrow to morrow. With that may you destroy the malicious enemies.

**X.6.17** The blessing, which the Lord supreme has bestowed upon the fast-moving wind, this same bliss-bestowing blessing the bounties of Nature has put on. That, verily, yields all to them (feminine), more and more, morrow to morrow. With that may you destroy the malicious enemies.

**X.6.18** The seasons (ṛtavaḥ) have put on that; groups of seasons have put on that. The year, having put that on, sustains all the beings.

**X.6.19** The intermediate quarters (antardik) have put that on; the mid-regions have put that on. May this blessing, produced by the Lord of creatures, put the malicious enemies under me.

**X.6.20** Atharvans (those, who seek the Lord supreme within themselves) have put it on; the descendants of Atharvans have put it on. With them the mighty Angirasas (luminous as burning charcoal due to their knowledge) broke through the castle of the robbers (dasyūnām puraḥ). with that, may you destroy the malicious enemies.

तं धाता प्रत्यमुञ्चत स भूतं व्यकिल्पयत्। तेन त्वं द्विषतो जहि ॥२१॥
यमबध्नाद्बृहस्पतिर्देवेभ्यो असुरक्षितिम्। स मायं मणिरागमद्रसेन सह वर्चसा ॥२२॥
यमबध्नाद्बृहस्पतिर्देवेभ्यो असुरक्षितिम् ।
स मायं मणिरागमत्सह गोभिरजाविभिरन्नेन प्रजया सह ॥२३॥
यमबध्नाद्बृहस्पतिर्देवेभ्यो असुरक्षितिम् ।
स मायं मणिरागमत्सह व्रीहियवाभ्यां महसा भूत्या सह ॥२४॥
यमबध्नाद्बृहस्पतिर्देवेभ्यो असुरक्षितिम् ।
स मायं मणिरागमन्मधोर्घृतस्य धारया कीलालेन मणिः सह ॥२५॥
यमबध्नाद्बृहस्पतिर्देवेभ्यो असुरक्षितिम् ।
स मायं मणिरागमदूर्जया पयसा सह द्रविणेन श्रिया सह ॥२६॥

तम्। धाता। प्रति। अमुञ्चत। सः। भूतम्। वि। अकल्पयत्।
तेन। त्वम्। द्विषतः। जहि ॥ २१ ॥
यम्। अबध्नात्। बृहस्पतिः। देवेभ्यः। असुरऽक्षितिम्।
सः। मा। अयम्। मणिः। आ। अगमत्। रसेन। सह। वर्चसा ॥ २२ ॥
यम्। अबध्नात्। बृहस्पतिः। देवेभ्यः। असुरऽक्षितिम्। सः। मा। अयम्।
मणिः। आ। अगमत्। सह। गोभिः। अजाविऽभिः। अन्नेन। प्रऽजया। सह ॥२३॥
यम्। अबध्नात्। बृहस्पतिः। देवेभ्यः। असुरऽक्षितिम्। सः। मा। अयम्। मणिः।
आ। अगमत्। सह। व्रीहिऽयवाभ्याम्। महसा। भूत्या। सह ॥ २४ ॥
यम्। अबध्नात्। बृहस्पतिः। देवेभ्यः। असुरऽक्षितिम्। सः। मा। अयम्।
मणिः। आ। अगमत्। मधोः। घृतस्य। धारया। कीलालेन। मणिः। सह ॥ २५ ॥
यम्। अबध्नात्। बृहस्पतिः। देवेभ्यः। असुरऽक्षितिम्। सः। मा। अयम्।
मणिः। आ। अगमत्। ऊर्जया। पयसा। सह। द्रविणेन। श्रिया। सह ॥ २६ ॥

**X.6.21** The ordained Lord (dhātṛ) put that (blessing) on; He formed all that exists (bhūtam). With that, may you destroy the malicious enemies.

**X.6.22** The blessing, destroyer of the life-destroyers, which the Lord supreme has bestowed upon enlightened ones (devāḥ), that same blessing has come to me with virility and lustre.

**X.6.23** The blessing, destroyer of the life-destroyers, which the Lord supreme has bestowed upon the enlightened ones, that same blessing has come to me along with kine, with goats (ajāḥ) and sheep (avibhiḥ), with food and progeny.

**X.6.24** The blessing, destroyer of the life-destroyers, which the Lord supreme has bestowed upon the enlightened ones, that same blessing has come to me along with rice (brīhi) and barley (yava), with magnanimity and prosperity.

**X.6.25** The blessing, destroyer of the life-destroyers, which the Lord supreme has bestowed upon the enlightened ones, that same blessing has come to me along with the stream of honey (madhu) and of purified butter (ghṛta); the blessing with the sweet drink (kīlāla).

**X.6.26** The blessing, destroyer of the life-destroyers, which the Lord supreme has bestowed upon the enlightened ones, that same blessing has come to me along with vigour (ūrjayā), and strength (payasā) with wealth (draviṇa) and splendour (śṛī.)

यमबध्नाद्बृहस्पतिर्देवेभ्यो असुरक्षितिम् ।
स मायं मणिरागमत्तेजसा त्विष्या सह यशसा कीर्त्या सह ॥२७॥
यमबध्नाद्बृहस्पतिर्देवेभ्यो असुरक्षितिम् ।
स मायं मणिरागमत्सर्वाभिर्भूतिभिः सह ॥२८॥
तमिमं देवता मणिं मह्यं ददतु पुष्टये ।
अभिभुं क्षत्रवर्धनं सपत्नदम्भनं मणिम् ॥२९॥
ब्रह्मणा तेजसा सह प्रति मुञ्चामि मे शिवम् ।
असपत्नः सपत्नहा सपत्नान्मेधरां अकः ॥३०॥
उत्तरं द्विषतो मामयं मणिः कृणोतु देवजाः ।
यस्य लोका इमे त्रयः पयो दुग्धमुपासते ।
स मायमधि रोहतु मणिः श्रैष्ठ्याय मूर्धतः ॥३१॥
यं देवाः पितरो मनुष्या उपजीवन्ति सर्वदा ।
स मायमधि रोहतु मणिः श्रैष्ठ्याय मूर्धतः ॥३२॥

यम् । अबध्नात् । बृहस्पतिः । देवेभ्यः । असुरऽक्षितिम् । सः । मा । अयम् ।
मणिः । आ । अगमत् । तेजसा । त्विष्या । सह । यशसा । कीर्त्या । सह ॥ २७ ॥
यम् । अबध्नात् । बृहस्पतिः । देवेभ्यः । असुरऽक्षितिम् ।
सः । मा । अयम् । मणिः । आ । अगमत् । सर्वाभिः । भूतिऽभिः । सह ॥ २८ ॥
तम् । इमम् । देवताः । मणिम् । मह्यम् । ददतु । पुष्टये ।
अभिऽभुम् । क्षत्रऽवर्धनम् । सपत्नऽदम्भनम् । मणिम् ॥ २९ ॥
ब्रह्मणा । तेजसा । सह । प्रति । मुञ्चामि । मे । शिवम् ।
असपत्नः । सपत्नऽहा । सऽपत्नान् । मे । अधरान् । अकः ॥ ३० ॥
उत्ऽतरम् । द्विषतः । माम् । अयम् । मणिः । कृणोतु । देवऽजाः ।
यस्य । लोकाः । इमे । त्रयः । पयः । दुग्धम् । उपऽआसते ।
सः । मा । अयम् । अधि । रोहतु । मणिः । श्रैष्ठ्याय । मूर्धतः ॥ ३१ ॥
यम् । देवाः । पितरः । मनुष्याः । उपऽजीवन्ति । सर्वदा ।
सः । मा । अयम् । अधि । रोहतु । मणिः । श्रैष्ठ्याय । मूर्धतः ॥ ३२ ॥

**X.6.27** The blessing, destroyer of the life-destroyers, which the Lord supreme has bestowed upon the enlightened ones, that same blessing has come to me along with dignity (tejas) and impetuosity (tviṣi), with fame (yaśa) and glory (kīrti).

**X.6.28** The blessing, destroyer of the life-destroyers, which the Lord supreme has bestowed upon the enlightened ones, that same blessing has come to me along with all sorts of prosperity (bhūtibhiḥ).

**X.6.29** May the deities grant me this blessing for my development - the overpowering, domination-increasing, and rival-killing blessing.

**X.6.30** I put on (this blessing) along with knowledge and dignity. May it be propitious to me. Rivalless, destroyer of rivals (asapatnaḥ, sapatnahā), may it put my rivals under me.

**X.6.31** May this blessing, born of the bounties of Nature, and for whose milked out essence these three worlds wait, make me superior to my hateful enemy. May this blessing mount upon me for raising me to the crowning supremacy.

**X.6.32** What devāḥ (enlightened learned beings), what pitṛs (elders) and common men (manuṣyāḥ) subsist upon, may I with that blessing rise to the highest eminence, and top position.

यथा बीजमुर्वरायां कृष्टे फालेन रोहति ।
एवा मयि प्रजा पशवोऽन्नमन्नं वि रोहतु ॥३३॥
यस्मै त्वा यज्ञवर्धन मणे प्रत्यमुचं शिवम् ।
तं त्वं शतदक्षिण मणे श्रैष्ठ्याय जिन्वतात् ॥३४॥
एतमिध्मं समाहितं जुषाणो अग्ने प्रति हर्य होमैः ।
तस्मिन्विदेम सुमतिं स्वस्ति प्रजां चक्षुः पशून्त्समिद्धे जातवेदसि ब्रह्मणा ॥३५॥

यथा । बीजम् । उर्वरायाम् । कृष्टे । फालेन । रोहति ।
एव । मयि । प्रऽजा । पशवः । अन्नम्ऽअन्नम् । वि । रोहतु ॥ ३३ ॥

यस्मै । त्वा । यज्ञऽवर्धन । मणे । प्रतिऽअमुचम् । शिवम् ।
तम् । त्वम् । शतऽदक्षिण । मणे । श्रैष्ठ्याय । जिन्वतात् ॥ ३४ ॥

एतम् । इध्मम् । सम्ऽआहितम् । जुषाणः । अग्ने । प्रति । हर्य । होमैः ।
तस्मिन् । विदेम । सुऽमतिम् । स्वस्ति । प्रऽजाम् । चक्षुः । पशून् । सम्ऽइद्धे ।
जातऽवेदसि । ब्रह्मणा ॥ ३५ ॥

( ७ ) सप्तमं सूक्तम्

(१-४४) चतुश्चत्वारिंशदृचस्यास्य सूक्तस्याथर्वा क्षुद्र ऋषिः । स्कम्भोऽध्यात्मञ्च देवते । (१) प्रथमर्चो विराड्जगती, (२, ८) द्वितीयाष्टम्योर्भुरिक्त्रिष्टुप् , (७, १३) सप्तमीत्रयोदश्योः परोष्णिक् , (१०, १४, १६, १८-१९) दशमीचतुर्दशीषोडश्यष्टादश्येकोनविंशीनामुपरिष्टाद्बृहती, (११-१२, १५, २०, २२, ३९) एकादशीद्वादशीपञ्चदशीविंशीद्वाविंश्येकोनचत्वारिंशीनामुपरिष्टाज्ज्योतिर्जगती, (१७) सप्तदश्यास्त्र्यवसाना षट्पदा जगती, (२१) एकविंश्या बृहतीगर्भानुष्टुप्, (२३-३०, ३७, ४०) त्रयोविंश्याद्यष्टानां सप्तत्रिंशीचत्वारिंश्योश्चानुष्टुप् , (३१) एकत्रिंश्या मध्येज्योतिर्जगती, (३२, ३४, ३६) द्वात्रिंशीचतुस्त्रिंशीषट्त्रिंशीनामुपरिष्टाद्विराड्बृहती, (३३) त्रयस्त्रिंश्याः पराविराडनुष्टुप् , (३५) पञ्चत्रिंश्याश्चतुष्पदा जगती, (३-६, ९, ३८, ४२-४३) तृतीयादिचतसृणां नवम्यष्टात्रिंशीद्विचत्वारिंशीत्रिचत्वारिंशीनां त्रिष्टुप् , (४१) एकचत्वारिंश्या आर्षी त्रिपदा गायत्री, (४४) चतुश्चत्वारिंश्याश्चैकावसाना पञ्चपदा निचृत्पदपङ्क्तिर्द्विपदार्च्यनुष्टुब्वा छन्दांसि ॥

कस्मिन्नङ्गे तपो अस्याधि तिष्ठति कस्मिन्नङ्ग ऋतमस्याध्याहितम् ।
क्व व्रतं क्व श्रद्धास्य तिष्ठति कस्मिन्नङ्गे सत्यमस्य प्रतिष्ठितम् ॥१॥

कस्मिन् । अङ्गे । तपः । अस्य । अधि । तिष्ठति । कस्मिन् । अङ्गे । ऋतम् । अस्य । अधि ।
आऽहितम् । क्व । व्रतम् । क्व । श्रद्धा । अस्य । तिष्ठति । कस्मिन् । अङ्गे । सत्यम् । अस्य ।
प्रतिऽस्थितम् ॥१॥

**X.6.33** Just as seed grows on a fertile land tilled with a ploughshare, even so may the progeny, cattle and food of all kinds grow with me (or for me).

**X.6.34** O blessing, promoter of sacrifice, on whomsoever I put you, the propitious, him may you urge to supremacy, O blessing, fetching a hundred priestly fees (śata-daksiṇa).

**X.6.35** O fire-divine, this fuel is piled up here; enjoying it may you blaze up with oblations. In him, the cognizant of all (jātavedasi), kindled well with knowledge, may we find favour, well-being, progeny, vision, as well as cattle.

## Skambhaḥ - Adhyātmam

**X.7.1** In which part of him the austerities (tapas) abide; in which part of him the eternal law (ṛta) is laid where the vow (vrata), in which part of him resides the faith (śraddhā); in which part of him is the truth (satya) well-established ?

कस्मादङ्गाद्दीप्यते अग्निरस्य कस्मादङ्गात्पवते मातरिश्वा ।
कस्मादङ्गाद्वि मिमीतेधि चन्द्रमा मह स्कम्भस्य मिमानो अङ्गम् ॥२॥
कस्मिन्नङ्गे तिष्ठति भूमिरस्य कस्मिन्नङ्गे तिष्ठत्यन्तरिक्षम् ।
कस्मिन्नङ्गे तिष्ठत्याहिता द्यौः कस्मिन्नङ्गे तिष्ठत्युत्तरं दिवः ॥३॥
क्व प्रेप्सन्दीप्यत ऊर्ध्वो अग्निः क्व प्रेप्सन्पवते मातरिश्वा ।
यत्र प्रेप्सन्तीरभियन्त्यावृतः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥४॥
क्वार्धमासाः क्व यन्ति मासाः संवत्सरेण सह संविदानाः ।
यत्र यन्त्यृतवो यत्रार्तवाः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥५॥
क्व प्रेप्सन्ती युवती विरूपे अहोरात्रे द्रवतः संविदाने ।
यत्र प्रेप्सन्तीरभियन्त्यापः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥६॥
यस्मिन्त्स्तब्ध्वा प्रजापतिर्लोकान्त्सर्वाँ अधारयत् ।
स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥७॥

कस्मात् । अङ्गात् । दीप्यते । अग्निः । अस्य । कस्मात् । अङ्गात् । पवते । मातरिश्वा ।
कस्मात् । अङ्गात् । वि । मिमीते । अधि । चन्द्रमाः । महः । स्कम्भस्य । मिमानः । अङ्गम् ॥
कस्मिन् । अङ्गे । तिष्ठति । भूमिः । अस्य । कस्मिन् । अङ्गे । तिष्ठति । अन्तरिक्षम् ।
कस्मिन् । अङ्गे । तिष्ठति । आऽहिता । द्यौः । कस्मिन् । अङ्गे । तिष्ठति । उत्ऽतरम् । दिवः ॥
क्व । प्रऽईप्सन् । दीप्यते । ऊर्ध्वः । अग्निः । क्व । प्रऽईप्सन् । पवते । मातरिश्वा । यत्र ।
प्रऽईप्सन्तीः । अभिऽयन्ति । आऽवृतः । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित् । एव । सः ॥४॥
क्व । अर्धऽमासाः । क्व । यन्ति । मासाः । सम्ऽवत्सरेण । सह । सम्ऽविदानाः ।
यत्र । यन्ति । ऋतवः । यत्र । आर्तवाः । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित् । एव । सः ॥५॥
क्व । प्रेप्सन्ती इति प्रऽईप्सन्ती । युवती इति । विरूपे इति विऽरूपे । अहोरात्रे इति ।
द्रवतः । संविदाने इति सम्ऽविदाने । यत्र । प्रऽईप्सन्तीः । अभिऽयन्ति । आपः । स्कम्भम् ।
तम् । ब्रूहि । कतमः । स्वित् । एव । सः ॥६॥
यस्मिन् । स्तब्ध्वा । प्रजाऽपतिः । लोकान् । सर्वान् । अधारयत् ।
स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित् । एव । सः ॥ ७ ॥

**X.7.2** From which part of him the fire (agniḥ) blazes up; from which part blows the impetuous wind (mātariśvan); from which part of him the moon (candramas) traverses across measuring out a part of the mighty skambha (the support of the universe).

**X.7.3** In which part of him the earth (bhūmiḥ) is situated; in which part is situated the midspace (antarikṣa); in which part (of him) the sky (dyauḥ) rests well set; in which part is situated that which is above even the sky (uttaram-divaḥ) ?

**X.7.4** Whither desiring to attain, the fire (Agni) flame upwards, whither desiring to attain blows the impetuous wind; whiter desiring to attain the eddying streams flow; please tell me of that Skambha; which of so many indeed, is He?

**X.7.5** Whither go the half-months, whereto the months and also the year; whither go the seasons and the supplementary seasons; tell me of that Skambha; which of so many indeed, is He ?

**X.7.6** Whither desiring to attain, the two young maidens of different appearance, known as day and night, run accordant with each other; whither to attain the water flow onward; tell me of that Skambha; which of so many indeed, is He ?

**X.7.7** Firmly setting on which the Lord of creation holds all the worlds; tell me of that Skambha; which of so many indeed, is He ?

यत्परममवमं यच्च मध्यमं प्रजापतिः ससृजे विश्वरूपम्।
कियता स्कम्भः प्र विवेश तत्र यन्न प्राविशत्कियत्तद्बभूव ॥८॥
कियता स्कम्भः प्र विवेश भूतं कियद्भविष्यदन्वाशयेस्य।
एकं यदङ्गमकृणोत्सहस्रधा कियता स्कम्भः प्र विवेश तत्र ॥९॥
यत्र लोकांश्च कोशांश्चापो ब्रह्म जना विदुः ।
असच्च यत्र सच्चान्त स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥१०॥
यत्र तपः पराक्रम्य व्रतं धारयत्युत्तरम् ।
ऋतं च यत्र श्रद्धा चापो ब्रह्म समाहिताः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥११॥
यस्मिन्भूमिरन्तरिक्षं द्यौर्यस्मिन्नध्याहिता ।
यत्राग्निश्चन्द्रमाः सूर्यो वातस्तिष्ठन्त्यार्पिताः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥१२॥
यस्य त्रयस्त्रिंशद्देवा अङ्गे सर्वे समाहिताः।
स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥१३॥

यत्। परमम्। अवमम्। यत्। च। मध्यमम्। प्रजाऽपतिः। ससृजे। विश्वऽरूपम्।
कियता। स्कम्भः। प्र। विवेश। तत्र। यत्। न। प्रऽअविशत्। कियत्। तत्। बभूव ॥८॥
कियता। स्कम्भः। प्र। विवेश। भूतम्। कियत्। भविष्यत्। अनुऽआशये। अस्य।
एकम्। यत्। अङ्गम्। अकृणोत्। सहस्रऽधा। कियता। स्कम्भः। प्र। विवेश। तत्र ॥
यत्र। लोकान्। च। कोशान्। च। आपः। ब्रह्म। जनाः। विदुः। असत्। च।
यत्र। सत्। च। अन्तः। स्कम्भम्। तम्। ब्रूहि। कतमः। स्वित्। एव। सः ॥१०॥
यत्र। तपः। पराऽक्रम्य। व्रतम्। धारयति। उत्ऽतरम्।
ऋतम्। च। यत्र। श्रद्धा। च। आपः। ब्रह्म। सम्ऽआहिताः। स्कम्भम्।० ॥ ११ ॥
यस्मिन्। भूमिः। अन्तरिक्षम्। द्यौः। यस्मिन्। अधि। आऽहिता।
यत्र। अग्निः। चन्द्रमाः। सूर्यः। वातः। तिष्ठन्ति। आर्पिताः। स्कम्भम्। ० ॥१२॥
यस्य। त्रयःऽत्रिंशत्। देवाः। अङ्गे। सर्वे। सम्ऽआहिताः। स्कम्भम्। तम्० ॥ १३ ॥

**X.7.8** Whatever the highest, the lowest and the intermediate was created by the Lord of creation (prajāpati) in all forms - in how much of that the Skambha entered ? And how much was that which he did not enter ?

**X.7.9** How much the Skambha has entered the past ? And how much will he enter the future ? One part of him that He has turned into thousands, how much the Skambha has entered therein ?

**X.7.10** Wherein the worlds (lokān ) and the treasures (kośān), the actions (āpaḥ) and the knowledge (brahma) reside, thus the people know; wherein lies the non-existent (asat) as well as the existent (sat); tell me of that Skambha; which of so many, indeed, is He ?

**X.7.11** Where the austerity (tapaḥ) becoming aggressive (parākramya) holds on to the higher vow (vrata) wherein the righteousness (ṛta) and faith (śraddhā), action (āpaḥ) and knowledge (brahma) are set together; tell me of that Skambha, which of so many, indeed, is He ?

**X.7.12** Wherein the earth, the midspace and the sky are firmly set; wherein the fire, the moon, the Sun and the wind stand in their places; tell me of that Skambha; which of so many, indeed, is He ?

**X.7.13** In whose one part all the thirty-three (33) enlightened ones (deva) sit meditating (samāhita) tell me of that Skambha; which of so many, indeed, is He ?

यत्र ऋषयः प्रथमजा ऋचः साम यजुर्मही ।
एकर्षिर्यस्मिन्नार्पितः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥१४॥
यत्रामृतं च मृत्युश्च पुरुषेधि समाहिते ।
समुद्रो यस्य नाड्यः पुरुषेधि समाहिताः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥१५॥
यस्य चतस्रः प्रदिशो नाड्यस्तिष्ठन्ति प्रथमाः ।
यज्ञो यत्र पराक्रान्तः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥१६॥
ये पुरुषे ब्रह्म विदुस्ते विदुः परमेष्ठिनम् ।
यो वेद परमेष्ठिनं यश्च वेद प्रजापतिम् ।
ज्येष्ठं ये ब्राह्मणं विदुस्ते स्कम्भमनुसंविदुः ॥१७॥
यस्य शिरो वैश्वानरश्चक्षुरङ्गिरसोभवन् ।
अङ्गानि यस्य यातवः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥१८॥
यस्य ब्रह्म मुखमाहुर्जिह्वां मधुकशामुत ।
विराजमूधो यस्याहुः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥१९॥

यत्र । ऋषयः । प्रथमऽजाः । ऋचः । साम । यजुः । मही ।
एकऽऋषिः । यस्मिन् । आर्पितः । स्कम्भम् ।० ॥ १४ ॥
यत्र । अमृतम् । च । मृत्युः । च । पुरुषे । अधि । समाहिते इति समऽआहिते ।
समुद्रः । यस्य । नाड्यः । पुरुषे । अधि । समऽआहिताः । स्कम्भम् ।० ॥ १५ ॥
यस्य । चतस्रः । प्रऽदिशः । नाड्यः । तिष्ठन्ति । प्रथमाः ।
यज्ञः । यत्र । पराऽक्रान्तः । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित् । एव । सः ॥१६॥
ये । पुरुषे । ब्रह्म । विदुः । ते । विदुः । परमेऽस्थिनम् ।
यः । वेद । परमेऽस्थिनम् । यः । च । वेद । प्रजाऽपतिम् ।
ज्येष्ठम् । ये । ब्राह्मणम् । । विदुः । ते । स्कम्भम् । अनुऽसंविदुः ॥ १७ ॥
यस्य । शिरः । वैश्वानरः । चक्षुः । अङ्गिरसः । अभवन् ।
अङ्गानि । यस्य । यातवः । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित् । एव । सः ॥१८॥
यस्य । ब्रह्म । मुखम् । आहुः । जिह्वाम् । मधुऽकशाम् । उत ।
विऽराजम् । ऊधः । यस्य । आहुः । स्कम्भम् ।० ॥ १९ ॥

**X.7.14** Wherein the first-born (prathamajāḥ) seers, the Ṛk verses,Sāmans (praise songs), Yajus (sacrificial formulas), the great spiritual knowledge (Atharva hymns) and the sole seer (ekarsi) abide; tell me of that Skambha; which of so many, indeed, is He ?

**X.7.15** Where the immortality (amṛta) as well death (mṛtu) are set together in the Puruṣa (the Cosmic man); ocean is whose veins, that lie within the Puruṣa; tell me of that Skambha; which of so many, indeed, is He ?

**X.7.16** The four quarters (pradiśaḥ) stand out as whose most prominent arteries (nāḍyaḥ); wherein the sacrifice (yajña) shows its might; tell me of that Skambha; which among so many, indeed, is He ?

**X.7.17** They who recognize the Lord supreme in Puruṣa (the cosmic man), they know the Paramaṣṭhi (the Lord of the highest abode). He, who knows the Parameṣṭhi and He, who knows the Eldest Lord supreme (jyeṣtha Brahma), they come to know the Skambha (the support of the universe).

**X.7.18** He, whose head is the fire (vaiśvanara) beneficial for all men; whose vision (cakṣuah) are the Angiras; whose limbs are the travelling celestial bodies (Yātavaḥ); tell me of that Skambha; which among so many, indeed, is He ?

**X.7.19** Whose mouth (mukha) they say, is the Lord supreme, the tongue (jihvā) is the honeyed string (madhukaśā) and the udder (ūdhah) is Virāj, they say tell me of that Skambha; which of so many, indeed, is He ?

यस्मादृचो अपातक्षन्यजुर्यस्मादपाकषन् ।
सामानि यस्य लोमान्यथर्वाङ्गिरसो मुखं स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥२०॥
असच्छाखां प्रतिष्ठन्तीं परममिव जना विदुः ।
उतो सन्मन्यन्तेवरे ये ते शाखामुपासते ॥२१॥
यत्रादित्याश्च रुद्राश्च वसवश्च समाहिताः ।
भूतं च यत्र भव्यं च सर्वे लोकाः प्रतिष्ठिताः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥२२॥
यस्य त्रयस्त्रिंशद्देवा निधिं रक्षन्ति सर्वदा ।
निधिं तमद्य को वेद यं देवा अभिरक्षथ ॥२३॥
यत्र देवा ब्रह्मविदो ब्रह्म ज्येष्ठमुपासते ।
यो वै तान्विद्यात्प्रत्यक्षं स ब्रह्मा वेदिता स्यात् ॥२४॥
बृहन्तो नाम ते देवा येसतः परि जज्ञिरे ।
एकं तदङ्गं स्कम्भस्यासदाहुः परो जनाः ॥२५॥

यस्मात् । ऋचः । अपऽअतक्षन् । यजुः । यस्मात् । अपऽअकषन् । सामानि । यस्य । लोमानि । अथर्वऽअङ्गिरसः । मुखम् । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित् । एव । सः ॥
असत्ऽशाखाम् । प्रऽतिष्ठन्तीम् । परमम्ऽइव । जनाः । विदुः ।
उतो इति । सत् । मन्यन्ते । अवरे । ये । ते । शाखाम् । उपऽआसते ॥ २१ ॥
यत्र । आदित्याः । च । रुद्राः । च । वसवः । च । सम्ऽआहिताः । भूतम् । च । यत्र । भव्यम् । च । सर्वे । लोकाः । प्रतिऽस्थिताः । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित् । एव । सः ॥
यस्य । त्रयःऽत्रिंशत् । देवाः । निऽधिम् । रक्षन्ति । सर्वदा ।
निऽधिम् । तम् । अद्य । कः । वेद । यम् । देवाः । अभिऽरक्षथ ॥ २३ ॥
यत्र । देवाः । ब्रह्मऽविदः । ब्रह्म । ज्येष्ठम् । उपऽआसते ।
यः । वै । तान् । विद्यात् । प्रतिऽअक्षम् । सः । ब्रह्मा । वेदिता । स्यात् ॥ २४ ॥
बृहन्तः । नाम । ते । देवाः । ये । असतः । परि । जज्ञिरे ।
एकम् । तत् । अङ्गम् । स्कम्भस्य । असत् । आहुः । परः । जनाः ॥ २५ ॥

**X.7.20** Out of whom they chipped off the Ṛk verses; out of whom they hewed the Yajus (sacrificial formulas); Sāmans (praise songs) are whose short hair (on the body); and Atharvan hymns of Angiras are whose mouth (mukha); tell me of that Skambha; which of so many, indeed, is He ?

**X.7.21** The non-existing (asat) branch of Him, the people think to be the well-established and, as if, the supreme. And the others, who worship that branch, think it to be existing (sat) and real.

**X.7.22** Wherein the Adityas (twelve suns of the year), the Rudras (vital breaths) and the Vasus (treasures) are contained; wherein the past and the future and all the worlds are properly placed; tell me of that Skambha; which of so many, indeed, is He ?

**X.7.23** Whose precious treasure (nidhi) the thirty-three enlightened ones (33 devas) always guard; whoever knows that treasure now, which, O enlightened ones, you so carefully guard?

**X.7.24** Where the enlightened ones, who have realized the Lord supreme, worship the eldest Lord supreme, whosever knows them directly and surely, he shall become the knower, the realizer.

**X.7.25** Great (bṛhantah) are called those bounties of Nature, that have sprung from the non-existent (asataḥ). That non-existent is just a part of the Skambha, so the wise man say.

यत्र स्कम्भः प्रजनयन्पुराणं व्यवर्तयत् । एकं तदङ्गं स्कम्भस्य पुराणमनुसंविदुः ॥२६॥
यस्य त्रयस्त्रिंशद्देवा अङ्गे गात्रा विभेजिरे । तान्वै त्रयस्त्रिंशद्देवानेके ब्रह्मविदो विदुः ॥२७॥
हिरण्यगर्भं परममनत्युद्यं जना विदुः । स्कम्भस्तदग्रे प्रासिञ्चद्धिरण्यं लोके अन्तरा ॥२८॥

स्कम्भे लोकाः स्कम्भे तपः स्कम्भेऽध्यृतमाहितम् ।
स्कम्भं त्वा वेद प्रत्यक्षमिन्द्रे सर्वं समाहितम् ॥२९॥
इन्द्रे लोका इन्द्रे तप इन्द्रेऽध्यृतमाहितम् ।
इन्द्रं त्वा वेद प्रत्यक्षं स्कम्भे सर्वं प्रतिष्ठितम् ॥३०॥

नाम नाम्ना जोहवीति पुरा सूर्यात्पुरोषसः ।
यदजः प्रथमं संबभूव स ह तत्स्वराज्यमियाय यस्मान्नान्यत्परमस्ति भूतम् ॥३१॥

यत्र । स्कम्भः । प्रऽजनयन् । पुराणम् । विऽअवर्तयत् ।
एकम् । तत् । अङ्गम् । स्कम्भस्य । पुराणम् । अनुऽसंविदुः ॥ २६ ॥
यस्य । त्रयःऽत्रिंशत् । देवाः । अङ्गे । गात्रा । विऽभेजिरे ।
तान् । वै । त्रयःऽत्रिंशत् । देवान् । एके । ब्रह्मऽविदः । विदुः ॥ २७ ॥
हिरण्यऽगर्भम् । परमम् । अनतिऽउद्यम् । जनाः । विदुः ।
स्कम्भः । तत् । अग्रे । प्र । असिञ्चत् । हिरण्यम् । लोके । अन्तरा ॥ २८ ॥
स्कम्भे । लोकाः । स्कम्भे । तपः । स्कम्भे । अधि । ऋतम् । आऽहितम् ।
स्कम्भं । त्वा । वेद । प्रतिऽअक्षम् । इन्द्रे । सर्वम् । समऽआहितम् ॥ २९ ॥
इन्द्रे । लोकाः । इन्द्रे । तपः । इन्द्रे । अधि । ऋतम् । आऽहितम् ।
इन्द्रम् । त्वा । वेद । प्रतिऽअक्षम् । स्कम्भे । सर्वम् । प्रतिऽस्थितम् ॥ ३० ॥
नाम । नाम्ना । जोहवीति । पुरा । सूर्यात् । पुरा । उषसः । यत् । अजः । प्रथमम् ।
समऽबभूव । सः । ह । तत् । स्वऽराज्यम् । इयाय । यस्मात् । न । अन्यत् । परम् । अस्ति । भूतम् ॥

**X.7.26** Where the Skambha, starting creation, reproduced the old one (purānam) that old one, they consider to be only a part of the Skambha.

**X.7.27** In whose parts of the body, the thirty-three enlightened ones (33 devas) have divided themselves - only they, who have realized the Lord supreme, know those thirty-three enlightened ones.

**X.7.28** People know the golden fetus (hiraṇyagarham) as the supreme and indescribable; it was the Skambha, that first seeded that golden fetus in the universe.

**X.7.29** Within the Skambha (the support of the universe) are the worlds contained; within the Skambha is the penance (tapaḥ); within the Skambha, I have known you directly, all of which is contained in the resplendent Lord (Indra).

**X.7.30** Within the resplendent Lord (Indra) are the worlds (lokāḥ) contained; within the resplendent Lord is the penance (tapaḥ); within the resplendent Lord the eternal law (ṛta) is reposed. O resplendent Lord, I have known you directly (pratyakṣam), all of which is contained in the Skambha.

**X.7.31** Before the Sun (rise) and before the dawn (uṣasaḥ), (one) calls out his name by name (nāma namnā). As the ever-unborn comes into being first, he attains that self-luminance, superior to which there nothing exists.

यस्य भूमिः प्रमान्तरिक्षमुतोदरम् ।
दिवं यश्चक्रे मूर्धानं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥३२॥
यस्य सूर्यश्चक्षुश्चन्द्रमाश्च पुनर्णवः ।
अग्निं यश्चक्र आस्यं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥३३॥
यस्य वातः प्राणापानौ चक्षुरङ्गिरसोभवन् ।
दिशो यश्चक्रे प्रज्ञानीस्तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥३४॥
स्कम्भो दाधार द्यावापृथिवी उभे इमे स्कम्भो दाधारोर्वन्तरिक्षम् ।
स्कम्भो दाधार प्रदिशः षडुर्वीः स्कम्भ इदं विश्वं भुवनमा विवेश ॥३५॥
यः श्रमात्तपसो जातो लोकान्त्सर्वान्त्समानशे ।
सोमं यश्चक्रे केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥३६॥
कथं वातो नेलयति कथं न रमते मनः ।
किमापः सत्यं प्रेप्सन्तीर्नेलयन्ति कदा चन ॥३७॥

यस्य । भूमिः । प्रऽमा । अन्तरिक्षम् । उत । उदरम् ।
दिवम् । यः । चक्रे । मूर्धानम् । तस्मै । ज्येष्ठाय । ब्रह्मणे । नमः ॥ ३२ ॥
यस्य । सूर्यः । चक्षुः । चन्द्रमाः । च । पुनःऽनवः ।
अग्निम् । यः । चक्रे । आस्यम् । तस्मै । ज्येष्ठाय । ब्रह्मणे । नमः ॥ ३३ ॥
यस्य । वातः । प्राणापानौ । चक्षुः । आङ्गिरसः । अभवन् ।
दिशः । यः । चक्रे । प्रऽज्ञानीः । तस्मै । ज्येष्ठाय । ब्रह्मणे । नमः ॥ ३४ ॥
स्कम्भः । दाधार । द्यावापृथिवी इति । उभे इति । इमे इति । स्कम्भः । दाधार । उरु । अन्तरिक्षम् ।
स्कम्भः । दाधार । प्रऽदिशः । षट् । उर्वीः । स्कम्भे । इदम् । विश्वम् । भुवनम् । आ । विवेश ॥३५॥
यः । श्रमात् । तपसः । जातः । लोकान् । सर्वान् । समऽआनशे ।
सोमम् । यः । चक्रे । केवलम् । तस्मै । ज्येष्ठाय । ब्रह्मणे । नमः ॥ ३६ ॥
कथम् । वातः । न । इलयति । कथम् । न । रमते । मनः ।
किम् । आपः । सत्यम् । प्रऽईप्सन्तीः । न । इलयन्ति । कदा । चन ॥ ३७ ॥

**X.7.32** The earth is whose base (foot or prama), the midspace whose belly, and who has made the sky his head, to him, the Eldest Lord supreme, let our homage be.

**X.7.33** Whose eye is Sun and (also) the moon, that becomes new again; who has made the fire his mouth, to him the Eldest Lord supreme let our homage be.

**X.7.34** Whose in-breath (prāṇa) and out-breath (apāna) is the wind; whose eye are the Angiras; who has made the quarters his sense- organs, to him the Eldest Lord supreme let our homage be.

**X.7.35** The Skambha (support of the universe) sustains both these heaven and earth; the Skambha sustains the wide midspace; the Skambha sustains the six wide-spread mid-quarters (pradiśaḥ) the Skambha has entered all this whatsoever.

**X.7.36** Who, coming into existence from the toil of the penance, pervades all the worlds completely; who has made the devotional bliss (Somam) all his own, to that Eldest Lord supreme let our homage be.

**X.7.37** How is it that the wind (vātaḥ) never rests still ? How is that the mind (manaḥ) never rests still ? Seeking what truth (satyam), the waters (āpaḥ) never rest still ?

महद्यक्षं भुवनस्य मध्ये तपसि क्रान्तं सलिलस्य पृष्ठे ।
तस्मिञ्छ्रयन्ते य उ के च देवा वृक्षस्य स्कन्धः परित इव शाखाः ॥३८॥
यस्मै हस्ताभ्यां पादाभ्यां वाचा श्रोत्रेण चक्षुषा ।
यस्मै देवाः सदा बलिं प्रयच्छन्ति विमितेमितं स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥३९॥
अप तस्य हतं तमो व्यावृत्तः स पाप्मना ।
सर्वाणि तस्मिञ्ज्योतींषि यानि त्रीणि प्रजापतौ ॥४०॥
यो वेतसं हिरण्ययं तिष्ठन्तं सलिले वेद । स वै गुह्यः प्रजापतिः ॥४१॥
तन्त्रमेके युवती विरूपे अभ्याक्रामं वयतः षण्मयूखम् ।
प्रान्या तन्तूंस्तिरते धत्ते अन्या नाप वृञ्जाते न गमातो अन्तम् ॥४२॥
तयोरहं परिनृत्यन्त्योरिव न वि जानामि यतरा परस्तात् ।
पुमानेनद्वयत्युद्गृणत्ति पुमानेनद्वि जभाराधि नाके ॥४३॥

महत् । यक्षम् । भुवनस्य । मध्ये । तपसि । क्रान्तम् । सलिलस्य । पृष्ठे । तस्मिन् । श्रयन्ते । ये । ऊं इति । के । च । देवाः । वृक्षस्य । स्कन्धः । परितःऽइव । शाखाः ॥ ३८ ॥

यस्मै । हस्ताभ्याम् । पादाभ्याम् । वाचा । श्रोत्रेण । चक्षुषा । यस्मै । देवाः । सदा । बलिम् । प्रऽयच्छन्ति । विऽमिते । अमितम् । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित् । एव । सः ॥

अप । तस्य । हतम् । तमः । विऽआवृत्तः । सः । पाप्मना ।
सर्वाणि । तस्मिन् । ज्योतींषि । यानि । त्रीणि । प्रजाऽपतौ ॥ ४० ॥

यः । वेतसम् । हिरण्ययम् । तिष्ठन्तम् । सलिले । वेद । सः । वै । गुह्यः । प्रजाऽपतिः ॥

तन्त्रम् । एके इति । युवती इति । विरूपे इति विऽरूपे । अभिऽआक्रामम् । वयतः । षट्ऽमयूखम् । प्र । अन्या । तन्तून् । तिरते । धत्ते । अन्या । न । अप । वृञ्जाते इति । न । गमातः । अन्तम् ॥ ४२ ॥

तयोः । अहम् । परिनृत्यन्त्योःऽइव । न । वि । जानामि । यतरा । परस्तात् ।
पुमान् । एनत् । वयति । उत् । गृणत्ति । पुमान् । एनत् । वि । जभार । अधि । नाके ॥

**X.7.38** A mighty (deity) worthy of worship (is there) in the midst of this existence, extending into heat at the surface of the flood (salila-pṛṣṭha) - in Him the bounties of Nature, whatsoever, find shelter, like the branches of a tree around its trunk.

**X.7.39** To whom, with their two hands, with two feet, with speech, with hearing, and with vision, to whom the measureless the enlightened ones always offer unmeasured tribute; tell me of that Skambha; which of so many, indeed, is He ?

**X.7.40** The darkness is kicked away from Him; He is removed away from evil; within Him are all the three lights (trīṇi jyotīṅṣi) that are in the Lord of creatures.

**X.7.41** He, who knows the golden reed (hiraṇya-vetese) that stands in the flood, he, indeed, is the hidden (guhya) Lord of creation.

**X.7.42** Two single maidens of diverse appearance, are weaving a six-pegged warp (ṣaṇ-mayukham) approaching it again and again. One of them spreads out the yarns (laṅtuṅstirate); the other one lays them. They do not take rest; nor do they come to the end (of their work).

**X.7.43** Of these two, who are as if dancing, which one is superior, this I do not know for sure. The (cosmic) man weaves it, sprinkles it; the man wears it in the sorrowless world.

इमे मयूखा उप तस्तभुर्दिवं सामानि चक्रुस्तसराणि वातवे ॥४४॥

इमे । मयूखाः । उप । तस्तभुः । दिवम् । सामानि । चक्रुः । तसराणि । वातवे ॥

( ८ ) अष्टमं सूक्तम्

(१–४४) चतुश्चत्वारिंशदृचस्यास्य सूक्तस्य कुत्स ऋषिः । अध्यात्मं देवता । (१) प्रथमर्चे उपरिष्टाद्विराड्बृहती, (२) द्वितीयाया बृहतीगर्भानुष्टुप्, (३–४, ८–९, १३, १६–१८, २४, २८, ३५–३६, ४०, ४४) तृतीया-चतुर्थ्यष्टमीनवमीत्रयोदशीनां षोडश्यादितृचस्य चतुर्विंश्यष्टाविंशीपञ्चत्रिंशीषट्त्रिंशीचत्वारिंशीचतुश्चत्वारिंशीनाञ्च त्रिष्टुप्, (५) पञ्चम्या भुरिगनुष्टुप्, (६, १४, १९–२१, २३, २५, २९, ३१–३४, ३७–३८, ४१, ४३) षष्ठीचतुर्दश्योरेकोनविंश्यादितृचस्य त्रयोविंशीपञ्चविंश्येकोनत्रिंशीनामेकत्रिंश्यादिचतसृणां सप्तत्रिंश्यष्टात्रिंश्येकचत्वारिंशीत्रिचत्वारिंशीनाञ्चानुष्टुप्, (७) सप्तम्याः पराबृहती त्रिष्टुप्, (१०) दशम्या अनुष्टुब्गर्भा त्रिष्टुप्, (११) एकादश्या जगती, (१२) द्वादश्याः पुरोबृहती त्रिष्टुब्गर्भार्षी पङ्क्तिः, (१५, २७) पञ्चदशीसप्तविंश्योर्भुरिग्बृहती, (२२) द्वाविंश्याः पुर उष्णिक्, (२६) षड्विंश्या द्व्युष्णिग्गर्भानुष्टुप्, (३०) त्रिंश्या भुरिक्त्रिष्टुप्, (३९) एकोनचत्वारिंश्या बृहतीगर्भा त्रिष्टुप्, (४२) द्विचत्वारिंश्याश्च विराड्गायत्री छन्दांसि ॥

यो भूतं च भव्यं च सर्वं यश्चाधितिष्ठति ।
स्व१र्यस्य च केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥१॥
स्कम्भेनेमे विष्टभिते द्यौश्च भूमिश्च तिष्ठतः ।
स्कम्भ इदं सर्वमात्मन्वद्यत्प्राणन्निमिषच्च यत् ॥२॥
तिस्रो ह प्रजा अत्यायमायन्न्य१न्या अर्कमभितोविशन्त ।
बृहन्ह तस्थौ रजसो विमानो हरितो हरिणीरा विवेश ॥३॥
द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत ।
तत्राहतास्त्रीणि शतानि शङ्कवः षष्टिश्च खीला अविचाचला ये ॥४॥

यः । भूतम् । च । भव्यम् । च । सर्वम् । यः । च । अधिऽतिष्ठति ।
स्व१ः । यस्य । च । केवलम् । तस्मै । ज्येष्ठाय । ब्रह्मणे । नमः ॥ १ ॥
स्कम्भेन । इमे इति । विस्तभिते इति विऽस्तभिते । द्यौः । च । भूमिः । च । तिष्ठतः ।
स्कम्भे । इदम् । सर्वम् । आत्मन्ऽवत् । यत् । प्राणत् । निऽमिषत् । च । यत् ॥ २ ॥
तिस्रः । ह । प्रऽजाः । अतिऽआयम् । आयन् । नि । अन्याः । अर्कम् । अभितः । अविशन्त ।
बृहन् । ह । तस्थौ । रजसः । विऽमानः । हरितः । हरिणीः । आ । विवेश ॥ ३ ॥
द्वादश । प्रऽधयः । चक्रम् । एकम् । त्रीणि । नभ्यानि । कः । ऊं इति । तत् । चिकेत ।
तत्र । आऽहताः । त्रीणि । शतानि । शङ्कवः । षष्टिः । च । खीलाः । अविऽचाचलाः । ये ॥

**X.7.44** These pegs hold heaven steady. They have made the Saman Chants the shuttles for weaving.

## Adhyātmam

**X.8.1** Let our homage be to him, the Lord supreme, who superintends all that ever was, and all that ever will be, and all (that now exists); His only is heavenly bliss.

**X.8.2** These two, the sky and the earth, stand fast fixed apart by the Skambha (the support of the universe). All this, which has soul and which breaths and which winks, verily is in the Skambha itself.

**X.8.3** Three kinds of manifested Natures, creatures have moved across our sight. The others now enter around the cosmic glows. The mightly Lord (the Sun) stands with in the worlds; wind the space. The Yellow one entered the yellow-ones. (Also Ṛg. VIII.101.14)

**X.8.4** The fellies are twelve; the wheel is one, the naves are three; who knows of it ? Three hundred and sixty spokes have been fixed therein; the nails that are immoveable as well as moveable.

इदं संवितुर्वि जानीहि षड्यमा एक एकजः ।
तस्मिन्हापित्वमिच्छन्ते य एषामेक एकजः ॥५॥
आविः सन्निहितं गुहा जरन्नाम महत्पदम् ।
तत्रेदं सर्वमार्पितमेजत्प्राणत्प्रतिष्ठितम् ॥६॥
एकचक्रं वर्तत एकनेमि सहस्राक्षरं प्र पुरो नि पश्चा ।
अर्धेन विश्वं भुवनं जजान यदस्यार्धं क्व तद्बभूव ॥७॥
पञ्चवाही वहत्यग्रमेषां प्रष्टयो युक्ता अनुसंवहन्ति ।
अयातमस्य ददृशे न यातं परं नेदीयोवरं दवीयः ॥८॥
तिर्यग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपम् ।
तदासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः ॥९॥
या पुरस्ताद्युज्यते या च पश्चाद्या विश्वतो युज्यते या च सर्वतः ।
यया यज्ञः प्राङ्तायते तां त्वा पृच्छामि कतमा सर्चाम् ॥१०॥

इदम् । सवितः । वि । जानीहि । षट् । यमाः । एकः । एकऽजः ।
तस्मिन् । ह । अपिऽत्वम् । इच्छन्ते । यः । एषाम् । एकः । एकऽजः ॥ ५ ॥
आविः । सत् । निऽहितम् । गुहा । जरत् । नाम । महत् । पदम् ।
तत्र । इदम् । सर्वम् । आर्पितम् । एजत् । प्राणत् । प्रतिऽस्थितम् ॥ ६ ॥
एकऽचक्रम् । वर्तते । एकऽनेमि । सहस्रऽअक्षरम् । प्र । पुरः । नि । पश्चा ।
अर्धेन । विश्वम् । भुवनम् । जजान । यत् । अस्य । अर्धम् । क्व । तत् । बभूव ॥ ७ ॥
पञ्चऽवाही । वहति । अग्रम् । एषाम् । प्रष्टयः । युक्ताः । अनुऽसंवहन्ति ।
अयातम् । अस्य । ददृशे । न । यातम् । परम् । नेदीयः । अवरम् । दवीयः ॥ ८ ॥
तिर्यक्ऽबिलः । चमसः । ऊर्ध्वऽबुध्नः । तस्मिन् । यशः । निऽहितम् । विश्वऽरूपम् ।
तत् । आसते । ऋषयः । सप्त । साकम् । ये । अस्य । गोपाः । महतः । बभूवुः ॥ ९ ॥
या । पुरस्तात् । युज्यते । या । च । पश्चात् । या । विश्वतः । युज्यते । या । च । सर्वतः ।
यया । यज्ञः । प्राङ् । तायते । ताम् । त्वा । पृच्छामि । कतमा । सा । ऋचाम् ॥ १० ॥

**X.8.5** O vivifier (savitṛ) know this for sure; six are pairs of twins and one singly born. They seek relationship in him, who among them is born alone.

**X.8.6** Though manifest, it lies concealed, as if, in a cave, an ancient name and a great place.Therin is well established all this, that which moves and that which breathes.

**X.8.7** One-wheeled, one-fellied, and thousand-spoked it moves forward and returns backwards as well. With its half it has created all the beings; where is that which is its other half ?

**X.8.8** The five-horsed car moves in front of them; yoked side-horses follow it while drawing. Unmoving it is visible, not its motion. What is far, that is quite near; what is near, that (in fact) is very far.

**X.8.9** This is a bowl with opening on the sideways and bottom upward; glory of all forms is deposited in it. Therein sit together the seven seers, who have become the protectors of this great one.

**X.8.10** That (verse), which is applied in the beginning and which (is applied) in the end, which is applied on all the occasions with which the sacrifice proceeds forward - which of all the verses is that one, this I ask you.

यदेजति पतति यच्च तिष्ठति प्राणदप्राणन्निमिषच्च यद्भुवत् ।
तद्दाधार पृथिवीं विश्वरूपं तत्संभूय भवत्येकमेव ॥११॥
अनन्तं विततं पुरुत्रानन्तमन्तवच्चा समन्ते ।
ते नाकपालश्चरति विचिन्वन्विद्वान्भूतमुत भव्यमस्य ॥१२॥
प्रजापतिश्चरति गर्भे अन्तरदृश्यमानो बहुधा वि जायते ।
अर्धेन विश्वं भुवनं जजान यदस्यार्धं कतमः स केतुः ॥१३॥
ऊर्ध्वं भरन्तमुदकं कुम्भेनेवोदहार्यम् ।
पश्यन्ति सर्वे चक्षुषा न सर्वे मनसा विदुः ॥१४॥
दूरे पूर्णेन वसति दूर ऊनेन हीयते ।
महद्यक्षं भुवनस्य मध्ये तस्मै बलिं राष्ट्रभृतो भरन्ति ॥१५॥
यतः सूर्य उदेत्यस्तं यत्र च गच्छति ।
तदेव मन्येहं ज्येष्ठं तदु नात्येति किं चन ॥१६॥

यत् । एजति । पतति । यत् । च । तिष्ठति । प्राणत् । अप्राणत् । निऽमिषत् । च । यत् ।
भुवत् । तत् । दाधार । पृथिवीम् । विश्वऽरूपम् । तत् । सम्ऽभूय । भवति । एकम् । एव ॥ ११ ॥
अनन्तम् । विऽततम् । पुरुऽत्रा । अनन्तम् । अन्तऽवत् । च । समन्ते इति सम्ऽअन्ते ।
ते इति । नाकऽपालः । चरति । विऽचिन्वन् । विद्वान् । भूतम् । उत । भव्यम् । अस्य ॥
प्रजाऽपतिः । चरति । गर्भे । अन्तः । अदृश्यमानः । बहुऽधा । वि । जायते ।
अर्धेन । विश्वम् । भुवनम् । जजान । यत् । अस्य । अर्धम् । कतमः । सः । केतुः ॥
ऊर्ध्वम् । भरन्तम् । उदकम् । कुम्भेनऽइव । उदऽहार्यम् ।
पश्यन्ति । सर्वे । चक्षुषा । न । सर्वे । मनसा । विदुः ॥ १४ ॥
दूरे । पूर्णेन । वसति । दूरे । ऊनेन । हीयते ।
महत् । यक्षम् । भुवनस्य । मध्ये । तस्मै । बलिम् । राष्ट्रऽभृतः । भरन्ति ॥ १५ ॥
यतः । सूर्यः । उत्ऽएति । अस्तम् । यत्र । च । गच्छति ।
तत् । एव । मन्ये । अहम् । ज्येष्ठम् । तत् । ऊं इति । न । अति । एति । किम् । चन ॥

**X.8.11** That which moves, flies or stands, and which breathes, or breathes not, which winks and which has come into being, that one of universal forms sustains the earth. Being assembled, that becomes one only.

**X.8.12** The endless stretches out in many directions; the endless, and that, which has its ends, meet together. The Lord of the sorrowless world goes discerning both of them, knowing the past as well as the future of it.

**X.8.13** The Lord of creation moves into the womb, unseen, he is born in various forms. With one half he creates the whole universe of his other half, what sign is there to indicate ?

**X.8.14** Him, carrying water upwards, just like a water-bearer with her vessel, all people see with their eyes, but not all realize him with their mind.

**X.8.15** He dwells afar with the full; he is left afar by the deficient. At the center of this existence, there is a mighty (deity) worthy of worship; to him the rulers of the kingdoms bear tribute.

**X.8.16** Wherefrom the Sun arises and wherein he sets (goes to his eternal home), that, indeed, I hold supreme; none whatsoever surpasses Him.

ये अर्वाङ्मध्य उत वा पुराणं वेदं विद्वांसमभितो वदन्ति ।
आदित्यमेव ते परि वदन्ति सर्वे अग्निं द्वितीयं त्रिवृतं च हंसम् ॥१७॥
सहस्राह्ण्यं वियतावस्य पक्षौ हरेर्हंसस्य पततः स्वर्गम् ।
स देवान्त्सर्वानुरस्युपदद्य संपश्यन्याति भुवनानि विश्वा ॥१८॥
सत्येनोर्ध्वस्तपति ब्रह्मणार्वाङ्वि पश्यति ।
प्राणेन तिर्यङ् प्राणति यस्मिञ्ज्येष्ठमधि श्रितम् ॥१९॥
यो वै ते विद्यादरणी याभ्यां निर्मथ्यते वसु ।
स विद्वाञ्ज्येष्ठं मन्येत स विद्याद्ब्राह्मणं महत् ॥२०॥
अपादग्रे समभवत्सो अग्रे स्वराभरत् ।
चतुष्पाद्भूत्वा भोग्यः सर्वमादत्त भोजनम् ॥२१॥
भोग्यो भवदथो अन्नमदद्बहु । यो देवमुत्तरावन्तमुपासातै सनातनम् ॥२२॥

ये । अर्वाङ् । मध्ये । उत । वा । पुराणम् । वेदम् । विद्वांसम् । अभितः । वदन्ति । आदित्यम् ।
एव । ते । परि । वदन्ति । सर्वे । अग्निम् । द्वितीयम् । त्रिऽवृतम् । च । हंसम् ॥ १७ ॥
सहस्रऽअह्नयम् । विऽयतौ । अस्य । पक्षौ । हरेः । हंसस्य । पततः । स्वःऽगम् ।
सः । देवान् । सर्वान् । उरसि । उपऽदद्य । सम्ऽपश्यन् । याति । भुवनानि । विश्वा ॥१८॥
सत्येन । ऊर्ध्वः । तपति । ब्रह्मणा । अर्वाङ् । वि । पश्यति ।
प्राणेन । तिर्यङ् । प्र । अनति । यस्मिन् । ज्येष्ठम् । अधि । श्रितम् ॥ १९ ॥
यः । वै । ते इति । विद्यात् । अरणी इति । याभ्याम् । निःऽमथ्यते । वसु ।
सः । विद्वान् । ज्येष्ठम् । मन्येत । सः । विद्यात् । ब्राह्मणम् । महत् ॥ २० ॥
अपात् । अग्रे । सम् । अभवत् । सः । अग्रे । स्वः । आ । अभरत् ।
चतुःऽपात् । भूत्वा । भोग्यः । सर्वम् । आ । अदत्त । भोजनम् ॥ २१ ॥
भोग्यः । भवत् । अथो इति । अन्नम् । अदत् । बहु ।
यः । देवम् । उत्तरऽवन्तम् । उपऽआसातै । सनातनम् ॥ २२ ॥

**X.8.17** They, who describe the knower of all this is to be known as recent, medieval or ancient, all of them describe only the Sun, the second and the threefold swan (haṁsam).

**X.8.18** Two wings of this golden-coloured swan are spread out for a thousand days while he flies towards heaven. Carrying all the enlightened ones on his breast (urasi), he goes watching over all the beings.

**X.8.19** By truth he blazes above; by knowledge he looks down correctly, by vital breath he breaths sideways, within whom rests the chiefest (Lord supreme).

**X.8.20** Whoso verily knows two (fire-producing) churning sticks (araṇī), with which the (spiritual) wealth (vasu) is churned out, he may consider himself to be knowing the Chiefest Lord; he may know the great Lord supreme.

**X.8.21** First he came into being footless (apād). He in the beginning bestowed heavenly bliss. Becoming four-footed, capable of enjoying, he took to all sorts of enjoyment (bhojanam).

**X.8.22** Capable of enjoyment (bhogyaḥ) shall he become, and also he shall eat plenty of food (annaṁadad), whoever worships the eternal (sanātanam) the bestower of superiority (uttarāvantam).

सनातनमेनमाहुरुताद्य स्यात्पुनर्णवः ।
अहोरात्रे प्र जायेते अन्यो अन्यस्य रूपयोः ॥२३॥
शतं सहस्रमयुतं न्यर्बुदमसंख्येयं स्वमस्मिन्निविष्टम् ।
तदस्य घ्नन्त्यभिपश्यत एव तस्माद्देवो रोचत एष एतत् ॥२४॥
बालादेकमणीयस्कमुतैकं नेव दृश्यते ।
ततः परिष्वजीयसी देवता सा मम प्रिया ॥२५॥
इयं कल्याण्य१जरा मर्त्यस्यामृता गृहे ।
यस्मै कृता शये स यश्चकार जजार सः ॥२६॥
त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।
त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः ॥२७॥
उतैषां पितोत वा पुत्र एषामुतैषां ज्येष्ठ उत वा कनिष्ठः ।
एको ह देवो मनसि प्रविष्टः प्रथमो जातः स उ गर्भे अन्तः ॥२८॥

सनातनम् । एनम् । आहुः । उत । अद्य । स्यात् । पुनःऽनवः ।
अहोरात्रे इति । प्र । जायेते इति । अन्यः । अन्यस्य । रूपयोः ॥ २३ ॥
शतम् । सहस्रम् । अयुतम् । निऽअर्बुदम् । असम्ऽख्येयम् । स्वम् । अस्मिन् । निऽविष्टम् ।
तत् । अस्य । घ्नन्ति । अभिऽपश्यतः । एव । तस्मात् । देवः । रोचते । एषः । एतत् ॥ २४ ॥
बालात् । एकम् । अणीयःऽकम् । उत । एकम् । नऽइव । दृश्यते ।
ततः । परिऽस्वजीयसी । देवता । सा । मम । प्रिया ॥ २५ ॥
इयम् । कल्याणी । अजरा । मर्त्यस्य । अमृता । गृहे ।
यस्मै । कृता । शये । सः । यः । चकार । जजार । सः ॥ २६ ॥
त्वम् । स्त्री । त्वम् । पुमान् । असि । त्वम् । कुमारः । उत । वा । कुमारी ।
त्वम् । जीर्णः । दण्डेन । वञ्चसि । त्वम् । जातः । भवसि । विश्वतःऽमुखः ॥ २७ ॥
उत । एषाम् । पिता । उत । वा । पुत्रः । एषाम् । उत । एषाम् । ज्येष्ठः । उत । वा । कनिष्ठः ।
एकः । ह । देवः । मनसि । प्रऽविष्टः । प्रथमः । जातः । सः । ऊं इति । गर्भे । अन्तः ॥

**X.8.23** They proclaim Him to be eternal. But He may become new again even today. Day and night are reproduced, each one from the two forms which the other wears.

**X.8.24** A hundred, a thousand, ten thousand, a hundred million, an innumerable wealth is laid in Him. That they strike upon even as He looks on. And therefrom this Lord shines forth here. (śatam = 100; sahasram = 1000; ayutam = 10000; nyarbudam = a hundred million)

**X.8.25** There is one, that is finer even than a hair; also there is one, that is not visible at all (that is visible as if nothing). The deity, that embraces them firmly, is dear to me.

**X.8.26** This auspicious one (woman) is unaffected by age; an immortal in the home of a mortal. For whom she was made, he (sleeps); he, who made her, has grown old.

**X.8.27** You are the female; also you are the male; you are a lad as well as a damsel. It is you, who growing old, totter with a staff (danḍena). When coming into existence, you are face to face with each and every thing.

**X.8.28** You are the father of all these, and also their son. You are the eldest among these and also the youngest. Surely He is the sole Lord, who has entered (our) mind (heart). Though born first of all, He is still in the womb.

पूर्णात्पूर्णमुदचति पूर्णं पूर्णेन सिच्यते ।
उतो तदद्य विद्याम यतस्तत्परिषिच्यते ॥२९॥
एषा सनत्नी सनमेव जातैषा पुराणी परि सर्वं बभूव ।
मही देव्युषसो विभाती सैकेनैकेन मिषता वि चष्टे ॥३०॥
अविर्वै नाम देवतर्तेनास्ते परीवृता ।
तस्या रूपेणेमे वृक्षा हरिता हरितस्रजः ॥३१॥
अन्ति सन्तं न जहात्यन्ति सन्तं न पश्यति ।
देवस्य पश्य काव्यं न ममार न जीर्यति ॥३२॥
अपूर्वेणेषिता वाचस्ता वदन्ति यथायथम् ।
वदन्तीर्यत्र गच्छन्ति तदाहुर्ब्राह्मणं महत् ॥३३॥
यत्र देवाश्च मनुष्याश्चारा नाभाविव श्रिताः ।
अपां त्वा पुष्पं पृच्छामि यत्र तन्मायया हितम् ॥३४॥

पूर्णात् । पूर्णम् । उत् । अचति । पूर्णम् । पूर्णेन । सिच्यते ।
उतो इति । तत् । अद्य । विद्याम । यतः । तत् । परिऽसिच्यते ॥ २९ ॥
एषा । सनत्नी । सनम् । एव । जाता । एषा । पुराणी । परि । सर्वम् । बभूव ।
मही । देवी । उषसः । विऽभाती । सा । एकेनऽएकेन । मिषता । वि । चष्टे ॥ ३० ॥
अविः । वै । नाम । देवता । ऋतेन । आस्ते । परिऽवृता ।
तस्याः । रूपेण । इमे । वृक्षाः । हरिताः । हरितऽस्रजः ॥ ३१ ॥
अन्ति । सन्तम् । न । जहाति । अन्ति । सन्तम् । न । पश्यति ।
देवस्य । पश्य । काव्यम् । न । ममार । न । जीर्यति ॥ ३२ ॥
अपूर्वेण । इषिताः । वाचः । ताः । वदन्ति । यथाऽयथम् ।
वदन्तीः । यत्र । गच्छन्ति । तत् । आहुः । ब्राह्मणम् । महत् ॥ ३३ ॥
यत्र । देवाः । च । मनुष्याः । च । अराः । नाभौऽइव । श्रिताः ।
अपाम् । त्वा । पुष्पम् । पृच्छामि । यत्र । तत् । मायया । हितम् ॥ ३४ ॥

**X.8.29** From the full it takes out the full, the full is impregnated with the full. May we know today that, wherefrom that is impregnated.

**X.8.30** She is eternal indeed, eternal by birth . She, the ancient, has subdued all. Mighty deity of dawns, shining bright, she appears with each and every one, that winks.

**X.8.31** Indeed there is a deity Aviḥ (the protectress) by name, girt by divine law. With her beauty these trees are green, garlanded with green (leaves).

**X.8.32** Him, so close, He deserts not. Though so close, the other does not see Him. Look at the Lord's art that never dies nor decays.

**X.8.33** Those voices are inspired by the unpreceded one; these tell correctly as it is. Telling so where they go, that they call the great Lord supreme.

**X.8.34** Wherein the enlightened ones and the human beings are set like spokes in the nave - I ask you that flower of waters and where that has been placed enveloped in illusion (māyayā hitam).

येभिर्वात इषितः प्रवाति ये ददन्ते पञ्च दिशः सध्रीचीः ।
य आहुतिमत्यमन्यन्त देवा अपां नेतारः कतमे त आसन् ॥३५॥
इमामेषां पृथिवीं वस्त एकोन्तरिक्षं पर्येको बभूव ।
दिवमेषां ददते यो विधर्ता विश्वा आशाः प्रति रक्षन्त्येके ॥३६॥
यो विद्यात्सूत्रं विततं यस्मिन्नोताः प्रजा इमाः ।
सूत्रं सूत्रस्य यो विद्यात्स विद्याद्ब्राह्मणं महत् ॥३७॥
वेदाहं सूत्रं विततं यस्मिन्नोताः प्रजा इमाः ।
सूत्रं सूत्रस्याहं वेदाथो यद्ब्राह्मणं महत् ॥३८॥
यदन्तरा द्यावापृथिवी अग्निरैत्प्रदहन्विश्वदाव्यः ।
यत्रातिष्ठन्नेकपत्नीः परस्तात्क्वेवासीन्मातरिश्वा तदानीम् ॥३९॥
अप्स्वासीन्मातरिश्वा प्रविष्टः प्रविष्टा देवाः सलिलान्यासन् ।
बृहन्ह तस्थौ रजसो विमानः पवमानो हरित आ विवेश ॥४०॥

येभिः । वातः । इषितः । प्रऽवाति । ये । ददन्ते । पञ्च । दिशः । सध्रीचीः ।
ये । आऽहुतिम् । अतिऽअमन्यन्त । देवाः । अपाम् । नेतारः । कतमे । ते । आसन् ॥
इमाम् । एषाम् । पृथिवीम् । वस्ते । एकः । अन्तरिक्षम् । परि । एकः । बभुव ।
दिवम् । एषाम् । ददते । यः । विऽधर्ता । विश्वाः । आशाः । प्रति । रक्षन्ति । एके ॥
यः । विद्यात् । सूत्रम् । विऽततम् । यस्मिन् । आऽउताः । प्रऽजाः । इमाः ।
सूत्रम् । सूत्रस्य । यः । विद्यात् । सः । विद्यात् । ब्राह्मणम् । महत् ॥ ३७ ॥
वेद । अहम् । सूत्रम् । विऽततम् । यस्मिन् । आऽउताः । प्रऽजाः । इमाः ।
सूत्रम् । सूत्रस्य । अहम् । वेद । अथो इति । यत् । ब्राह्मणम् । महत् ॥ ३८ ॥
यत् । अन्तरा । द्यावापृथिवी इति । अग्निः । ऐत् । प्रऽदहन् । विश्वऽदाव्यः ।
यत्र । अतिष्ठन् । एकऽपत्नीः । परस्तात् । क्वऽइव । आसीत् । मातरिश्वा । तदानीम् ॥३९॥
अप्ऽसु । आसीत् । मातरिश्वा । प्रऽविष्टः । प्रऽविष्टाः । देवाः । सलिलानि । आसन् ।
बृहन् । ह । तस्थौ । रजसः । विऽमानः । पवमानः । हरितः । आ । विवेश ॥ ४० ॥

**X.8.35** Inspired by whom the wind blows; who hold the five quarters in unison; the bounties of Nature that consider themselves above the sacrificial offerings - which of them are the conductors of waters (apām netāḥ).

**X.8.36** One of them resides on the earth; one has pervaded the midspace; one among them, who is the main supporter, holds the sky; some of them guard all the quarters.

**X.8.37** He, who knows the wide-spread thread, into which these creatures have been woven, and he, who knows the thread of the thread, may realize the great Lord supreme.

**X.8.38** I have realized the wide-spread thread, into which these creatures have been woven, and I have realized the thread of the thread and also that, which is the great Lord supreme.

**X.8.39** When between the sky and the earth, the all-consuming fire moved forth burning up there, where those having one wife only stood far away, where then was the atmospheric wind?

**X.8.40** Into the waters the atmospheric wind had entered. The bounties of Nature had entered the floods. The great one stood as the measurer of the space; the purifying wind entered the green vegetation.

उत्त॑रेणेव गाय॒त्रीम॒मृतेधि॒ वि च॑क्रमे । साम्ना॒ ये साम॑ संवि॒दुर॒जस्तद्द॑दृशे॒ क्व॑ ॥४१॥
नि॒वेश॑नः सं॒गम॑नो॒ वसू॑नां दे॒व इ॑व सवि॒ता स॒त्यध॑र्मा ।
इन्द्रो॒ न त॑स्थौ सम॒रे धना॑नाम् ॥४२॥
पु॒ण्डरी॑कं॒ नव॑द्वारं त्रि॒भिर्गु॒णेभि॒रावृ॑तम् ।
तस्मि॒न्यद्य॒क्षमा॑त्म॒न्वत्तद्वै ब्र॑ह्म॒विदो॑ विदुः ॥४३॥
अ॒का॒मो धीरो॑ अ॒मृतः॑ स्वयं॒भू रसे॑न तृ॒प्तो न कुत॑श्च॒नोन॑ः ।
तमे॒व वि॒द्वान्न बि॑भाय मृ॒त्योरा॒त्मानं॒ धीर॑म॒जरं॒ युवा॑नम् ॥४४॥

उत्त॑रेणऽइव । गा॒य॒त्रीम् । अ॒मृते॑ । अधि॑ । वि । च॒क्र॒मे॒ ।
साम्ना॑ । ये । साम॑ । स॒म्ऽवि॒दुः । अ॒जः । तत् । द॒दृ॒शे॒ । क्व॑ ॥ ४१ ॥
नि॒ऽवेश॑नः । स॒म्ऽगम॑नः । वसू॑नाम् । दे॒वःऽइ॑व । स॒वि॒ता । स॒त्यऽध॑र्मा ।
इन्द्रः॑ । न । त॒स्थौ॒ । स॒म्ऽअ॒रे । धना॑नाम् ॥ ४२ ॥
पु॒ण्डरी॑कम् । नव॑ऽद्वारम् । त्रि॒ऽभिः । गु॒णेभिः॑ । आऽवृ॑तम् ।
तस्मि॑न् । यत् । य॒क्षम् । आ॒त्म॒न्ऽवत् । तत् । वै । ब्र॒ह्म॒ऽविदः॑ । वि॒दुः ॥ ४३ ॥
अ॒का॒मः । धीरः॑ । अ॒मृतः॑ । स्व॒य॒म्ऽभूः । रसे॑न । तृ॒प्तः । न । कुतः॑ । च॒न । ऊनः॑ ।
तम् । ए॒व । वि॒द्वान् । न । बि॒भा॒य॒ । मृ॒त्योः । आ॒त्मान॑म् । धीर॑म् । अ॒जर॑म् । युवा॑नम् ॥ ४४ ॥

( ९ ) नवमं सूक्तम्

(१-२७) सप्तविंशत्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । शतौदना देवता । (१) प्रथमर्चस्त्रिष्टुप्, (२-११, १३-२४) द्वितीयादिदशानां त्रयोदश्यादिद्वादशानाञ्चानुष्टुप्, (१२) द्वादश्याः पथ्यापङ्क्तिः, (२५) पञ्चविंश्या द्व्युष्णिग्गर्भानुष्टुप्, (२६) षड्विंश्याः पञ्चपदा बृहत्यनुष्टुबुष्णिग्गर्भा जगती, (२७) सप्तविंश्याश्च पञ्चपदातिजागतानुष्टुब्गर्भा शक्वरी छन्दांसि ॥

अ॒घा॒य॒ताम॑पि॒ नह्या॒ मुखा॑नि स॒पत्ने॑षु॒ वज्र॑मर्पयै॒तम् ।
इन्द्रे॑ण द॒त्ता प्र॑थ॒मा श॒तौद॑ना भ्रातृव्य॒घ्नी यज॑मानस्य गा॒तुः ॥१॥

अ॒घ॒ऽय॒ताम् । अपि॑ । न॒ह्य॒ । मुखा॑नि । स॒ऽपत्ने॑षु । वज्र॑म् । अ॒र्प॒य॒ । ए॒तम् ।
इन्द्रे॑ण । द॒त्ता । प्र॒थ॒मा । श॒तऽओ॑दना । भ्रा॒तृ॒व्य॒ऽघ्नी । यज॑मानस्य । गा॒तुः ॥ १ ॥

**X.8.41** As if with something nobler than the Gāyatrī, He strode forth into the immortality. They, who harmonize Sāman with Sāman - where was that unborn seen ?

**X.8.42** He the root of riches, the acquirer of treasure, illumines by his functions all forms and figures; the divine impeller, like the bounties whose law is truth, stands like the Supreme Lord, the Lord of resplendence is the battle for wealth and prosperity. (Also Ṛg. X.139.3)

**X.8.43** There is a lotus having nine orfices and wrapped with three strands. Therein abides a mighty being having soul; verily the knowers of true knowledge know that.

**X.8.44** Free from desire, self-possessed, immortal, self-existing, contented with bliss and lacking nothing in any respect (is he): knowing him alone, the self-possessed, undecaying and ever-young self, let one never have any fear of death.

### Śataudanā (Hundred Rice Dishes)

**X.9.1** May you bind the mouths of those, who intend to commit sin; may you hurl this adamantine weapon upon the rivals. The Śataudana (worth a hundred measures of rice) cow, first given by the resplendent Lord, is destroyer of rivals of the worshipful sacrificer.

वेदिष्टे चर्म भवतु बर्हिर्लोमानि यानि ते ।
एषा त्वा रशनाग्रभीद्ग्रावा त्वैषोधि नृत्यतु ॥२॥
बालास्ते प्रोक्षणीः सन्तु जिह्वा सं मार्ष्ट्वघ्न्ये ।
शुद्धा त्वं यज्ञिया भूत्वा दिवं प्रेहि शतौदने ॥३॥
यः शतौदनां पचति कामप्रेण स कल्पते ।
प्रीता ह्यस्यर्त्विजः सर्वे यन्ति यथायथम् ॥४॥
स स्वर्गमा रोहति यत्रादस्त्रिदिवं दिवः ।
अपूपनाभिं कृत्वा यो ददाति शतौदनाम् ॥५॥
स तांल्लोकान्त्समाप्नोति ये दिव्या ये च पार्थिवाः ।
हिरण्यज्योतिषं कृत्वा यो ददाति शतौदनाम् ॥६॥
ये ते देवि शमितारः पक्तारो ये च ते जनाः ।
ते त्वा सर्वे गोप्स्यन्ति मैभ्यो भैषीः शतौदने ॥७॥

वेदिः । ते । चर्म । भवतु । बर्हिः । लोमानि । यानि । ते ।
एषा । त्वा । रशना । अग्रभीत् । ग्रावा । त्वा । एषः । अधि । नृत्यतु ॥ २ ॥

बालाः । ते । प्रऽउक्षणीः । सन्तु । जिह्वा । सम् । मार्ष्टु । अघ्न्ये ।
शुद्धा । त्वम् । यज्ञिया । भूत्वा । दिवम् । प्र । इहि । शतऽओदने ॥ ३ ॥

यः । शतऽओदनाम् । पचति । कामऽप्रेण । सः । कल्पते ।
प्रीताः । हि । अस्य । ऋत्विजः । सर्वे । यन्ति । यथाऽयथम् ॥ ४ ॥

सः । स्वःऽगम् । आ । रोहति । यत्र । अदः । त्रिऽदिवम् । दिवः ।
अपूपऽनाभिम् । कृत्वा । यः । ददाति । शतऽओदनाम् । ५ ॥

सः । तान् । लोकान् । सम् । आप्नोति । ये । दिव्याः । ये । च । पार्थिवाः ।
हिरण्यऽज्योतिषम् । कृत्वा । यः । ददाति । शतऽओदनाम् ॥ ६ ॥

ये । ते । देवि । शमितारः । पक्तारः । ये । च । ते । जनाः ।
ते । त्वा । सर्वे । गोप्स्यन्ति । मा । एभ्यः । भैषीः । शतऽओदने ॥ ७ ॥

**X.9.2** O cow, may your skin (carma) be the altar; may the short hairs (loma), that are yours, be the sacred grass. This girdle (raśanā) holds you fast. May the cloud dance above you.

**X.9.3** May your tail-hair (bālaḥ) be the water-sprinkless (prokṣaṇī); O inviolable (cow), may your tongue cleanse you. Becoming clean and worthy of worship, O Śataudana, may you go to heaven.

**X.9.4** He, who brings a Śataudana to maturity, he gets all his desires fulfilled. All his priests (ṛtvijaḥ), being pleased, behave properly.

**X.9.5** He, who gives away a Śataudana with cakes (apūpa) ascends to heaven, where that third height (tridiva) of the sky lies.

**X.9.6** He obtains those worlds, that are celestial and also that are terrestrial - he, who gives away a Śataudana, made bright with gold (kṛtvā). (kṛtvā = fee paid in gold to priests),

**X.9.7** O divine one, they, who keep you calm, and who bring you to maturity, all of then will protect you well. O Śataudana, be not afraid of them.

वसवस्त्वा दक्षिणत उत्तरान्मरुतस्त्वा ।
आदित्याः पश्चाद्गोप्स्यन्ति साग्निष्टोममति द्रव ॥८॥
देवाः पितरो मनुष्या गन्धर्वाप्सरसश्च ये ।
ते त्वा सर्वे गोप्स्यन्ति सातिरात्रमति द्रव ॥९॥
अन्तरिक्षं दिवं भूमिमादित्यान्मरुतो दिशः ।
लोकान्त्स सर्वानाप्नोति यो ददाति शतौदनाम् ॥१०॥
घृतं प्रोक्षन्ती सुभगा देवी देवान्गमिष्यति ।
पक्तारमघ्न्ये मा हिंसीर्दिवं प्रेहि शतौदने ॥११॥
ये देवा दिविषदो अन्तरिक्षसदश्च ये ये चेमे भूम्यामधि ।
तेभ्यस्त्वं धुक्ष्व सर्वदा क्षीरं सर्पिरथो मधु ॥१२॥
यत्ते शिरो यत्ते मुखं यौ कर्णौ ये च ते हनू ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पिरथो मधु ॥१३॥

वसवः । त्वा । दक्षिणतः । उत्तरात् । मरुतः । त्वा ।
आदित्याः । पश्चात् । गोप्स्यन्ति । सा । अग्निऽस्तोमम् । अति । द्रव ॥ ८ ॥
देवाः । पितरः । मनुष्याः । गन्धर्वऽअप्सरसः । च । ये ।
ते । त्वा । सर्वे । गोप्स्यन्ति । सा । अतिऽरात्रम् । अति । द्रव ॥ ९ ॥
अन्तरिक्षम् । दिवम् । भूमिम् । आदित्यान् । मरुतः । दिशः ।
लोकान् । सः । सर्वान् । आप्नोति । यः । ददाति । शतऽओदनाम् ॥ १० ॥
घृतम् । प्रऽउक्षन्ती । सुऽभगा । देवी । देवान् । गमिष्यति ।
पक्तारम् । अघ्न्ये । मा । हिंसीः । दिवम् । प्र । इहि । शतऽओदने ॥ ११ ॥
ये । देवाः । दिविऽसदः । अन्तरिक्षऽसदः । च । ये । ये । च । इमे । भूम्याम् । अधि ।
तेभ्यः । त्वम् । धुक्ष्व । सर्वदा । क्षीरम् । सर्पिः । अथो इति । मधु ॥ १२ ॥
यत् । ते । शिरः । यत् । ते । मुखम् । यौ । कर्णौ । ये इति । च । ते । हनू इति ।
आमिक्षाम् । दुह्रताम् । दात्रे । क्षीरम् । सर्पिः । अथो इति । मधु ॥ १३ ॥

**X.9.8** From the south the young sages (vasavaḥ), from the north the brave soldiers (maruts), and from the west the old sages (ādityāḥ) will guard you. As such, may you excel even the Agniṣṭoma (the fire sacrifice).

**X.9.9** The enlightened ones, the elders; and men, and also the gandharvas (sustainers of earth) and apsarasas (they who move in waters) all of them will guard you. As such, may excel even the Ātirātra (the night-long or whole night sacrifice).

**X.9.10** He, who gives away a Śātaudana, obtains all the worlds - the midspace, the sky, the earth, the suns, the cloud-bearing winds, and the quarters.

**X.9.11** Sprinkling purified butter, the blessed, divine one will go to the enlightened ones. O Śataudana, may you not harm him, who has brought you to maturity. May you go to heaven.

**X.9.12** The enlightened ones, who dwell in the sky, who dwell in the midspace, and those, who dwell on earth - for them may you always yield milk, melted butter and honey as well.

**X.9.13** May your this head, your this mouth, these two ears and your these two jaws, yield to your donor mingled curd (āmikṣā), milk, melted butter, and honey as well.

यौ त ओष्ठौ ये नासिके ये शृङ्गे ये च तेक्षिणी ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पिरथो मधु ॥१४॥
यत्ते क्लोमा यद्धृदयं पुरीतत्सहकण्ठिका ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पिरथो मधु ॥१५॥
यत्ते यकृद्ये मतस्ने यदान्त्रं याश्च ते गुदाः ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पिरथो मधु ॥१६॥
यस्ते प्लाशिर्यो वनिष्ठुर्यौ कुक्षी यच्च चर्म ते ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पिरथो मधु ॥१७॥
यत्ते मज्जा यदस्थि यन्मांसं यच्च लोहितम् ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पिरथो मधु ॥१८॥
यौ ते बाहू ये दोषणी यावंसौ या च ते ककुत् ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पिरथो मधु ॥१९॥
यास्ते ग्रीवा ये स्कन्धा याः पृष्टीर्याश्च पर्शवः ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पिरथो मधु ॥२०॥

यौ । ते । ओष्ठौ । ये इति । नासिके इति । ये इति । शृङ्गे इति । ये इति । च । ते । अक्षिणी इति । आमिक्षाम् । ० ॥ १४ ॥

यत् । ते । क्लोमा । यत् । हृदयम् । पुरिऽतत् । सहऽकण्ठिका । आमिक्षाम् ।०॥१५॥

यत् । ते । यकृत् । ये इति । मतस्ने इति । यत् । आन्त्रम् । याः । च । ते । गुदाः । आमिक्षाम् ।०।

यः । ते । प्लाशिः । यः । वनिष्ठुः । यौ । कुक्षी इति । यत् । च । चर्म । ते । आमिक्षाम् ।०।

यत् । ते । मज्जा । यत् । अस्थि । यत् । मांसम् । यत् । च । लोहितम् । आमिक्षाम् ।०॥

यौ । ते । बाहू इति । ये इति । दोषणी इति । यौ । अंसौ । या । च । ते । ककुत् । आमिक्षाम् ।०।

याः । ते । ग्रीवाः । ये । स्कन्धाः । याः । पृष्टीः । याः । च । पर्शवः । आमिक्षाम् ।०॥

**X.9.14** May your these two lips, these two nostrils, these two horns, your these two eyes, yield to your donor mingled curd, milk, melted butter and honey as well.

**X.9.15** May your these lungs (kloma), this heart, the pericardium (purītat) with the throat, (kanṭhikā), yield to your donor mingled curd, milk, melted butter and honey as well.

**X.9.16** May your this liver (Yakṛt), these two kidneys (matasnā), these entrails and your these intestines (antra), yield to your donor mingled curd, milk, melted butter and honey as well.

**X.9.17** May your this large intestine (plāśiḥ) this rectum (vaniṣṭhuḥ) these two paunches (kukṣī) and your this skin, yield to your donor mingled curd, milk, melted butter and honey as well.

**X.9.18** May your this marrow (majjā), this bone (asthi), this flesh (māṅsa) and this blood (lohita), yield to your donor mingled curd, milk, melted butter and honey as well.

**X.9.19** May your these two arms (bāhū) or fore-legs, these two shanks, these two shoulders and your this humps, yield mingled curd, milk, melted butter and honey as well. (Bāhū = fore-legs; doṣaṇī = shanks ; kakut = hump ; aṅsau = two shoulders)

**X.9.20** May your these neck-bones, these shoulder-bones, these side-bones and these ribs, yield to your donor mingled curd, milk, melted butter, and honey as well. (grīvā = neck bones; skandha = shoulder bone; pṛṣṭiḥ = side bones, parśavaḥ =ribs)

यौ त ऊरू अष्ठीवन्तौ ये श्रोणी या च ते भसत् ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पिरथो मधु ॥२१॥
यत्ते पुच्छं ये ते बाला यदूधो ये च ते स्तनाः ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पिरथो मधु ॥२२॥
यास्ते जङ्घा याः कुष्ठिका ऋच्छरा ये च ते शफाः ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पिरथो मधु ॥२३॥
यत्ते चर्म शतौदने यानि लोमान्यघ्न्ये ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पिरथो मधु ॥२४॥
क्रोडौ ते स्तां पुरोडाशावाज्येनाभिघारितौ ।
तौ पक्षौ देवि कृत्वा सा पक्तारं दिवं वह ॥२५॥
उलूखले मुसले यश्च चर्मणि यो वा शूर्पे तण्डुलः कणः ।
यं वा वातो मातरिश्वा पवमानो ममाथाग्निष्टद्धोता सुहुतं कृणोतु ॥२६॥

यौ । ते । ऊरू इति । अष्ठीवन्तौ । ये इति । श्रोणी इति । या । च । ते । भसत् । आमिक्षाम् ।०।

यत् । ते । पुच्छम् । ये । ते । बालाः । यत् । ऊधः । ये । च । ते । स्तनाः । आमिक्षाम् ।०।

याः । ते । जङ्घाः । याः । कुष्ठिकाः । ऋच्छराः । ये । च । ते । शफाः ।
आमिक्षाम् । दुह्रताम् । दात्रे । क्षीरम् । सर्पिः । अथो इति । मधु ॥ २३ ॥

यत् । ते । चर्म । शतऽओदने । यानि । लोमानि । अघ्न्ये ।
आमिक्षाम् । दुह्रताम् । दात्रे । क्षीरम् । सर्पिः । अथो इति । मधु ॥ २४ ॥

क्रोडौ । ते । स्ताम् । पुरोडाशौ । आज्येन । अभिऽघारितौ ।
तौ । पक्षौ । देवि । कृत्वा । सा । पक्तारम् । दिवम् । वह ॥ २५ ॥

उलूखले । मुसले । यः । च । चर्मणि । यः । वा । शूर्पे । तण्डुलः । कणः ।
यम् । वा । वातः । मातरिश्वा । पवमानः । ममाथ । अग्निः । तत् । होता । सुऽहुतम् । कृणोतु ॥२६॥

**X.9.21** May your these two thighs, the two knee-joints, these two hips and your this rump, yield to your donor mingled curd, milk, melted butter and honey as well.

**X.9.22** May your this tail, your these tail-tufts, this udder, and your these teats, yield to your donor mingled curd, milk, melted butter and honey as well.

**X.9.23** May your these shanks (part of the leg from ankle to knee), these dew-claws, these pasterns (part of the leg between the feet lock joint and the hoof) and your these hoofs, yield to your donor mingled curd, milk, melted butter and honey as well. (Ṛicharāḥ-pasterns).

**X.9.24** May your this hide, O Śataudana, and these hairs, O inviolable one, yield to your donor mingled curd, milk, melted butter and honey as well.

**X.9.25** May your breasts be the two sacrificial cakes smeared with purified butter. Making them your two wings, O blessed one, carry him, who has brought you to maturity, to heaven.

**X.9.26** The grain of rice, which has been in the mortar, or on the pastle, or on the hide, or which has been in the winnowing-basket, or which the purifier wind has shaken off, may the adorable Lord, the Cosmic sacrificer, make that ( grain of rice), a good offering. (ulūkhala = mortar; musala = pestle; carma = hide; śūrpa = winnowing-basket)

अपो देवीर्मधुमतीर्घृतश्चुतो ब्रह्मणां हस्तेषु प्रपृथक्सादयामि ।
यत्काम इदमभिषिञ्चामि वोहं तन्मे सर्वं सं पद्यतां वयं स्याम पतयो रयीणाम् ॥२७॥

अपः । देवीः । मधुऽमतीः । घृतऽश्चुतः । ब्रह्मणाम् । हस्तेषु । प्रऽपृथक् । सादयामि ।
यत्ऽकामः । इदम् । अभिऽसिञ्चामि । वः । अहम् । तत् । मे । सर्वम् । सम् । पद्यताम् ।
वयम् । स्याम । पतयः । रयीणाम् ॥ २७ ॥

## ( १० ) दशमं सूक्तम्

(१–३४) चतुस्त्रिंशदृचस्यास्य सूक्तस्य कश्यप ऋषिः । वशा देवता । (१) प्रथमर्चः ककुम्मत्यनुष्टुप्, (२–४, ७, ९, ११–२२, २५, २८, ३०, ३३–३४) द्वितीयादितृचस्य सप्तमीनवम्योरेकादश्यादिद्वादशानां पञ्चविंश्यष्टाविंशी-त्रिंशीत्रयस्त्रिंशीचतुस्त्रिंशीनाञ्चानुष्टुप्, (५) पञ्चम्याः पञ्चपदातिजागतानुष्टुब्गर्भा स्कन्धोग्रीवी बृहती, (६, ८, १०) षष्ठयष्टमीदशमीनां विराडनुष्टुप्, (२३) त्रयोविंश्या बृहती, (२४) चतुर्विंश्या उपरिष्टाद्बृहती, (२६) षड्विंश्या आस्तारपङ्क्तिः, (२७) सप्तविंश्याः शङ्कुमत्यनुष्टुप्, (२९) एकोनत्रिंश्यास्त्रिपदा विराड्गायत्री, (३१) एकत्रिंश्या उष्णिग्गर्भानुष्टुप्, (३२) द्वात्रिंश्याश्च विराट्पथ्याबृहती छन्दांसि ॥

नमस्ते जायमानायै जातायां उत ते नमः ।
बालेभ्यः शफेभ्यो रूपायाघ्न्ये ते नमः ॥१॥
यो विद्यात्सप्त प्रवतः सप्त विद्यात्परावतः ।
शिरो यज्ञस्य यो विद्यात्स वशां प्रति गृह्णीयात् ॥२॥
वेदाहं सप्त प्रवतः सप्त वेद परावतः ।
शिरो यज्ञस्याहं वेद सोमं चास्यां विचक्षणम् ॥३॥
यया द्यौर्यया पृथिवी ययापो गुपिता इमाः ।
वशां सहस्रधारां ब्रह्मणाच्छावदामसि ॥४॥

नमः । ते । जायमानायै । जातायै । उत । ते । नमः ।
बालेभ्यः । शफेभ्यः । रूपाय । अघ्न्ये । ते । नमः ॥ १ ॥

यः । विद्यात् । सप्त । प्रऽवतः । सप्त । विद्यात् । पराऽवतः ।
शिरः । यज्ञस्य । यः । विद्यात् । सः । वशाम् । प्रति । गृह्णीयात् ॥ २ ॥

वेद । अहम् । सप्त । प्रऽवतः । सप्त । वेद । पराऽवतः ।
शिरः । यज्ञस्य । अहम् । वेद । सोमम् । च । अस्याम् । विऽचक्षणम् ॥ ३ ॥

यया । द्यौः । यया । पृथिवी । यया । आपः । गुपिताः । इमाः ।
वशाम् । सहस्रऽधाराम् । ब्रह्मणा । अच्छऽआवदामसि ॥ ४ ॥

**X.9.27** These divine waters, rich in sweetness and dripping melted butter, I place separately in the hands of the intellectual persons (brahmaṇām). The desire, with which I sprinkle you may all that be fulfilled completely. May we become the masters of the riches.

## Vaśā (praise of cosmic cow)

**X.10.1** O inviolable (cosmic cow), our homage be to you while being born; homage be to you also when you have been born. Homage be to your hair (bāla), hoofs (śapha) and shape (rūpa).

**X.10.2** Whoever knows the seven heights and knows the seven distances, whoever knows the summit of the sacrifice, let him accept the vaśā (cosmic cow).

**X.10.3** I know the seven heights; I know the seven distances; I know the summit of the sacrifice; also I know the bliss shining in her.

**X.10.4** By whom the heaven, by whom the earth, by whom these waters are well preserved, that vaśā (cosmic cow), yielding a thousand streams, we call here with our prayer.

शतं कंसाः शतं दोग्धारः शतं गोप्तारो अधि पृष्ठे अस्याः ।
ये देवास्तस्यां प्राणन्ति ते वशां विदुरेकधा ॥५॥
यज्ञपदीराक्षीरा स्वधाप्राणा महीलुका ।
वशा पर्जन्यपत्नी देवाँ अप्येति ब्रह्मणा ॥६॥
अनु त्वाग्निः प्राविशदनु सोमो वशे त्वा ।
ऊधस्ते भद्रे पर्जन्यो विद्युतस्ते स्तना वशे ॥७॥
अपस्त्वं धुक्षे प्रथमा उर्वरा अपरा वशे ।
तृतीयं राष्ट्रं धुक्षेऽन्नं क्षीरं वशे त्वम् ॥८॥
यदादित्यैर्हूयमानोपातिष्ठ ऋतावरि ।
इन्द्रः सहस्रं पात्रान्त्सोमं त्वापाययद्वशे ॥९॥
यदनूचीन्द्रमैरात्त्व ऋषभोऽह्वयत् ।
तस्मात्ते वृत्रहा पयः क्षीरं क्रुद्धोऽहरद्वशे ॥१०॥

शतम् । कंसाः । शतम् । दोग्धारः । शतम् । गोप्तारः । अधि । पृष्ठे । अस्याः
ये । देवाः । तस्याम् । प्राणन्ति । ते । वशाम् । विदुः । एकऽधा ॥ ५ ॥
यज्ञऽपदी । इराऽक्षीरा । स्वधाऽप्राणा । महीलुका ।
वशा । पर्जन्यऽपत्नी । देवान् । अपि । एति । ब्रह्मणा ॥ ६ ॥
अनु । त्वा । अग्निः । प्र । अविशत् । अनु । सोमः । वशे । त्वा ।
ऊधः । ते । भद्रे । पर्जन्यः । विऽद्युतः । ते । स्तनाः । वशे ॥ ७ ॥
अपः । त्वम् । धुक्षे । प्रथमाः । उर्वराः । अपराः । वशे ।
तृतीयम् । राष्ट्रम् । धुक्षे । अन्नम् । क्षीरम् । वशे । त्वम् ॥ ८ ॥
यत् । आदित्यैः । हूयमाना । उपऽअतिष्ठः । ऋतऽवरि ।
इन्द्रः । सहस्रम् । पात्रान् । सोमम् । त्वा । अपाययत् । वशे ॥ ९ ॥
यत् । अनूची । इन्द्रम् । ऐः । आत् । त्वा । ऋषभः । अह्वयत् ।
तस्मात् । ते । वृत्रऽहा । पयः । क्षीरम् । क्रुद्धः । अहरत् । वशे ॥ १० ॥

**X.10.5** A hundred milking vessels, a hundred milkers, a hundred defenders are there to back her. Even the enlightened ones, who breathe within her, know her only one aspect.

**X.10.6** With sacrifice as her feet, with food as her milk, with sustenance as her breath, famous all over earth, the Vaśā, the wife of the rain-cloud, excels even the enlightened ones with sacred knowledge.

**X.10.7** O Vaśā, the fire divine has entered you; the devotional bliss (or Soma the curative principle) has entered you. The rain-cloud is your udder, O blessed one; O Vaśā, the lightnings are your teats (stanāḥ).

**X.10.8** O Vaśā, first you yield waters as your milk; secondly, the fertile lands; thirdly, O Vaśā, you yield kingdom, food and milk.

**X.10.9** When being invoked by the old sages, you approach, then the resplendent one (Indra) makes you drink a thousand bowls of Soma (the cure juice).

**X.10.10** When, favourably inclined, you approached the resplendent Lord, the bull called you. Angered at this, the slayer of the nescience (vṛtrahā) took your strength, the milk, away.

यत्ते क्रुद्धो धनपतिरा क्षीरमहरद्वशे ।
इदं तदद्य नाकस्त्रिषु पात्रेषु रक्षति ॥११॥
त्रिषु पात्रेषु तं सोममा देव्यहरद्वशा ।
अथर्वा यत्र दीक्षितो बर्हिष्यास्त हिरण्यये ॥१२॥
सं हि सोमेनागत समु सर्वेण पद्वता ।
वशा समुद्रमध्यष्ठाद्गन्धर्वैः कलिभिः सह ॥१३॥
सं हि वातेनागत समु सर्वैः पतत्रिभिः ।
वशा समुद्रे प्रानृत्यदृचः सामानि बिभ्रती ॥१४॥
सं हि सूर्येणागत समु सर्वेण चक्षुषा ।
वशा समुद्रमत्यख्यद्भद्रा ज्योतींषि बिभ्रती ॥१५॥
अभीवृता हिरण्येन यदतिष्ठ ऋतावरि ।
अश्वः समुद्रो भूत्वाध्यस्कन्दद्वशे त्वा ॥१६॥

यत् । ते । क्रुद्धः । धनऽपतिः । आ । क्षीरम् । अहरत् । वशे ।
इदम् । तत् । अद्य । नाकः । त्रिषु । पात्रेषु । रक्षति ॥ ११ ॥

त्रिषु । पात्रेषु । तम् । सोमम् । आ । देवी । अहरत् । वशा ।
अथर्वा । यत्र । दीक्षितः । बर्हिषि । आस्त । हिरण्यये ॥ १२ ॥

सम् । हि । सोमेन । अगत । सम् । ऊं इति । सर्वेण । पत्ऽवता ।
वशा । समुद्रम् । अधि । अस्थात् । गन्धर्वैः । कलिऽभिः । सह ॥ १३ ॥

सम् । हि । वातेन । अगत । सम् । ऊं इति । सर्वैः । पतत्रिऽभिः ।
वशा । समुद्रे । प्र । अनृत्यत् । ऋचः । सामानि । बिभ्रती ॥ १४ ॥

सम् । हि । सूर्येण । अगत । सम् । ऊं इति । सर्वेण । चक्षुषा ।
वशा । समुद्रम् । अति । अख्यत् । भद्रा । ज्योतींषि । बिभ्रती ॥ १५ ॥

अभिऽवृता । हिरण्येन । यत् । अतिष्ठः । ऋतऽवरि ।
अश्वः । समुद्रः । भूत्वा । अधि । अस्कन्दत् । वशे । त्वा ॥ १६ ॥

**X.10.11** What milk the angry Lord of riches took away from you, O Vaśā, that same (milk) the sorrowless world preserves even today in three vessels (triṣu pātreṣu).

**X.10.12** That Soma (the cure-juice) the divine Vaśā carrys there, where the unflinching seeker, properly consecrated, sits upon the golden sacred grass (hiraṇya barhiṣi).

**X,10.13** United is she with Soma (the cure-juice), united also with all the footed creatures; the Vaśā stands over the ocean together with the sustainers of earth (gandharvas) full of strife (kali-ībhiḥ).

**X.10.14** United is she with the wind, united also all the winged creatures; bearing Ṛk verses and the Sāmans (the songs) the Vaśā dances upon the ocean.

**X.10.15** United is she with the Sun, united also with all, who see; bearing lights the benign Vaśā looks beyond the Ocean.

**X.10.16** O fosterer of righteousness, decked with gold, when you stand there, the ocean, turning into a horse, covers you, O Vaśā.

तद्भद्राः समगच्छन्त वशा देष्ट्र्यथो स्वधा ।
अथर्वा यत्र दीक्षितो बर्हिष्यास्त हिरण्यये ॥१७॥
वशा माता राजन्यस्य वशा माता स्वधे तव ।
वशाया यज्ञ आयुधं ततश्चित्तमजायत ॥१८॥
ऊर्ध्वो बिन्दुरुदचरद्ब्रह्मणः ककुदादधि ।
ततस्त्वं जज्ञिषे वशे ततो होताजायत ॥१९॥
आस्नस्ते गाथा अभवन्नुष्णिहाभ्यो बलं वशे ।
पाजस्याज्जज्ञे यज्ञ स्तनेभ्यो रश्मयस्तव ॥२०॥
ईर्माभ्यामयनं जातं सक्थिभ्यां च वशे तव ।
आन्त्रेभ्यो जज्ञिरे अत्रा उदरादधि वीरुधः ॥२१॥
यदुदरं वरुणस्यानुप्राविशथा वशे ।
ततस्त्वा ब्रह्मोदह्वयत्स हि नेत्रमवेत्तव ॥२२॥

तत् । भद्राः । सम् । अगच्छन्त । वशा । देष्ट्री । अथो इति । स्वधा ।
अथर्वा । यत्र । दीक्षितः । बर्हिषि । आस्त । हिरण्यये ॥ १७ ॥

वशा । माता । राजन्यस्य । वशा । माता । स्वधे । तव ।
वशायाः । यज्ञे । आयुधम् । ततः । चित्तम् । अजायत ॥ १८ ॥

ऊर्ध्वः । बिन्दुः । उत् । अचरत् । ब्रह्मणः । ककुदात् । अधि ।
ततः । त्वम् । जज्ञिषे । वशे । ततः । होता । अजायत ॥ १९ ॥

आस्नः । ते । गाथाः । अभवन् । उष्णिहाभ्यः । बलम् । वशे ।
पाजस्यात् । जज्ञे । यज्ञः । स्तनेभ्यः । रश्मयः । तव ॥ २० ॥

ईर्माभ्याम् । अयनम् । जातम् । सक्थिऽभ्याम् । च । वशे । तव ।
आन्त्रेभ्यः । जज्ञिरे । अत्राः । उदरात् । अधि । वीरुधः ॥ २१ ॥

यत् । उदरम् । वरुणस्य । अनुऽप्राविशथाः । वशे ।
ततः । त्वा । ब्रह्मा । उत् । अह्वयत् । सः । हि । नेत्रम् । अवेत् । तव ॥ २२ ॥

**X.10.17** The auspicious ones, the vaśā, the directing deity and also the sustenance, come and meet there, where the unflinching seeker, properly consecrated, sits upon the golden sacred grass.

**X.10.18** The Vaśā is the mother of the prince; the Vaśā is your mother, O sustenance. The weapon of the Vaśā is the sacrifice; out of it springs forth the thought.

**X.10.19** One drop rose high upwards from the summit of the Lord supreme. From that, O Vaśā, you were born. Therefrom was born the hotṛ priest.

**X.10.20** From your mouth the gāthās (legendary verses) have come; from your neck bones has come the strength; from your belly the sacrifice is born, and from your teats the rays (raśmi).

**X.10.21** From your two fore-legs and two hind legs the motion (ayana) is born; from your entrails the devourer germs (atrā) are born and from your belly the plants have sprung forth. (earmābhyām = from two fore-legs; sakthi bhyam = two hind legs).

**X.10.22** O Vaśā, when you entered into the belly of the venerable Lord (Varuṇa) then the seeker (brahma) of the Lord supreme called you up. Surely he knew your guidance (netram avet tava).

सर्वे गर्भादवेपन्त जायमानादसूस्वः ।
ससूव हि तामाहुर्वशेति ब्रह्मभिः क्लृप्तः स ह्यस्या बन्धुः ॥२३॥
युध एकः सं सृजति यो अस्या एक इद्वशी ।
तरांसि यज्ञा अभवन्तरसां चक्षुरभवद्वशा ॥२४॥
वशा यज्ञं प्रत्यगृह्णाद्वशा सूर्यमधारयत् ।
वशायामन्तरविशदोदनो ब्रह्मणा सह ॥२५॥
वशामेवामृतमाहुर्वशां मृत्युमुपासते ।
वशेदं सर्वमभवद्देवा मनुष्या३ असुराः पितर ऋषयः ॥२६॥
य एवं विद्यात्स वशां प्रति गृह्णीयात् ।
तथा हि यज्ञः सर्वपाद्दुहे दात्रेनपस्फुरन् ॥२७॥
तिस्रो जिह्वा वरुणस्यान्तर्दीद्यत्यासनि ।
तासां या मध्ये राजति सा वशा दुष्प्रतिग्रहा ॥२८॥

सर्वे । गर्भात् । अवेपन्त । जायमानात् । असूस्वः ।
ससूव । हि । ताम् । आहुः । वशा । इति । ब्रह्मऽभिः । क्लृप्तः । सः । हि । अस्याः । बन्धुः ॥ २३ ॥
युधः । एकः । सम् । सृजति । यः । अस्याः । एकः । इत् । वशी ।
तरांसि । यज्ञाः । अभवन् । तरसाम् । चक्षुः । अभवत् । वशा ॥ २४ ॥
वशा । यज्ञम् । प्रति । अगृह्णात् वशा । सूर्यम् । अधारयत् ।
वशायाम् । अन्तः । अविशत् । ओदनः । ब्रह्मणा । सह ॥ २५ ॥
वशाम् । एव । अमृतम् । आहुः । वशाम् । मृत्युम् । उप । आसते ।
वशा । इदम् । सर्वम् । अभवत् । देवाः । मनुष्याः । असुराः । पितरः । ऋषयः ॥ २६ ॥
यः । एवम् । विद्यात् । सः । वशाम् । प्रति । गृह्णीयात् ।
तथा । हि । यज्ञः । सर्वऽपात् । दुहे । दात्रे । अनपऽस्फुरन् ॥ २७ ॥
तिस्रः । जिह्वाः । वरुणस्य । अन्तः । दीद्यति । आसनि ।
तासाम् । या । मध्ये । राजति । सा । वशा । दुःऽप्रतिग्रहा ॥ २८ ॥

**X.10.23** All trembled at the fetus being born of her, who never gives birth. Who has, thus, given birth, her they call the Vaśā. Formed by scientists (brahmabhiḥ) he, surely, is her kin (bandhuḥ).

**X.10.24** He, the one, assembles the warriors, who is, verily, her sole controller. The sacrifices turn into energies; the Vaśā becomes the eye of the energies.

**X.10.25** The Vaṣā (Cosmic Cow) accepts the sacrifice; Vaśā sustains Sun; within the Vaśā has entered the cloud along with the Lord supreme.

**X.10.26** It is only the Vaśā, what they call immortality (amṛtam), they worship vaśā as death (mṛitu); Vaśā has become all this - the enlightened ones (devāḥ), the mortal men (manusyāḥ), the life-destroyers (asurāḥ), the elders (pitaraḥ) and the seers (ṛṣayaḥ)

**X.10.27** Whosoever knows thus, let him take hold of the Vaśā. Thus the all-footed (perfect in every respect) sacrifice pours out milk for the donor without any resistance.

**X.10.28** Within the mouth of the venerable Lord (Varuṇa), there are three tongues (tisraḥ jihvāḥ) shining bright. The one, which shines in the middle of them, is the Vaśā, difficult to take hold of.

चतुर्धा रेतो अभवद्वशायाः ।
आपस्तुरीयममृतं तुरीयं यज्ञस्तुरीयं पशवस्तुरीयम् ॥२९॥
वशा द्यौर्वशा पृथिवी वशा विष्णुः प्रजापतिः ।
वशाया दुग्धमपिबन्त्साध्या वसवश्च ये ॥३०॥
वशाया दुग्धं पीत्वा साध्या वसवश्च ये ।
ते वै ब्रध्नस्य विष्टपि पयो अस्या उपासते ॥३१॥
सोममेनामेके दुह्रे घृतमेक उपासते ।
य एवं विदुषे वशां ददुस्ते गतास्त्रिदिवं दिवः ॥३२॥
ब्राह्मणेभ्यो वशां दत्त्वा सर्वांल्लोकान्त्समश्नुते ।
ऋतं ह्यस्यामार्पितमपि ब्रह्माथो तपः ॥३३॥
वशां देवा उप जीवन्ति वशां मनुष्या उत ।
वशेदं सर्वमभवद्यावत्सूर्यो विपश्यति ॥३४॥

चतुःऽधा । रेतः । अभवत् । वशायाः ।
आपः । तुरीयम । अमृतम् । तुरीयम् । यज्ञः । तुरीयम् । पशवः । तुरीयम् ॥ २९ ॥
वशा । द्यौः । वशा । पृथिवी । वशा । विष्णुः । प्रजाऽपतिः ।
वशायाः । दुग्धम् । अपिबन् । साध्याः । वसवः । च । ये ॥ ३० ॥
वशायाः । दुग्धम् । पीत्वा । साध्याः । वसवः । च । ये ।
ते । वै । ब्रध्नस्य । विष्टपि । पयः । अस्याः । उप । आसते ॥ ३१ ॥
सोमम् । एनाम् । एके । दुह्रे । घृतम् । एके । उप । आसते ।
ये । एवम् । विदुषे । वशाम् । ददुः । ते । गताः । त्रिऽदिवम् । दिवः ॥ ३२ ॥
ब्राह्मणेभ्यः । वशाम् । दत्त्वा । सर्वान् । लोकान् । सम् । अश्नुते ।
ऋतम् । हि । अस्याम् । आर्पितम् । अपि । ब्रह्म । अथो इति । तपः ॥ ३३ ॥
वशाम् । देवाः । उप । जीवन्ति । वशाम् । मनुष्याः । उत ।
वशा । इदम् । सर्वम् । अभवत् । यावत् । सूर्यः । विऽपश्यति ॥ ३४ ॥

॥ इति दशमं काण्डम् ॥

[ दशमकाण्डे सूक्तानि १०, ऋचः ३५० ]

**X.10.29** The seed of the Vaśā got divided into four parts; one fourth are the waters (āpaḥ), one forth the immortality (amṛta), one fourth the sacrifice (yajña), and one fourth the animals (paśavaḥ).

**X.10.30** The Vaśā is heaven, the Vaśā is earth, the Vaśā is the omnipresent Lord (Viṣṇu), the Lord of creatures (Prajāpatih). They, the perfectible (sādhyāḥ) and the young sages (vasavaḥ), drink the milk which the Vaśā yields.

**X.10.31** They, the perfectible (sādhyāḥ) and the young sages (vasavaḥ) who have partaken of the milk of Vaśā, certainly long her milk even in the world of the Sun.

**X.10.32** Some milk devotional bliss out of her; some obtain fat (fertilizing power) from her. They, who give a cow to him who knows thus, go to the third, the most sacred of the heavens.

**X.10.33** By donating a cow to the intellectual persons, one wins all the worlds. Surely within her is set the righteousness (ṛta), the knowledge (brahma) and the penance (tapas) as well.

**X.10.34** On the Vaśā the enlightened ones (devāḥ) subsist, and also men (manuṣyāḥ). The Vaśā has become this all, as long and as far as the Sun over looks (vipaśyatī).



---

**Here ends Kāṇḍa X**
**Hymns 10, Verses 350**

---